र्वव्यापिनमात्मानं क्षीरे सर्पिरिवार्पितम्।
ात्मविद्यातपोमूलं तत् ब्रह्मोपनिषत्परम् तद्ब्रह्मोपनिषत्परम्॥ १६॥
इति श्वेताश्वतरोपनिषदि प्रथमोऽध्यायः॥

॥ अथ द्वितीयोऽध्यायः॥
ञ्जानः प्रथमं मनस्तत्त्वाय सविता धियः।

र्वव्यापिनमिति। क्षीरार्पितसर्पिस्समतया सर्वव्याप्तमात्मानं प्रत्यगात्म-
सा च ज्ञेयमुपनिषदां **परं** प्रतिपाद्यं तत् परं ब्रह्म विद्यादित्यर्थः। द्विर्व-
मध्यायसमाप्तिद्योतनार्थश्च। (१६)

इति प्रथमाध्यायप्रकाशिका॥

(२)

ात्मसंस्थपरमात्मप्रतीत्यौपयिकेन्द्रियनिग्रहरूपतपस्सिद्ध्यनुगुणं भगवत्प्रार्थ-
**युञ्जान** इति। धियः **सविता** प्रेरकः परमात्मा पृथिव्याः **अधि**

व्यापिनम् अन्तर्बहिश्च व्याप्तम् अणावात्मनि तद्धर्मभूतज्ञानविकासे च कार्त्स्न्येन
मुखगृहीतस्वाध्यायादिकमप्यावश्यकमिति सूच्यते **उपनिषत्पर**मिति। अत्र पूर्व-
प्रतीत्यनेनान्वयः सुवचः। पूर्वार्धमात्रस्य वा तथाऽन्वयं कृत्वा उत्तरार्धं प्रथमान्त-
वाक्यमित्यपि सुवचम्—अथापि मन्त्रभेदाद् वाक्यभेदो युक्त इति **विद्या**दिति

**चन**मिति। अत्र न प्रत्यध्यायं द्विर्वचनं श्रूयते। अध्यायसमाप्तिद्योतनार्थत्वे तदा-
वेत्—आदरार्थमित्यस्तु। आदरश्च प्रथमाध्यायोक्तस्यैवार्थस्य सर्वस्य विवरणमनन्त-
त इति अस्य सर्वसमासरूपत्वादिति भाव्यम्।

(२)

निर्मथनाभ्यासं प्रागुक्तमधिकृत्य वक्तुं द्वितीयाध्यायस्यारम्भः। अत्र **धीपदसवितृ-**
ात्, 'तदक्षरं तत् सवितुर्वरेण्य' मिति वक्ष्यमाणरीत्या गायत्रीमन्त्रस्यानुसंधापनं
तेन संध्योपासनादेर्योगोपयोगितया आवश्यकत्वं सूच्यते, " वर्णाश्रमाचारवता

**अग्निं ज्यो[1]तिर्निचाय्य पृथिव्या अध्याभवत्[2] ॥ १ ॥**

**युक्तेन मनसा वयं देवस्य सवितुः सवे ।**
**सुवर्गेयाय शक्त्या ॥ २ ॥**

**युक्त्वाय मनसा देवान् सुवर्यतो धिया दिवम् ।**

1. अग्नेर्ज्यो; अग्निज्यो. 2. आभरत्.

---

ऊर्ध्वमग्निं **ज्योतिः** अग्निरूपं ज्योतिः **निचाय्य** संपूज्य अग्निहोत्रादिक कृत्वा मनः **तत्त्वाय** साक्षात्काराय पृथिवी[1]निष्ठाग्निज्योतिस्सदृशस्वात्मनि तत्त्वसाक्षात्काराय **युञ्जानो** नियुञ्जानः **आभवत्** भवत्वित्यर्थः । [तत्त्वस परमात्मनि मनो नियुञ्जानो भवत्वित्यर्थः] ( १ )

**युक्तेनेति । सवितुः** प्रेरकस्य परमात्मनः **सवे** अनुज्ञायां स अनुज्ञयेति यावत् — **युक्तेन मनसा** आत्मप्रवणेन चेतसा युक्ता वयं स्वर्गशब्दितभगवल्लोकसाधनाय परमात्मनिदिध्यासनाख्यकर्मणे शक्त्य भवेमेत्यर्थः । ( २ )

'परमात्मा प्रणिपातमात्रेण कथमनुज्ञां प्रयच्छेत्' इत्याशङ्क्य भग भूतविष्वक्सेनाद्याचार्यप्रणामपूर्वकं भगवत्प्राप्तौ यतमानानामनुज्ञां प्रयच **युक्त्वायेति । सुवः** स्वर्गं लोकं भगवल्लोकं **यतः** गतान् **देवान्** पूर्वाचार्या **युक्त्वाय** — छन्दसि, 'क्त्वो यक्' इति यक् । मनसा युक्त्वाय म्येति यावत् — **दिवं** द्योतमानं निरतिशयबृहत्त्वयुक्तं परमात्मरूपं ज्योति

1. पृथिव्यादिनिष्ठाग्निज्योतिस्सदृशं ; ज्योतिस्सादृश्य. पा॰

---

**संपूज्येति** । अस्य परमात्मकर्तृकत्वबाधात् **साक्षात्कारायेति** जीवात्मककर्तृ मन्वयः कार्यः । एवञ्च मूले **निचाय्येति तत्त्वायेत्यत्रान्वेति** इति वक्तव्यम् । न च क्रियावाचि । तत् कथं क्रियानन्वये ल्यप् इति चेन्न — साक्षात्कारायेति क्रियार्थस्य अथवा निचाय्य साक्षात्कार्याय तत्त्वायेत्यध्याहारेण योजना । यद्वा **निचाय्येत्यस्य** प्रदर्श्येत्येवमर्थोऽस्तु । तच्च परमात्मकर्तृकमेवेति । पृथिवीनिष्ठाग्निज्योतिरित्यग्निहोत्रो 'अरण्यादिनिष्ठाग्नितुल्यतया प्राग्दर्शितस्वात्मनिष्ठपरमात्मज्योतिर्ग्रहणोपयोगित्वमस्या युक्त'मिति सूच्यत इत्याशयेन **सदृशे**त्यन्तविशेषणम् ।

**क्त्वो यक्** इति । यक आगमत्वात् [illegible]

**बृहज्ज्योतिः करिष्यतः सविता प्रसुवाति तान् ॥ ३ ॥**

**युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः**
**वि होता दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः ॥ ४**

---

ासनरूपज्ञानेन **करिष्यतः** विषयीकरिष्यतः — ध्यातुं प्रवृत्तानिति यावत् — **न्** मुमुक्षून् **सविता** प्रेरकः परमात्मा **प्रसुवाति** अनुजानातीत्यर्थः । [इति व ामहे इति शेषः ] । (३)

परमात्मनि मनोयोगः तत्समाराधनं[1] कर्म च, [2]केषाञ्चिदेव भवतीत्या ञ्जत इति । 'विप्रो विप्रत्वं गच्छते तत्त्वदर्शी' इत्युक्तरीत्या **विप्राः** तत्त्व ानः परमात्मनि मनः **नियुञ्जते** योजयन्ति । **धियः** ध्यानानि च योजयन्ति **स्य** — प्रा पूरणे — पूर्णस्य, **बृहतो** गुणैः बृहत्त्वाश्रयस्य **विपश्चितः** सर्वज्ञ **देवस्य** मह्या = भूम्या समेतस्य **देवस्य** श्रीभूमिसमेतस्य **सवितुः** प्रेरक **नावित्** — वयुनं ज्ञानम् । **वयुना**विदिति छान्दसो दीर्घः — तत्र ाश्यादिमहिमविदित्यर्थः । तदाश्रयः **एक इत्** एक एव **परिष्टुतिः** — ष्टुतीरित्यर्थः । छान्दसं ह्रस्वत्वम् । (परिचर्येति?) परिचर्या इति यावत् — ॥ ऋत्विग्भिः —, मन्त्रेणेति वाऽर्थः — **विदधे** कृतवानित्यर्थः ह्मस्वरूपविदेव तत्परिचर्याकारी, तेन कृतमेव भगवत्परिचरणं भगवत्प्रीण तीत्यर्थः । (४)

1. तत्साधनं. 2. युगपदेव. 3. तदाश्रयब्रह्ममहिमवित्त्वमेव भगवत्परिचरणमि' कपाठ इह । 4. ब्रह्मस्वरूपवित्परिचर्या एव तत्परिचर्या । तया कृतमेव पा०

---

ष्यत इति द्वितीयाबहुवचनेनान्वयः ।

योगिनामपि सर्वेषां भगवद्रतेनान्तरात्मना तत्परिचर्यैकपरस्य दौर्लभ्यं प्रदर्श्यते युञ्ज । **देवशब्दस्य** पतिपर्यायत्वाभावात् मह्या समेतो देवः महीदेव इति मध्यमपदलो पः । अत्र महीति पृथक्पदं मत्वा, **परिष्टुति**रित्यत्रापि छान्दसं दीर्घमप्रकल्प्य, मह : तत्स्थः सर्वोऽपि देवस्य परिष्टुतिः विभूतिः स्तवकरणार्हेति वा, देवस्य **परिष्टुति** ः **मही** महतीति वाऽर्थो भाव्येत । परंतु तदा वाक्यभेदः सोढव्यः । **विदध** इत्य

युजे वां ब्रह्म पूर्व्यं नमोभिर्विश्लोक एतु पथ्येव सूरेः ।
शृण्वन्तु विश्वे अमृतस्य पुत्रा आ ये धामानि दिव्यानि तस्थुः

अग्निर्यत्राभिमथ्यते वायुर्यत्राधिरुध्यते ।
सोमो यत्रातिरिच्यते तत्र संजायते मनः ॥ ६ ॥

सवित्रा प्रसवेन जुषेत ब्रह्म पूर्व्यम् ।
तत्र योनिं कृण्वसे न हि ते पूर्तिमक्षिपत् ॥ ७ ॥

---

**युजे वा**मिति । दिव्यस्थानस्थिताः सर्वे ब्रह्मपुत्राः मत्प्रार्थनां **सूरेः** नित्यसूरिकर्तृका स्तुतिपथादनपेतत्वेन **पथ्या** स्तुतिः । **वां पूर्व्य**मित्यर्थः । वचनव्यत्ययश्छान्दसः — सा[1] तादृशं ब्रह्म यथा प्राप्नो **युजे** योगाय — ब्रह्मप्राप्तये इति यावत् — मया कृतः **विश्लोकः** श्लोकः स्तोत्ररूपः **एतु** प्राप्नोतु । नित्यसूरिकृतां स्तुतिं यथा भगवान् एवमङ्गीकरोत्वित्यर्थः । ततश्च योगप्रवृत्तेः प्राक् भगवत्स्तुतिः कर्तव्येत्युक्तं भ

योगमारभमाणस्य शीतोष्णदेशः परिहर्तव्य इत्याह **अग्निरिति** । **मथ्यते** अभितो निवार्यते । **अधिरुध्यते** आधिक्येन रुध्यते । व वातीत्यर्थः । **सोम**शब्देन हिमं लक्ष्यते । अतिशयेन **रिच्यते** निरस्यते मनः प्रत्यक्प्रवणं जायत इत्यर्थः । ( ६ )

**सवित्रे**ति । एवं गुरुप्रणामभगवत्स्तुतिप्रसन्नेन सवित्रा कृतेन अनुज्ञया — तदनुज्ञातस्सन्निति यावत् — **पूर्व्यं** पूर्वपृष्टं (श्रेष्ठं) ब्रह्म सेवेत—ध्यायेदिति यावत् । **तत्र** परमात्मनि **योनिं** स्थानं—मनस इति **कृण्वसे** कुरुष्व । तथासति ते **पूर्तिं** मनोरथपूर्तिं तत् ब्रह्म **नाक्षिपत्** न न निरस्यतीत्यर्थः । लडर्थे लङ् । (७)

1. सः.

---

**वः पूर्व**मिति । पुत्रभूतयुष्मदपेक्षया पूर्वभूतमित्यर्थः । नित्यसूर्यपेक्षया ब्रह्मण तेषां तदनुत्पन्नत्वेऽपि तदधीनस्वरूपस्थितिप्रवृत्तिकत्वात् । **नमोभिः** प्रणामैः **विश्लोक एतु पथ्येव सूरेः** । असमर्थकर्तृकत्वादपथ्योऽपि श्लोकः सूरिकर्तृकप भावनीय इति नैच्यानुसंधानम् ।

देवपरिष्कृतिभूतायां मह्यां ध्यानोपयोगि स्थलमाह **अग्निरिति** ।

**तत्र योनिं कृण्वसे** इत्यस्य पूर्वमन्त्रोक्तदेशे स्थानं परिकल्पयेत्यर्थोऽपि एवञ्चास्य मन्त्रस्य पूर्वमन्त्रानन्तर्यं औचित्यम् ।

**त्रिरुन्नतं स्थाप्य समं शरीरं हृदीन्द्रियाणि मनसा संनिवेश्य ।**
**ब्रह्मोडुपेन प्रतरेत विद्वान् स्रोतांसि सर्वाणि भयावहानि ॥ ८ ॥**

**प्राणान् प्रपीड्येह स युक्तचेष्टः क्षीणे प्राणे नासिकयोच्छ्वसीत ।**
**दुष्टाश्वयुक्तमिव वाहमेनं विद्वान् मनो धारयेताप्रमत्तः ॥ ९ ॥**

**समे शुचौ शर्करावह्निवालुकाविवर्जिते शब्दजलाश(श्र)यादिभिः ।**
**मनोऽनुकूले न तु चक्षुपीडने गुहानिवाताश्रयणेन योजयेत् ॥ १० ॥**

---

योगदशेतिकर्तव्यतामाह **त्रिरुन्नत**मिति । उरःकण्ठशिरःप्रदेशेषून्नतम् समं शरीरं स्थापयित्वा सर्वाणीन्द्रियाणि हृदयकुहरे संनिवेश्य **ब्रह्मोडुपेन** क्षण[ब्रह्मस्वरूप]प्लवेन — ब्रह्मध्यानेनेत्यर्थः — सर्वाणि भयावहानि नाना-जन्मस्रोतांसि तरेदित्यर्थः । (८)

प्राणायामप्रकारमाह **प्राणा**निति । 'युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु' त्या मितायासः प्राणवायुं निरुध्य निरुद्धेषु अत्यन्तपीडापरिहाराय नासि-नं कुर्यात् । ततश्चावहितस्सन्, दुष्टाश्वयुक्तं रथं यथा सारथिः स्ववशं तथा मनोनिरोधज्ञो मनः स्ववशं कुर्यादित्यर्थः । (९)

योगानुष्ठानयोग्यं देशं विस्तरेणाह **सम** इति । निम्नोन्नतत्वादिरहिते परि-ऱ्पाषाणवह्निसिकता[2]रहिते वाद्य[3]ध्वनिजलाशयाद्यत्यन्तसामीप्यरहिते मनोनुकूले ाहेतुभूतौष्ण्यादि[4]रहिते गुहादिलक्षणनिवातदेशाश्रयणेन योगमनुतिष्ठे-। सूत्रितञ्चैतत्, "यत्रैकाग्रता तत्राविशेषात्" ।

तत्र हि, आसीनस्तिष्ठन् गच्छन् वोपासीत अविशेषादिति पूर्वपक्षे 'उच्यते — नः संभवात्" । आसीन एव उपासीत । तस्यैव उपासनस्य संभवात् ।

. प्राणादिविलक्षण. 2. वायु. 3. भूतोल्कादि. 4. पूर्वपक्षिते.

---

ोतांसि **सर्वाणि भयावहानी**ति योगविच्छेदकानां पापानामिव, आध्यात्मिकाद्य-नामपि ग्रहणम् ।

ावत्पर्यन्तेन अष्टाङ्गयोगे यमनियमौ यथायथं दर्शितावित्यपि ध्येयम् । यमो निषिद्ध-नियमो विहितानुष्ठानमिति संग्रहः । अथ प्राणायामप्रत्याहारौ प्रोच्येते **प्राणा**निति **वाहो** **रथः** ।

 ध्यानधारणासमाधिरूपो योगो देशविशेषोपदेशपूर्वमुच्यते **सम** इति । पूर्वम्, ' ति मन्त्रसंनिधावनुक्त्वा इह विस्तरेण देशव्युत्पादनं प्रत्याहारपर्यन्तापेक्षया योगार्थं न्वेषणमत्यावश्यकमिति ज्ञप्तये । **शब्दजलाशयादिभि**रित्यस्य मनोनुकूले इत्यत्रा-ः पूर्वस्मात् पदात् **विवर्जिते** इत्यस्य पूर्वभागविवर्जितस्यानुषङ्गः । **न चक्षुःपीडन**

**नीहारधूमार्कानिलानलानां खद्योतविद्युत्स्फटिकशशिनाम्**
**एतानि रूपाणि पुरस्सराणि ब्रह्मण्यभिव्यक्तिकराणि योगे**
**पृथ्व्यप्तेजोनिलखे समुत्थिते पञ्चात्मके योगगुणे प्रवृत्ते ।**
**न तस्य रोगो न जरा न मृत्युः प्राप्तस्य योगाग्निमयं शरीरम्**
**लघुत्वमारोग्यमलोलुपत्वं वर्णप्रसादं स्वरसौष्ठवञ्च ।**

---

तिष्ठतो गच्छतश्च यत्नसापेक्षत्वात्, शयानस्य निद्राप्रसक्तेश्च, उपासनस्य त्वाच्च एकाग्रचित्ततावश्यम्भावात्, चित्तैकाग्र्यस्य आसनसापेक्षत्वाच्चासीन ए "अचलत्वञ्चापेक्ष्य"। 'ध्यायतीव पृथिवी ध्यायतीवान्तरिक्ष' मित्यादिषु त्वधर्मेण [1]ध्यातृसाम्यव्यपदेशदर्शनात् ध्यातृनिश्चलत्वस्यापेक्षितत्वात् वि च आसिकामन्तरेणासंभवात् आसीन एव कुर्यात्। "स्मरन्ति च", ' सने युञ्ज्याद्योगमात्मविशुद्धये' इति। "यत्रैकाग्रता तत्राविशेषात्" शुचौ शर्करावह्निवालुकाविवर्जिते' इत्यविशेषेण एकाग्रतानुकूलदेशविशेष कीर्तनात् तेनैव [च] न्यायेन एकाग्रतानुकूल — [2]आसनस्यापेक्षितत्वमस्ती सीयत इति स्थितम्। प्रकृतमनुसरामः। (१०)

योगमभ्यस्यतो ब्रह्माभिव्यक्तिप्राचीनानि तच्चिह्नान्याह **नीहारे**ति। नीहारवत् स्फुरति, ततो धूमार्कानि (न) त्वाद्याकारतया स्फुरति। एवम्भूता णानि पूर्वप्रवृत्तान्यागामिब्रह्माभिव्यक्तिचिह्नानीत्यर्थः। (११)

योगाभ्यासस्य कायसिद्धिफलक[3]त्वमाह **पृथ्वी**ति। **गुणो** गुणनम योगाभ्यासे प्रवृत्ते सति योगमहिम्ना सत्त्वप्रचुरभूतारब्धे पाञ्चभौतिके शरीरे तादृशसर्वरोगादिदाह[5]समर्थत्वेनाग्निरूपेण योगेनारब्धशरीरयुक्तस्य पुंसो [सं]भवतीत्यर्थः। (१२)

**लघुत्वमिति स्पष्टोऽर्थः। (१३)**

1. वातु. 2. नुकूलसाधनस्य पा० नुकूलस्यासनस्य ? 3. कार्यसि
4. समुपस्थिते. 5. समर्थेन.

---

नीहारादिस्फूर्तिक्रमे उत्तरोत्तरं प्रसन्नताप्रकाशमानतयोरतिशयस्थितिर्भाव्या।

सात्त्विकादिभेदेन पार्थिवादिप्रकारभेदेन च विचित्राणामाहाराणां सेवनेन योगाभ्यासाहारबलादपि कायस्य विचित्ररूपः परिणामः संपद्यते। इदं फलञ्च, योगसि भवतीत्युच्यते पृथ्वीति। पञ्चात्मके देहे पृथिव्यादेरेकैकस्यापि योगाधीनो गुणातिश तीति ज्ञापनाय पृथ्व्यादीनां विविच्य निर्देशः।

**गन्धः शुभो मूत्रपुरीषमल्पं योगप्रवृत्तिं प्रथमां वदन्ति ॥ १३ ॥**

**यथैव बिम्बं मृदयोपलिप्तं तेजोमयं भ्राजते तत्सुधान्त( क्त? )म् ।**
**तद्वात्मतत्त्वं प्रसमीक्ष्य देही एकः कृतार्थो भवते वीतशोकः ॥ १४ ॥**

---

योगमभ्यस्यतो ब्रह्मोपलब्धिप्रकारं तत्फलञ्चाह **यथैवेति** । मृदाऽयसा वा
= निर्मितः प्रतिमाविशेषः सुधाविशेषान्त (विशेषाख्य (?) रञ्जकद्रव्य-
[ तेजोमय[1]तया दीप्यते । तद्वत् सुधाविशेषलिप्ततेजोमय[2]प्रतिमासमं दर्शन-
रध्यानेनोपलभ्य कश्चित् पुरुषधौरेयो निवृत्तसंसारगन्धः सिद्धार्थो भवती-
**तद्वेत्यत्र** वाशब्द इवार्थः । **तद्वत् सतत्त्वं प्रसमीक्ष्येति** पाठेऽप्यय-
। केचित्तु **सुधान्त**मिति मत्वा सुधौतमि[3]त्यर्थे सुधान्तमिति **शब्द** इत्यपि
( १४ )

तेजोरूप. 2. तेजोविशेष । 3. सुधातरित्यर्थे.

---

; वातपित्तश्लेष्माद्यात्मनि शरीरे कतमस्य भूतस्य गुणप्रकर्षात् कतमद् भवतीत्यपि
र्थम् ।

सिद्धिमता योगमविच्छिन्नमभ्यस्यता प्रथमतः शुद्धं स्वात्मतत्त्वं समीक्ष्यत इतीदं
यते **यथैवेति** । **सुधान्त**मित्यस्य सुधा अन्ते रञ्जकतया यस्य तदिति व्युत्पत्तिः ।
प्रतीतोऽर्थः — मृदादिनिर्मितं सुधया मसृणितं बिम्बं यथा तेजोमयं प्रकाशमान-
**सुधान्तमितिमत्वेति** । अत्र भाष्यसंमतः पाठः क इति विमृश्यम् । **इत्यपि**
। शाङ्करभाष्यत्वेन प्रसिद्धे एवमुक्तम् । तत्रोक्तो वाक्यार्थस्तावत् — बिम्बं मृदा
श्चात् सुधौतं = क्षालितं चेत् तेजोमयं भ्राजेत, तथा परमात्मा समीक्ष्यते इति ।
[ादिकृतं ग्राह्यम् । तेजोमयमिति वा तैजससुवर्णादिमयार्थकमिति । बिम्बं नाम
ने कश्चित् ।

ोत्तरमन्त्रे ब्रह्मतत्त्वातिरिक्तस्य आत्मतत्त्वस्य निर्देक्ष्यमाणत्वात् **आत्मतत्त्वं**
ति तदीक्षणमेव वक्तुमुचितम् ; न ब्रह्मतत्त्वेक्षणम् । एवञ्च जीवसाक्षात्कारानन्तर-
ात्कारस्य स वक्तव्य इहोक्तो भवति । तदिह सुवर्णादिना बिम्बनिर्माणकालस्थिति-
ान्तः प्रदर्श्यते । बिम्बनिर्माणार्थं प्रथमतः तत्तुल्याकृतिं निर्माय मृदा यथार्हं
अग्निना प्रतप्य मृदन्तर्गतं बिम्बाकृतिद्रव्यं द्रवीकृत्यापसार्य तत्स्थाने द्रवीकृतं
षेच्य बिम्बे कृते तस्यामवस्थायामन्तर्हितबिम्बकं मार्तिकद्रव्यं यथा स्यात्, तथेद-
मात्मकमात्मतत्त्वमस्ति ; तत् समीक्षत इत्यर्थ इति चेत्——सत्यम् । **आत्मतत्त्व-**
व गृह्यते । परंतु तथार्थवर्णने मृद एव जीवात्मदृष्टान्तत्वात् बिम्बस्य परमात्म-

यदात्मतत्त्वेन तु ब्रह्मतत्त्वं दीपोपमेनेह युक्तः प्रपश्येत् ।
अजं ध्रुवं सर्वतत्त्वैर्विशुद्धं ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥ १

एष हि देवः प्रदिशोऽनु सर्वाः पूर्वो हि जातः स उ गर्भे अन्तः ।
स एव जातः स जनिष्यमाणः प्रत्यङ् जनास्तिष्ठति विश्वतोमुखः ॥

**यदाऽऽत्मेति** । यदा योगयुक्तः परमात्मप्रतीत्युपायभूतेन प्रणवप्रतिपादित शेषभावेन प्रत्यगात्मना [1]साधनेन तत्स्थं परमनादिमनन्तं हेयप्रतिभटं अस्त्र योक्तरीत्या सर्वतत्त्वात्मकास्त्रभूषणोपेतं परं ब्रह्म सूक्ष्मवस्त्रान्तरितमाणिक्यवत् पश्येत्, तदा सर्व [बन्धक] कर्महानिर्भवतीत्यर्थः । (१५)

तस्य सर्वात्मकत्वं प्रपञ्चयति **एष** हीति । हे **जना** इति परस्परं संबोधनम् । 'दिव्यो देव एको नारायण' इति देवत्वेन प्रसिद्धः परमात्मैव **प्रदिशः** प्रकृष्टदिग्वर्तिपदार्थविशेषा इत्यर्थः । **नु**शब्दश्चार्थे । पूर्वं हि रूपेणोत्पन्नोऽप्ययमेव । **विश्वतोमुखः** सर्वविधो गर्भस्थजन्तुः [जातः?] माणश्च स एवेत्यर्थः ।

ननु भिन्नभिन्नजीवानां कथमेकात्मकत्वमित्याशङ्क्याह **प्रत्य**

1. संबन्धेन.

---

जीवात्मसंबन्धि तत्त्वं परमात्मेत्यर्थवर्णने वैरूप्यम् । अतो भाष्योक्त एवार्थः । **सुधान्त** प्रसिद्धार्थनिर्वाहाय भाष्ये शाङ्करार्थत्यागः । सुधौतमित्यर्थसंभवे तु सोऽप्यर्थो नोपेक्ष्यः वेष्टितं जीवतत्त्वम्, मृदाद्युपलिप्तं बिम्बं शोधितं यथा तेजोमयम्, तथा दीप्तं स्यात् इत्युक्तेः समञ्जसत्वात् । **सुधात**मित्यपि पठन्ति । **वीतशोक** इति । जीवात्मदर्शनं नानाभिव्यक्तितुल्यं न भवति । अपितु उपायभूतविशिष्टदर्शनान्तर्भावार्हमिति भावः वीतशोकस्यापि सर्वपाशमोक्षस्तु देवदर्शनादेवेति स्फुटमुत्तरत्र ।

एवं जीवात्मतत्त्वसाक्षात्कार उक्तः । अथ ब्रह्मसाक्षात्कार उच्यते **यदे**ति । त मित्युक्त्या मूले तत्त्वमित्येतत्स्थाने तत्स्थमिति पाठ ऊह्यते । अत एव भिन्नत्वं तस्येत्य मिति । **विशुद्ध**मित्यस्य हेयप्रतिभटमित्यर्थः । **सर्वतत्त्वैरि**ति इत्थम्भूतलक्षणे तृतीया **भूषणोपेत**मिति । अस्त्रभूषाध्यायो विष्णुपुराणे (१-२२.) 'भूषणास्त्रस्वरूपस्थं यथे जगत् । बिभर्ति भगवान् विष्णुस्तन्ममाख्यातुमर्हसि' इत्यारभ्य द्रष्टव्यः । अनेन दिव विग्रहोपासनमपि व्यञ्जितम् ।

**प्रदिश** इति बहुव्रीहिः । **सर्वा** इति स्त्रीलिङ्गानुसारादबहुव्रीहिर्वा । प्रकृष्टाः प्रदिशः । प्रकर्षः सर्वपदार्थोपाधित्वम् । **प्रत्यङ् जना** इत्यत्र प्रत्यङ्मुखा इति तै

**यो देवो अग्नौ यो अप्सु यो विश्वं भुवनमाविवेश ।**
**य ओषधीषु यो वनस्पतिषु तस्मै देवाय नमो नमः ॥ १७ ॥**

इती श्वेताश्वतरोपनिषदि द्वितीयोऽध्यायः ॥

---

भासमानत्वं प्रत्यक्त्वम् । सर्वेषां प्रबुद्धानां वामदेवादीनामात्मान (त्मना?) प्रतीतौ परमात्मनोऽपि भासमानतया तस्य सर्वं प्रति प्रत्यक्त्वात् तस्य सर्वान् त्मत्वमुपपद्यते । न चास्मदाद्यहम्बुद्धौ परमात्मनोऽभानात् कथमस्मदादीन् प्रति त्वेति वाच्यम् — दोषवशादभानेऽपि योग्यत्वसत्त्वेनादोषात् । ( १६ )

अन्तर्यामितया सर्वात्मत्वम्; न तु स्वरूपेणेत्येतत् प्रदर्शयति **यो देव** स्पष्टोऽर्थः ॥ ( १७ )

॥ इति द्वितीयाध्यायप्रकाशिका ॥

---

ु सर्वस्याप्यात्मनः स्वं स्वं प्रति प्रत्यक्त्वाविशेषात् **प्रत्यङ्** इति को विशेष उच्यते? त इत्यादेर्विशेष्यसमर्पकं प्रत्यङ् इति पदं जीवपरमेवेति वाच्यम् — अनपेक्षिततया । न च, 'कश्चित् धीरः प्रत्यगात्मानमैक्षत्' इति कठोक्तमेव जीवं प्रति प्रत्यक्त्वमिति वाच्यम् — तत्रापि विवादात् । तत्र प्रत्यक्पदप्रयोगः जीवात्मग्रहणार्थं न स्यात् ? यद्वा पराञ्चि सन्ति खानि स्वभावतः । यस्तु प्रत्यग् यथा तथा आवृत्तचक्षुः, मैक्षदित्यप्यर्थस्तत्र घटते । न च परमात्मनः स्वं प्रति प्रत्यक्त्ववत् जीवान् प्रत्यपि तीति ज्ञापनार्थं प्रत्यङ् इत्युच्यत इति वाच्यम् — असंभवात् । ज्ञातृज्ञेययोरभेदः ति तार्किकाः । स्वविषयकज्ञानाधारत्वं तत् स्वस्य स्वस्यैव भवति । स्वयम्प्रकाशत्वरूपवेदा- स्वस्मै भासमानत्व'मिति निर्वचनं सुवचम् । तत्रापि भासमानस्य भानफलिनश्चैक्य- ासमानजीवातिरिक्तस्य परमात्मनः कथं तद् घटते । किञ्चानेन, 'भिन्नभिन्नजीवानां ात्मकत्वम्' इत्याशङ्का च कथं परिह्रियत इत्यत्रोपपादयति **अहमिति भासमानत्व-** यं भाव — **कथमेकात्मकत्व**मित्यस्य कथमेकान्तर्यामिकत्वमिति नार्थः । वचनबलेन मेकत्वसिद्धौ कथमित्याक्षेपस्याप्रसक्तेः; जीवानां भिन्नभिन्नत्वस्य च एकान्तर्यामिकत्वस्य विरोधाभावाच्च । अतः भिन्नभिन्नानामेकाभेदः कथमित्येवाशङ्का । तादृशाभेदस्वीकारे भिन्नस्य तदभिन्नत्वमिति नयात् मिथोप्यभेदापत्तिरित्याशयः । तत्र **प्रत्यङ्** इति यते । जीवानां परमात्माभेदनिबन्धनं तदात्मकत्वं नोच्यते; किं तु तत्तज्जीवं प्रति

॥ अथ तृतीयोऽध्यायः ॥

एको जालवानीशत ईशनीभिः सर्वान् लोकानीशत ईशनीभिः ।
एवैक उद्भवे संभवे च य एतद्विदुरमृतास्ते भवन्ति ॥ १ ॥

(३)

उक्तज्ञानस्य फलमाह **य एक** इति । 'अपहतपाप्मा दिव्यो देव' इति
न श्रुतिप्रसिद्धः परमात्मा प्रकृतिशब्दितमायारूपवागुरायुक्तस्सन् ईशनसमर्थाभि
क्रियाशक्तिभिः मायाजालगोचरान् प्राकृतांश्च (न्) लोकानीष्टे तदगोचरान्
तांश्च लोकानीष्टे । यश्च जगतः **उद्भवे** उत्पत्तौ, **संभवे** — समित्येकी-
– लयापरपर्याये एकीभावे च [य] ईष्टे, तज्ज्ञानं मोक्षसाधनमित्यर्थः । (१)

---

। स्वविषयधिषणाधारत्वमात्रं प्रत्यक्त्वपदार्थतयोक्तं तार्किकैः । वयं तु स्वयम्प्रकाशत्वस्य
तया स्वस्मै स्वेनैव भानं तदिति च ब्रूमः । न तु स्वविषयधिषणाधारत्वमुपेक्षामहे ।
रोधेन च, अहमिति भासमानत्वं प्रत्यक्त्वम् । भासनञ्च स्वेन वा भवतु, धर्मभूतज्ञानेन
जैवस्वयम्भासनाश्रयत्वस्य परमात्मन्यभावेऽपि तदीयधर्मभूतज्ञानाधीनतादृशभासनाश्रयत्वं
व । अहमर्थविषयकानुमितिशब्दबोधनिदिध्यासनादीनामिष्टतया अहमर्थस्य धर्मभूतज्ञान-
त्वापायोगात् । तत्र वेदान्तव्युत्पत्तिमतां वामदेवादीनां योगाद्यधीनस्य अहमितिभासनस्य
ऽप्याश्रय इति स तान् प्रति प्रत्यक् । तथाभानञ्च जीवपरयोः शरीरात्मभावप्रयुक्तम् ;
प्रयुक्तम् । जीवान्तरस्य चान्यं प्रति न प्रत्यक्त्वप्रसङ्गः । इममेव शरीरात्मभावमनुभव-
दर्शयितुं प्रत्यङ् इत्युक्तम् । काममस्तु, 'कश्चिद् धीरः प्रत्यगात्मानमैक्षत्' इत्यत्र
म्, यद्वा प्रत्यक्पदं तत्र जीवपरम् ; प्रतीच आत्मा प्रत्यगात्मेति आत्मपदं परं परमात्म-
**सर्वार्थसिद्धौ** जीवपरे(७)तत्प्रत्यक्पदग्रहणात् । इह तु **प्रत्यगि**ति परमात्म-
। वस्तुतो जीवं प्रति परस्य मुख्यप्रत्यक्त्वस्य दुर्वचत्वेऽपि अहमितिभासमानत्वरूपसामा-
तद्विवक्षेह शरीरात्मभावव्यञ्जनायाऽऽदृता श्रुताविति न कश्चिद् दोष इति । प्रत्यगित्यस्य,
प्रत्यक्छरीरक' इत्येवार्थवर्णनसंभवेऽपि ज्ञानिभिः परमात्मा अहमित्येव गृह्यत इति
पादनायैतद्विवक्षेति ॥

---

(३)

समष्टाङ्गेन योगेन आत्मतत्त्वसाक्षात्कारपूर्वकं ब्रह्मतत्त्वसाक्षात्कारसंपादनप्रकारो
अथ तृतीये तस्यैकस्यैव मोक्षप्रदत्वं प्रतिपाद्यते । एतं विदुरिति वक्तव्ये, एतद्विदुरिति
[illegible]

**को हि रुद्रो न द्वितीयाय तस्थुः य इमान् लोकानीशत ईशनीभिः ।**
**त्यङ् जनास्तिष्ठति सञ्चुकोचान्तकाले संसृज्य विश्वा भुवनानि गोपाः ॥**

ननु 'य एतद्विदुरमृतास्ते भवन्ती' ति पूर्वमन्त्रे सर्वलोकेशनारायण
क्षसाधनज्ञानविषयतया मोचकत्वमिति यदुक्तम्, तदयुक्तम् । जगत्कारण
द्धानां [2]ब्रह्मादीनां ज्ञानस्यैव मोक्षसाधनत्वमिति वक्तुमुचितत्वादित्याशङ्क्याह ए
ति । हे जनाः ! 'सर्वलोकानीशत ईशनीभिः,' 'प्रत्यङ् तिष्ठती' ति निर्दि
**श्वा भुवनानि संसृज्य** सृष्ट्वा अन्तकाले **सञ्चुकोच** संहृतवान्, **गो**
। रक्षिता च यः, स एक एव **रुद्रः** — संसाररुजं द्राव(द्रव)यतीति रुद्रः-
रमोचक इत्यर्थः । **द्वितीयाय** द्वितीयत्वाय सहायतया न केऽपि **तस्थु**
यतया वा उपायान्तरतया वा केऽपि न स्थितवन्तः । मोचकोऽन्यः को
त । 'वेदाहमेतं पुरुषं महान्तम्' इति महापुरुषं प्रस्तुत्य, 'तमेवं विद्वान
भवति; नान्यः पन्था विद्यते' इति मार्गान्तरनिषेधात् । अत्र रुद्रशब्दो [यौ
?]; रूढ्यर्थापेक्षया प्रकृतौपयिकस्य मानान्तराविरुद्धस्य संसारमोचकत्वलक्ष
गकार्थस्य मनसि विपरिवर्तमानस्य शारीरकापशूद्रन्यायेन बलवत्त्वात् । अस्
पनिषदो भगवत्परत्वस्य साधयिष्यमाणत्वाच्च नात्र चोद्यावकाशः । (२

1. नारायणज्ञानस्यैव मोक्षसाधनत्वमिति यदुक्तम् । 2. ब्रह्मादीनां सद्भावादिति ।

नियमनरूपस्थितिकर्तुः उद्भवकर्तुः प्रलयकर्तुश्च प्रत्येकमैक्यं वेदनीयतयोक्तमिति
व्यम्; किं तु सर्वकर्तुरैक्यमिति ज्ञाप्यते द्वितीयमन्त्रे । तेन, कारणज्ञानस्य मोक्षहेतुत्व
स्थेमध्वंसकारणानाञ्च लित्वात् त्रयोऽपि मोक्षप्रदा इति मतिर्व्युदस्यते । **एको हि** र
। नात्र एकोद्देशेन रुद्रत्वविधिः; **न द्वितीयाय तस्थुरिति** अनेकत्वपक्षव्युदसनेन एक
नपरत्वस्य स्पष्टत्वात् । अतो रुद्रपदमुद्देश्यसमर्पकम् । उद्देश्यश्च प्रकृतः । न च रुद्राख
विशेषः प्राक् कण्ठोक्तः । अतो रुद्रपदेन, पूर्वोक्तो य आकारः, तद्विशिष्टो वाच्यः । र
न्त्रोक्तेष्वाकारेषु ईशितृत्वोद्भवसंभवकर्तृत्वानामत्र द्वितीयादिपादैरनूद्यमानतया, 'य ए
मृतास्ते भवन्ती' त्युक्तो मोक्षप्रदत्वाकार एव शिष्यते । रुद्रशब्दश्च तत्प्रतिपादनौपयि
क्तिसंपन्न इति स एवार्थो ग्राह्य इत्याशयेनाह **संसाररुज**मित्यादि । प्रत्यङ् तिष्ठतीत्य
मञ्चतीति प्रत्यङ् यथावस्थितस्वस्वरूपसाक्षात्कारवान् तिष्ठतीत्यर्थेन मायावश्यत्वाभावज्ञापकत्व
**जालवा**नित्येतदनुवादत्वमपि संभवेत् । **संचुकोचे**ति अणिजन्तप्रयोगेण स्वयं तस्य संको
याश्रयत्वावगमनात् ब्रह्मण उपादानत्वं दर्शितं भवति । **भुवनानी**त्यस्य **संसृज्ये**त्यत्रेव अत्राप
तु संहृतवानिति णिजर्थो ग्राह्यः । **गोपाः** इति च सृष्टिस्थितिलयानां सर्वेषां चेतनगोप्तृत
ज्ञापनार्थम् । तत् स्पष्टं **दयाशतके** । तदनेन मन्त्रेण सृष्टिस्थितिप्रलयकर्तुः मोक्षप्रद
त्वम् ।

**विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात् ।**
**सं बाहुभ्यां नमति सं पतत्रैर्द्यावापृथिवी जनयन् देव एकः ॥ ३ ।**
**यो देवानां प्रभवश्चोद्भवश्च विश्वाधिको रुद्रो महर्षिः ।**

---

**विश्वत** इति । 'अनेकबाहूदरवक्त्रनेत्र' मित्युक्तरीत्या अनन्तन पाणिपादादियुक्तनित्य (?) दिव्यविग्रहयुक्तः असहाय एव द्युपृथिव्यादिसर्वप्र निर्माता जीवान् बाहुभ्यां **पतत्र**शब्दितैः पद्भिश्च **संन (संध) मति** संयो करणकलेबरसंयोगं करोतीत्यर्थः । सर्वेषां शरीरेन्द्रियसंबन्धं कुर्वन् स्वय धीनानन्तशरीरेन्द्रियवानित्यर्थः ।

परमात्मोपलब्धिप्रार्थनामन्त्रमाह **यो देवाना**मिति । 'यान्येतानि क्षत्राणि, इन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशानः' इति बृह कोक्तरीत्या इन्द्रवरुणरुद्रादीनामुद्भवः । उद्भवत्यस्मादित्यु**द्भवः** । प्रकर्षेण स्मादिति **प्रभवः** । प्रकर्षेण भवनं देवाधिपतित्वादिरूपेणास्य प्रभवनम् । 'सर्वयज्ञानां भोक्ता च प्रभुरेव च' इति कर्मफलदायित्वलक्षणप्रभुत्वस्य भगवः प्रजापतिपशुपतित्वादिपदप्रापकत्वलक्षणस्य प्रभवनस्य भगवदधीनत्वादिति द्रष्ट **विश्वाधिकः** । 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्' इत्युक्तरीत्या वि

---

ननु महोमहीधरमहार्णवादीनां स्वर्गनरकाद्यनन्तलोकानाञ्च सृष्टिकर्ताऽप्येक इति पगमम् ; अल्पेऽपि कार्येऽनेकपुरुषसाहायकसव्यपेक्षताया एव सर्वत्र दृष्टेः । एवंसति व सर्वेषां सृष्टौ स्थितौ संहारे चैकः कर्तेति इति शङ्काम् , एकस्यैव सर्वसृष्टिकार्यार्थपरिक प्रदर्शनेन परिहर्तुं **विश्वत** इति मन्त्रः । **बाहुभ्यां संयोजयती**ति देवमनुष्यादिसृष्टि रद्भिः संयोजयतीति तिर्यक्सृष्टिः । एवञ्च वाक्यद्वित्वात् क्रियापदावृत्तिरस्तीति ज्ञापनाय स्युपसर्गस्य द्विः प्रयोगः । अथवा द्वितीयं **स**मिति **जनयन्** इत्यनेन संबध्यते । तै **नारायणे**ऽपि एतदर्थो द्रष्टव्यः ।

एवं तावत् सर्वकारणस्यैकत्वं प्रतिबोध्य तस्य मोक्षप्रदत्वमुक्तम् । अथ मोक्षहे ादत्वमपि तस्यैवेति प्रार्थनामन्त्रमुखेन ज्ञाप्यते । सर्वकर्तुरेकत्वस्य प्रागावेदनात् सृष्टिमात्र ासिद्धस्य हिरण्यगर्भस्य सर्वकर्त्रभेदायोगात् , हिरण्यगर्भं जनयित्वा तन्मुखेन देवानां ज र्वकर्तृत्वमित्येव वक्तव्यमिति हिरण्यगर्भजनकत्वमप्याक्षिप्तमधस्तात् । एवं देवप्रभवत्वेन ार्भजनकत्वेन मोक्षप्रदत्वादिना च विशिष्टम् , अत एव विश्वाधिकं य इत्यादिनाऽनूद ुभधीसंकल्पकत्वमुच्यते । अत इहापि रुद्रपदमुद्देश्यकोटिनिविष्टत्वात् न रुद्रदेवतात्वविधा कं तु पूर्वोक्तार्थकं सत् हिरण्यगर्भजनकत्वेन प्रमाणान्तरप्रसिद्धदेवतापरम् । **प्रकर्षेण भव** ावनमिदं देवानाम् । भगवद्दत्तं तु प्रभवनमन्यदित्याह **प्रकर्षेणे**ति । **प्रभवनस्य** :

**हिरण्यगर्भं जनयामास पूर्वं स नो बुद्ध्या शुभया संयुनक्तु ॥ ४ ॥**

**या ते रुद्र शिवा तनूरघोरा पापकाशिनी ।**
**तया नस्तनुवा शन्तमया गिरिशन्ताभिचाकशीहि ॥ ५ ॥**

**यामिषुं गिरिशन्त हस्ते बिभर्ष्यस्तवे ।**
**शिवां गिरित्र तां कुरु मा हिँसीः पुरुषं जगत् ॥ ६ ॥**

---

ापि तदेकदेशैकदेशतया तस्य विश्वाधिकत्वम् । संसाररुजां द्रावकतया रुद्र
निरतिशयसार्वज्ञ्यादियुक्ततया महर्षित्वञ्च भगवतो युज्यते । एवम्भूते
न्, 'यन्नाभिपद्मादभवन्महात्मा प्रजापतिर्विश्वसृड्विश्वरूपः', 'तत्र ब्रह्मा चतु
जायत', 'नारायणाद्ब्रह्माजायत' इत्युक्तरीत्या हिरण्यगर्भं सर्वेषां देवानां सृष्टे
तनयामास । **सः** देवः परमात्मविषयतया शुभया बुद्ध्या योजयत्वित्यर्थः । (४

'अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा भयेन च प्रव्यथितं मनो मे । तदेव मे
देव रूपं प्रसीद देवेश जगन्निवास' इत्युक्तरीत्या सौम्यदिव्यमङ्गळविग्रह
तया भगवत्प्रकाशप्रार्थनामन्त्रमाह **या ते रुद्रेति** । हे **रुद्र** संसाररुग्द्रावक
रुद्रव्यावर्तनाय तं विशिनष्टि **गिरिशन्तेति** । गिरिशं तनोतीति गिरिशन्तः
स्रष्टेत्यर्थः । या शिवा अघोरा च **पापकाशिनी** पापकमशितुं शीलमस्य
ापकाशिनी पापदाहिका वैष्णवी सात्त्विकी तनुः, तादृश्या **शन्तमया** सुख
अत्यन्तानुकूलया **तन्वा** विग्रहेण **अभिचाकशीहि** प्रकाशस्वेत्यर्थः । (५

**यामिषुमिति** । **गिरित्र** । **गीः** वेदान्तः । तत्र त्रायते पाल्यते प्रतिपाद्यते
वेदान्त[1] प्रतिपाद्यत्वं **गिरित्र**शब्दार्थः । **गिरिशन्ते**त्यस्य पूर्ववदर्थः ।
! गिरिशन्त ! ते हस्ते शिवां **यामिषुं बिभर्षि** यत् आयुधं बिभर्षीत्यर्थः
म् **अस्तवे** — असु क्षेपे — मद्ब्रह्मज्ञानविरोधिक्षेपाय कुरु । गच्छतीति **जगत्**
रथचङ्क्रम्यमाणं [2]**पुरुषं मा हिंसीः** संसारान्धकूपपतितं मा कार्षीरित्यर्थः । (६

1. तत्प्रतिपाद्यत्वं. 2. संसारचक्रभ्राम्यमाणं.

---

त्वादिति । फलप्रदत्वरूपप्रभवनस्य तत्क्रियारूपतया तदिच्छाजन्यतया तदधीनत्वम् । (४
मोक्षहेतुभूता बुद्धिः शुभेयं शुभाश्रयविग्रहविषयिणीति ज्ञाप्यते **या ते** इति मन्त्रेण । (५
दिव्यमङ्गलविग्रहस्येव दिव्यायुधादेरपि ध्येयत्वम् । तेन ध्यायिनां दण्डनपरिहारे
ठनस्य कार्यत्वप्रार्थनामुखेन ज्ञाप्यते **यामिषुमिति** । 'अस्तवे यां बिभर्षि, तां शिवां कुरु
येऽपि न दोषः । अपां पत्युः शत्रून् राम इव श्रिताहिंसनेन तद्विरोधिनः क्षिपेति यावत् । (६

**ततः परं ब्रह्म परं बृहन्तं यथानिकायं सर्वभूतेषु गूढम् ।**
**विश्वस्यैकं परिवेष्टितारमीशं तं ज्ञात्वा अमृता भवन्ति ॥ ७ ॥**

**वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् ।**
**तमेव विदित्वाऽति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय ॥ ८**

---

**ततः पर**मिति । उक्तप्रकारेण तत्प्रार्थनानन्तरम् **बृहन्तं** निरतिशय
श्रयम् अत एव परं **यथानिकायं** मशकमातङ्गादिशरीरानुरूप्येण **सर्वभूते**
प्रविश्य अन्तर्यामितया वर्तमानम्, विश्वं व्याप्य स्थितं तमीश्वरं ज्ञात्वा
भवन्तीत्यर्थः ।

तज्ज्ञानस्य मोक्षसाधनत्वमुक्त्वा इतरस्य तन्निषेधति **वेदाहमेत**मिति ।
परस्तात् ज्योतिः महापुरुषं (ज्योतिर्मयवपुषं ?) तमेव पुरुषं[1] विदित्वा **मृत्युः**
संसारमतिक्रामति । **अयनाय** तत्प्राप्तये अन्यो मार्गो नास्ति । एतमर्थमहं
जानामि । अस्मिन्नर्थे विवादो नास्तीति मुनीनां परस्परं वचनमिदम् ।

1. नारायणं.

---

एवं प्रार्थनायां सत्यां मोक्षार्थध्यानं संप्रवृत इति ज्ञाप्यते **तत**इति । गूढमित्यन्
ारुक्ता । **परिवेष्टितार**मिति बहिर्व्याप्तिः । **ततः** परमित्यस्य पूर्वश्लोकोक्तात् जगत
ात्यर्थः शाङ्करभाष्ये ।

एवं ध्येयत्वेन कथितं परं ब्रह्म किं किञ्चिद्देवतारूपम्, उतान्यादृशम् । आद्ये क
वतेत्यत्राह **वेदे**ति । **एतम्** एतावत् ध्येयत्वेनोक्तमहं तमःपारवर्त्यादित्यवर्णमहापुरु
देत्यर्थः । पुरुषसूक्तानुवादोऽयमिति स्पष्टम् । तत्र च पुरुषः, 'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ'
क्ष्मीपतित्वेन वेदितः । पुरुषशब्दश्च तस्मिन्नेव प्रसिद्धः । तथाच स्कान्दे, 'यथा पुरुषशब्दः
सुदेवे प्रतिष्ठितः । तथा शङ्करशब्दोऽयं महादेवे प्रतिष्ठितः' इति । **मुनीनां परस्पर**
दध्यायान्तिममन्त्रानुसारेणोक्तम् । एवं सृष्टिस्थितिसंहारकारिणां ब्रह्मविष्णुरुद्राणां मध्ये त्रि
क्ष्मीपतेः पुरुषशब्दार्थस्यैव परब्रह्मत्वं प्रतिबोध्य, 'चतुर्मुख एव वा रुद्र एव वा तुल्यनयेन
भवतु ; त्रितयोत्तीर्णमन्यद् वा त्रितयहेतुः । तथाच तस्यैकस्य कारणस्य ध्यानादस्तु मु
ाक्षेपं क्षिपति **तमेवे**ति । विष्णुपरब्रह्मणोरैक्यम्, नान्यथा । अतः चेतनान्तरं सर्वव
मन्तव्यम्, नापि मुक्तिप्रदम् । अतो वासुदेव एव परदेवतेति । अत्र **तमेवे**ति तच्छब्दो
कारश्रवणात् विदित्वैवेत्यश्रवणात् स एव पन्थाः, नान्यश्चेतन इत्येव प्रतीयते । उक्त
**क्षेपरक्षायाम्** । 'महापुरुषस्य वेदनमेव मोक्षसाधन'मिति **पराधिकरणभाष्यमप्यत**
पुरुषस्यैव वेदनमित्येतदर्थपर्यवसायीति सुवचम् ।

**त् परं नापरमस्ति किञ्चित् यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् ।**
**इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् ॥ ९ ॥**

नन्वात्मज्ञानस्यैव, 'तरति शोकमात्मवित्' इति मोक्षहेतुत्वमुच्यते । कथ-
यवर्णविग्रहपुरुषज्ञानस्येत्याशङ्क्य, अस्यैव पुरुषस्य[1] व्यापकत्वादात्मत्वमपि तस्यै-
: — **यस्मा**दिति । "तथान्यप्रतिषेधात्" इति सूत्रे, "यस्मादपरं परं
। केनापि प्रकारेण उत्कृष्टं नास्तीत्यर्थः" इति भाषितम् । व्यासार्यैश्च,
ादित्यस्य परमित्यनेनान्वयोऽस्तु । यस्मादुत्कृष्टं नास्तीत्यर्थः" इत्याशङ्क्य,
सति अपरमित्यस्य वैयर्थ्यप्रसङ्गात् । न च परञ्चापरञ्च नास्तीति उत्कृष्टापकृष्ट-
षेधकत्वं शक्यशङ्कम् — नञ आवृत्तिप्रसङ्गात् । अतो **यस्मा**दित्यस्या**पर**मित्य-
न्वयः । यस्मादन्यत् सर्वोत्कृष्टं नास्तीत्यर्थाश्रयणे तदन्यस्योत्कृष्टस्य वस्तुन
ग्रात् समाभ्यधिकनिषेधः फलती"ति वर्णितम् । यदपेक्षया अतिशयेनान्तः
ाग्यं वस्तु नास्ति, यस्माच्चाधिकं विवृद्धं किमपि वस्तु नास्ति, यश्चाप्राकृते
अवाप्तसमस्तकामतया ब्रह्मादिकमपि तृणीकृत्य वृक्ष इवाप्रणतस्वभावस्तिष्ठति,
भगवानिति शब्दोऽयं तथा पुरुष इत्यपि । निरुपाधी च वर्तेते वासुदेवे
" इत्युक्तप्रकारेण **पुरुष**शब्दितेन भगवता वासुदेवेनेदं सर्वं व्याप्तमित्यर्थः ।
'जीवाम केने'ति चिन्ताया निस्तारो दर्शितः । **पूर्ण**मिति व्याप्त्या
: कथिते देहभूतस्य जीववर्गस्य तदधीनजीवनत्वमुक्तं भवति । (९)

1. पुरुषव्यापकत्वात् ।

। तावता वेदनातिरिक्तस्यानुपायत्वासिद्धिरिति तु न । 'तमेवं विद्वानमृत' इति एवकार-
प्रसूक्तवाक्ये तद्विलक्षणं भवात् । उभयोरैकार्थ्यौचित्येऽपि, 'स एनमविदितो न भुनक्ती'-
। बृहदारण्यकवाक्यादितः तत्सिद्धेः । एवंसति अत्र, **तज्ज्ञानस्य मोक्षसाधनत्वमुक्त्वा**
**तत् निषेधती**त्यवतरणभाष्यमपि तदभिप्रायमेव ग्राह्यम् । यद्वा प्रकृतश्रुतावपि वेदन
विशिष्टमहापुरुषान्यस्य पथित्वनिषेधे प्रकृतपुरुषव्यतिरिक्तस्यानुपायत्ववत् वेदनातिरिक्तवि-
महापुरुषस्याप्यनुपायत्वावगमात् महापुरुषवेदनान्यस्यानुपायत्वसिद्धिरपीत्याशय इति । (८)
नु तमःपारवर्तिन आदित्यवर्णविग्रहावच्छिन्नस्य पुरुषस्य तमोऽन्तर्गतविश्वात्मकचिद-
त्वायोगात् तस्य पूर्वोक्तब्रह्मभिन्नदेशविशेषस्थायिपरिच्छिन्नव्यक्तिविशेषस्योपासनादमृत-
कथमित्यत्र, पूर्वं **महान्त**मिति पदवेदितस्यातिसूक्ष्मत्वसर्वव्यापित्वे प्रदर्श्य, 'तदतिरिक्तं
ह्मे'ति मतिरपाक्रियते **यस्मा**दिति । प्रपञ्चकारणस्य मोक्षस्थानाधिपतेश्चैकत्वे हि कारणस्य

**ततो यदुत्तरतरं तदरूपमनामयम् ।**
**य एतद्विदुरमृतास्ते भवन्ति अथेतरे दुःखमेवापियन्ति ॥**

---

यस्माद्धेतोः पुरुषापेक्षयोत्कृष्टं वा समं वा नास्ति । तस्मात् तदे
कर्मकृतरूपरहितं तत्कृतामयशब्दितदुःखशून्यञ्च । तज्ज्ञानमेव मोक्षसा
संहरति **ततो** यदिति । "तथान्यप्रतिषेधात्" इति सूत्रे, 'ततो यद्
पूर्वनिर्दिष्टात् पुरुषात् अधिकं वस्तु न प्रतिपाद्यत' इत्युक्त्वा, तर्हि, 'त
तर' मिति किमुच्यत इति परिचोद्य, "पूर्वत्र, 'वेदाहमेतं पुरुषं महान्त
तमसः परस्तात् । तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽ
परस्य ब्रह्मणो महापुरुषस्य वेदनमेवामृतत्वसाधनम्; नाऽन्योऽमृतत्वस्य
पदिश्य, तदुपपादनाय, 'यस्मात् परन्नापरमस्ति किञ्चित् यस्मान्नाणीयो न
कश्चित् । वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण स
पुरुषस्य परत्वं तद्व्यतिरिक्तस्य परत्वासंभवञ्च प्रतिपाद्य, 'ततो यदुत्तरतरं त
मयम् । य एतद्विदुरमृतास्ते भवन्ति अथेतरे दुःखमेवापियन्ती" ति
हेतुतो निगमयति । यत् उत्तरतरं पुरुषतत्त्वम्, तदेवारूपमनामयं यतः,

---

रपि दर्शिता । आदित्यवर्णविग्रहरूपपुरुषाकारत्वमपि तस्यैव । 'पुरसंज्ञे तु पुरे तस्मि
पुरुषो हरिः' इति सर्वव्यष्टिशरीरनिविष्टतया, 'स यत् पूर्वोऽस्मात् सर्वस्मात्, स
औषत् तस्मात् पुरुषः' इति सर्वपूर्ववर्तित्व-सर्वपाप्मप्रदाहकत्वरूपकारणत्वमोक्षप्रदत्वर
पुरुषत्वमपि तस्यैवेति । मन्त्रोऽयं **मुण्डके**, **तैत्तिरीये**ऽपि च ।

'ननु विग्रहपरिच्छिन्नत्वोक्त्या कर्मवेष्टितत्वावगमादन्य एव उपास्यः' इति शङ्काऽ
परिशीलने स्वयं शाम्यतीति दर्शयन् निगमयति **तत** इति । एवं मोक्षस्थानस्थि
व्यापितायाः व्युत्पादितत्वात् आदित्यवर्णत्ववर्णनेन कर्मकृतनिकर्षलेशस्याप्यभावस्य
तत एव तदन्यस्य सर्वस्य कर्मकृतसामयशरीरपरिच्छिन्नताया अपि व्यञ्जनात् यत्
त्वदभिमतं ब्रह्मशिवादि, ततोऽप्युत्तरतरं तमःपारवर्ति तदरूपमनामयञ्च, अन्यत्तु साम
तदुपासन एवामृतत्वम्; तदन्यस्य कर्मतन्त्रस्य दुःखमयस्योपासने तु दुःखप्राप्ति
**अरूपमनामयमि**त्यस्य, 'कर्मकृतदेहतत्कृतदुःखविरोधि; हेयप्रतिभटमित्यर्थ

सर्वाननशिरोग्रीवः सर्वभूतगुहाशयः ।
सर्वव्यापी स भगवाँस्तस्मात् सर्वगतश्शिवः ॥ ११ ॥

---

एतत् पुरुषतत्त्वं विदुः, त एवामृता भवन्ति; अथेतरे दुःखमेवापियन्ती"ति भा
अत्र ततश्शब्दः पूर्वोक्तहेतूपसंहारार्थः । न तु पूर्वप्रतिपादितपुरुषस्य प्रति
यिषितवस्त्वन्तरावधित्वप्रतिपादनपर इति द्रष्टव्यम् । केचिदाचार्याः, "तेनेदं
मिति पूर्ववाक्ये **सर्वमिद**मिति प्रथमान्तनिर्दिष्टतया प्रधानस्य जगत एव,
**यदुत्तरतर**मित्यत्र तच्छब्देन ग्रहण" मित्यूचुः । तदपि युक्तमिति **वेदार्थ
व्याख्याने**ऽप्यु[1]क्तम् ।

ननु 'तेनेदं पूर्णं पुरुषेण सर्व' मिति सर्वशरीरसंबन्धावगमात्
हेयसंबन्धोऽवर्जनीय इत्याशङ्क्याह **सर्वाननेति** । सर्वशरीराणां तच्छरीरत्वेन
ननशिरोग्रीवत्वम्; सर्वभूतहृदयगुहाश्रयत्वात् सर्वभूतगुहाशयत्वम् । अनेनाऽऽ
सर्वव्याप्यपि यतो भगवान्, [तस्मात् ?] 'ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेष
भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभि' रिति हेयप्रतिभटत्ववाचिभगवच्छ
तया तस्य पुरुषस्य सर्वगतत्वेऽपि शिवत्वमेव; न त्वशुभसंबन्ध इति भावः ।

1. व्याख्यानोक्तम् . 2. कारणेन.

---

र्थानुसारात् तत इत्यस्य हेतुपरत्वं भाष्योक्तं सुस्थम् । अन्यदप्यप्रतिषिद्धमनुमतमाह केचि
जगतः प्रथमान्तनिर्दिष्टत्वादव्यवहितत्वाच्च तच्छब्दस्य तत्परामर्शित्वस्य युक्तत्वं केषि
उपपन्नमिति तत्र स्वीकृतमिति । **व्याख्यानेऽपीति** अपिना हेतुपरमूलव्याख्यानपरै
अस्यार्थस्योक्तत्वात् मूले इदं प्रतिषेध्यं न भवतीत्युपदर्श्यते । तदयमर्थः — **उत्तरतर**
अतिशयितोत्तरमित्यर्थात् जगदपेक्षयाऽतिशयितोत्तरत्वोक्त्या अनतिशयितमुत्तरं किञ्चि
वगमनात्, ब्रह्मरुद्रादेरपि जगदन्तर्भूततया तत उत्तरमित्यनेन, 'द्वाविमौ पुरुषौ लोके क्ष
एव च' इति प्रसिद्धनित्यमुक्तग्रहणम् । अतिशयितमुत्तरं तु परं ब्रह्म स उत्तमः पुरुष इति

ननु विग्रहवतोऽनामयत्वमसंभवीत्याशङ्कायाम्, 'तस्य विग्रहस्येव विश्वस्यैव तच्छ
शेषात् तद्विग्रहानङ्गीकारेऽप्याशङ्का जागर्ति । एवञ्च तत्परिहार एवैतत्परिहारोऽपि ।
परिहार इत्युच्यते **सर्वाननेति** । सर्वेषामाननशिरोग्रीवादयः अस्याप्याननशिरो
भवन्ति । तत्र हेतुः जीवात्मन इवास्यापि तत्तद्भूतगुहाशयत्वम् । न केवलमेतत्; स
कार्यकारणसर्वव्यापितया आननादिरहितस्थावरादिशरीरकत्वमप्यस्ति । एवञ्च, 'एको
देह: स भवति त्रिविधानन्तः स्वैकभोक्ता: विश्वं देह: प्रभोश्चेत् , स कथमतिपतेत

**महान् प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्तकः ।**
**सुनिर्मलामिमां शान्तिमीशानो ज्योतिरव्ययः ॥ १२ ॥**

---

तज्ज्ञानस्यैव मोक्षसाधनत्वमित्येतत् द्रढयति — **महानिति** । **वै**शब्दोऽव पुरुष एव महान् **प्रभुः** फलप्रदानसमर्थः । ' अहं हि सर्वयज्ञानां भोक्ता च ' इत्युक्तः (इत्यत्र ?) " प्रभुः = फलप्रद " इति भगवता भाष्यकृत त्वात् प्रकृते मोक्षरूपफलस्य प्रस्तुतत्वात् महच्छब्दसमभिव्याहाराच्च महा ोक्षप्रदः स एवेति तस्य मोक्षहेतुत्वं पूर्वोक्तं स्थिरमिति भावः । तत्र हेतु· **त्वस्यैष प्रवर्तक** इति । ' जायमानं हि पुरुषं यं पश्येन्मधुसूदनः । स तु विज्ञेयः स वै मोक्षार्थचिन्तकः ' इत्युक्तरीत्या मोक्षार्थज्ञानहेतु- न्मेषहेतुभूतकटाक्षशालितया स एव मोक्षप्रद इत्यर्थः । अत **एव** ज्योती- शयदीप्तियुक्तादित्य [ वर्णविग्रहः ? ] पुरुषोऽव्ययो भगवानेव **सुनिर्मलामिमां** रागाद्युपद्रवशान्तिम् **ईशानः** ईष्ट इत्यर्थः । (१२)

---

मित्याशङ्का उक्तमहापुरुषातिरिक्तपरब्रह्माङ्गीकारेऽपि भवत्येव । महापुरुषे त्विवयं शङ्का स हि भगवान् । भगवच्छब्दश्च हेयप्रतिभटे यौगिको रूढश्चेति विष्णुपुराणादौ प्रसिद्धश्च हेयप्रतिभटत्वमन्तर्यामिश्रुतिषु, ' एष त आत्माऽन्तर्याम्यमृतः ' ' एष पाप्मा दिव्यो देव एको नारायणः ' इति । दिव्य इति विग्रहवैशिष्ट्यं प्रदर्शयन्त्येव हतपाप्मत्वमुपदिशति । (अत्राप्युक्तम्, ' वृक्ष इव स्तब्धो दिवि तिष्ठत्येक ' इति । ) गाद् भगवतोऽतिरिक्तस्य सर्वदेहित्वे स दोषः स्यात् । अयं तु सर्वव्यापी भगवान् । गततत्त्वेऽपि शिवत्वमेव = मङ्गलत्वमेवेति । भगवच्छब्दो विष्णावेव मुख्य इति यणादपि ज्ञायते । आह ह्युत्तरां दिशं प्रति प्रस्थाप्यमानान् प्लवङ्गमान् प्रति सोम- तुत्य सुग्रीवः, ' भगवानपि विश्वात्मा, शम्भुरेकादशात्मकः । ब्रह्मा वसति देवेशो तः ' इति । एकादशात्मकशम्भु-देवेशब्रह्मोभयातिरिक्तो हि विश्वात्मको भगवानि- ष्णुपुराणेऽपि स्पष्टम्, ' एवमेष महाशब्दो मैत्रेय भगवानिति परमब्रह्मभूतस्य न्यगः ' इति । ईदृशं भगवत्त्वं विधाय तेन हेतुना शिवत्वं विधीयमानं मङ्गलत्व- भवितुमर्हति । अत्र सर्वव्यापी स भगवान् शिव इत्येकवाक्यता तु न भवति । वाक्यभेदकस्य मध्ये निविष्टत्वात् । सर्वगतशब्दस्य सर्वव्यापिशब्दसमानार्थतया ाच्च । (११)

। मोक्षप्रदत्वं मोक्षहेतुबुद्धिप्रदत्वञ्चोक्तम् । अथ तद्धेतुसत्त्वप्रवर्तकत्वमप्युच्यते शान्तिमित्यस्य क्रियासाकांक्षतया **ईशान** इत्यत्रान्वयः । पूर्वमपि, ' सर्वान् इति सकर्मकतया प्रयोगः स्थितः । अत्र शान्तिमीशान एष महान् प्रभुः सत्त्वस्य क्यता वा ; उत्तरार्धं पृथग् जीवन्मुक्तिहेतुत्वविधिपरं वा ।

**अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये संनिविष्टः ।**
**हृदा मनीषा मनसाऽभिक्लृप्तो य एतद्विदुरमृतास्ते भवन्ति ॥ १३ ॥**

**सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।**
**स भूमिं विश्वतो वृत्वा ऽत्यतिष्ठत् दशाङ्गुलम् ॥ १४ ॥**

---

तज्ज्ञानसाधनमाह **अङ्गुष्ठमात्र** इति । सर्वेषामन्तरात्माऽसौ हृदयगुहानिहि-धनाङ्गुष्ठपरिमाणयुक्तः पुरुषः **हृदा** भक्त्या **मनीषा** धृत्या युक्तेन मनसा [illegible]ः ग्राह्यः । हृन्मनीषाशब्दयोः भक्तिधृतिपरत्वम्, "सर्वत्र प्रसिद्धोप- इत्यत्र व्यासार्यैर्वर्णितम् । शिष्टं स्पष्टम् । (१३)

अङ्गुष्ठमात्रशब्दश्रवणकृतपरिच्छेदभ्रान्तिं व्युदस्यति **सहस्रे**ति । अनन्त-[illegible]ादिदिव्यविग्रहयुक्तविराड्रूपी सन्, — **दशाङ्गुल**शब्देनावयवो लक्ष्यते । [illegible]देन ब्रह्माण्डम् — पञ्चभूतपञ्चतन्मात्रारूपदशावयवयुक्तब्रह्माण्डमतिक्रम्य स्थित इत्यर्थः । (१४)

---

[illegible]सः परस्तादादित्यवर्णः स्थितः स तत्रत्यतयैव ध्येय इति विभुस्वरूपध्यानवत् तदप्य-[illegible] न क्लेशितव्यम् । स हि सौलभ्यवात्सल्यजलधिः सर्वेषामपि शरीरान्तरेव संनिवि-[illegible]नेऽपि फलप्रद इति ज्ञाप्यते **अङ्गुष्ठमात्र** इति । इहेदं पदं प्रमिताधिकरणोक्तरीत्या [illegible]म्; पञ्चमे तु जीवपरम्; प्रकरणात् । जनानां हृदयस्याङ्गुष्ठपरिमाणतया तदवच्छि-[illegible]त्मस्वरूपस्य व्यापिनोऽपि अङ्गुष्ठमात्रत्वम् । एतदुपपादनायैव **अन्तरात्मे**त्यादि । नामित्यस्य अन्तरात्मेत्यत्राप्यपकर्षः । जनसंबन्ध्यन्तःकरणावच्छिन्नोऽयमात्मेति इत्यर्थः । **सदा जनानां हृदये संनिविष्ट** इत्यस्य पुनस्तदेकार्थकत्वे पौनरुक्त्यात् [illegible]मात्मस्वरूपस्य सदा हृदयनिविष्टतयाः असंदिग्धतया सदेतिकथनवैयर्थ्याच्च हार्ददि-[illegible]ग्रहविशिष्टतया सदा स्थितिं दर्शयितुं द्वितीयः पादः । **सदे**त्यनेन दिव्यमङ्गलविग्रह-कालि परमाविर्भाव इति न मन्तव्यम्, किन्तु सर्वदा स्थितिरिति ज्ञाप्यते इत्येकोऽर्थः अन्यस्तु अयं बद्धावस्थायां सदेहत्वावस्थायामेवान्तरात्मेति न, किन्तु सदैवान्तरात्मा, जनहृदयसंनिविष्टस्वरूपहृदयावच्छिन्नत्वप्रयुक्तमङ्गुष्ठमात्रत्वमिति । अयं द्वितीय एवार्थो [illegible]भिप्रेतः । (१३)

[illegible]स्रशीर्षेत्यादेः, सर्वज्ञत्वात् सर्वशक्तित्वाच्च सर्वत्र शिरश्चक्षुःपादकार्यकरणसमर्थ इत्ये-[illegible]त्वमपि **सुबालोपनिषद्व्याख्यानादौ** दृष्टम् – अथापि श्रीगीताविश्वरूपाध्याय इव [illegible]स्रशीर्षत्वादेरेव सुवचत्वात् यथाश्रुतमेवार्थमाह **दिव्यविग्रहयुक्तविराड्रूपी**ति ।
[illegible]द्दार्थसमीक्षणं पुरुषसूक्तव्याख्याने द्रष्टव्यम् । [illegible]

पुरुष एवेदँ सर्वं यद् भूतं यच्च भव्यम् ।
उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥ १५ ॥

सर्वतःपाणिपादं तत् सर्वतोक्षिशिरोमुखम् ।
सर्वतःश्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ १६ ॥

---

यस्मात् पुरुषेण व्याप्तमिदं सर्वम्, अतः भूतभव्योपलक्षितं पुरुषात्मकमेवेत्याह **पुरुष एवेति** । [उक्तोऽर्थः।] **उताऽमृतेति** । अत्रा मुक्तिवाचिना मुक्तिस्थानं लक्ष्यते । अप्राकृतभोग्यभोगोपकरणसमृद्धं परमपदम् **अन्ने** प्रकृतिप्राकृतसंबन्धे **नातिरोहति** नोत्पद्यते, तस्याप्य ईशान इत्यर्थः । अतश्चोभयविभूतिनायकत्वमुक्तं भवति ।

**सर्वत** इति । सर्वतः पाणिपादादिकार्यकारि[1] तत्तत्कार्यमुखेन तिष्ठतीत्यर्थः । **गीताभाष्ये** च, 'सर्वतःपाणिपादं तत्' इति श्लो समये, "परस्य ब्रह्मणोऽपाणिपादस्यापि सर्वतः पाणिपादादिकार्यकृत्त्वं प्रत्यगात्मनोऽपि परिशुद्धस्य तत्साम्यापत्त्या सर्वतः पाणिपादादिकार्यकृत्त्वं मेव, 'निरञ्जनः परमं साम्यमुपैती'ति हि श्रूयते –" इति भाषितम् ।

1. कारित्वात्.

---

**अत्यतिष्ठ**दित्यत्र न भूतकालविवक्षा, सार्वकालिकसर्वपदार्थव्याप्तेरेव विव विवरीतुम्, अतिक्रम्य स्थितिरियं कुत्रेत्यत्र, परमपदे इति स्पष्टयितुञ्च पठ्यते पुरु **भव्यशब्दः**, 'भव्यगेये' त्यादिना भवतीति कर्तर्येव निपातितः । तेन वर्तमानग्रहण भव्यायोपदिश्यन' इत्यादिस्थल इव साध्यरूपार्थविवक्षया भविष्यदर्थकश्च । तेन कालः ग्रहणसिद्धिः । **अन्नशब्देन** प्राकृतपदार्थे भोग्यताबुद्धिस्थितिपर्यन्तममृतत्वस्य **दर्शितम्** ।

कार्यकरणाय शीर्षाद्यपेक्षाऽपि नेत्युच्यते **सर्वत** इति । **इति भाषितमि** जीवस्य विराड्रूपतुल्यरूपशालित्वे प्रमाणाभावात् तद्विषये तत्कार्यकृत्त्वपरतया गीताभाष्ये नेऽपि परमात्मनः साक्षात् तादृशविग्रहवत्त्वस्यैव संभवात् किमिति क्लिष्टं व्याख्येयमिति उच्यते – पाण्यादिदेशे पादाद्यसंभवेन सर्वतःपाणिपादत्वादिवर्णनमपि क्लिष्टमेव । पर मन्त्रैव, **विश्वतश्चक्षु**रिति मन्त्रेण तस्यार्थस्योक्तत्वात् पौनरुक्त्यं मा भूदिति अर्थान्तः तत्र भगवद्भाष्यकारसमतिरपि दर्शितेति ध्येयम् । एतदपौनरुक्त्याय च तत्र तदर्थवर्णे स एवार्थ इह वर्ण्यताम्; अयमर्थश्च तत्र । अस्तु कामम् । किं तेन? वस्तुत इह स **विवर्जितमिति** पदं श्रूयमाणं पाणिपादाद्यभावं बोधयत् पाणिपादादिकार्यकृत्त्वम् विवक्षितं दर्शयति । उपरि च **अपाणिपाद** इत्यादिश्लोकः ।

सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।
सर्वस्य प्रभुमीशानं सर्वस्य शरणं सुहृत् ॥ १७ ॥

नवद्वारे पुरे देही हंसो लेलायते बहिः ।
वशी सर्वस्य लोकस्य स्थावरस्य चरस्य च ॥ १८ ॥

---

सर्वेन्द्रियेति । सर्वेन्द्रियगुणैः सर्वेन्द्रियजन्यज्ञानैराभासः प्रकाशो ः
तथोक्तम् । इन्द्रियवृत्त्या विज्ञातुं समर्थमित्यर्थः । सर्वेन्द्रियवत्त्वमप्यैच्छिकमे
ाभाविकमित्याह सर्वेन्द्रियविवर्जितमिति । सर्वस्य प्रभुमिति । प्रभुत्वं सेवाप
वेन, ईशानत्वं नियन्तृतयेति द्रष्टव्यम् । 'निवासः शरणं सुहृद्गतिर्नारायणः' ः
ः निरवधिकवात्सल्यशालि[1] प्राप्यश्चेत्यर्थः । अलेशानशब्दस्य नपुंसकलिङ्गत्व
ाविशेषप्रत्यायकत्वशङ्कावकाश इति व्यासार्यैर्वर्णितम् । (१९

ननु सर्वतःपाणिपादत्वादिकं गीतासु परिशुद्धात्मस्वरूपे प्रसिद्धम् । तत
ुद्धस्वरूपस्यैव सर्वप्रभुत्वेशानत्वादिकमवगम्यत इति शिष्यशङ्कां शमयति न
इति । मलप्रस्रवणद्वारतया हेयैर्नवभिर्द्वारैर्युक्ते पुरवत् स्वात्यन्तभिन्ने अहमित्यि
ानो नानादेहसञ्चरणजङ्घालतया हंसशब्दितो जीवो नानादेहेषूच्चावचयोि
ायते गतागतं कुर्वन् परतन्त्रतया बम्भ्रमीतीति । अतः तस्य सर्वप्रभुत्वे
कः ? अतः ततः बहिः बाह्य एव स्थावरजङ्गमात्मकसर्वलोकसंसारतन्त्रवाह
ः । (१८

1. शालित्वेन.

---

आभासः प्रकाश इति । बाह्यविषयग्रहणमित्यर्थः । नपुंसकलिङ्गत्वादिति । ईशा
प्र शत्रन्ततया त्रिलिङ्गत्वात् तिष्ठतीति श्रूयमाणक्रियान्वयाय नपुंसकत्वमेष्टव्यमि
। न च प्रभुमिति द्वितीयान्तान्वयाय क्रियान्तरमध्याहार्यमिति इहापि द्वितीयान्तत्वं ह
स्त्वति शङ्क्यम् — क्रियान्तराध्याहारः, वाक्यभेदकल्पना, सुहृच्छब्दे द्वितीयान्तत्वकल
नेकदोषापत्तिभिया प्रभुमित्यत्र प्रथमान्तत्वकल्पनस्यैव युक्तत्वात् । (१'

एवमनेकपाणिपादादिमत्त्वेऽपि नास्य जीवसाम्यम् । बन्धस्वरूपयोग्यताया अप्यभावादि
त्यवताय इति । (१.

णिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः ।
त्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तम् ॥ १९ ॥

णीयान् महतो महीयानात्मा गुहायां निहितोऽस्य जन्तोः ।
तुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम् ॥ २० ॥

मेतमजरं पुराणं सर्वात्मानं सर्वगतं विभुत्वात् ।
नेरोधं प्रवदन्ति यस्य ब्रह्मवादिनो हि प्रवदन्ति नित्यम् ॥ २१ ॥

॥ इति श्वेताश्वतरोपनिषदि तृतीयोऽध्यायः ॥

---

णीति । पाणिपादाद्यभावेऽपि तत्कार्यकारी इतरावेद्यः स्वयं सर्वज्ञः कारणं महापुरुषं वदन्तीत्यर्थः । (१९)

गोरिति । सकलसूक्ष्मवस्त्वन्तःप्रवेशयोग्यसौक्ष्म्यवान् निरतिशयबृहत्त्वशाली स्य **जन्तोः** प्राणिनो जीवस्य **आत्मा** प्रेरकस्सन् सर्वजीवस्य हृदयगुहा- जन्तोरित्येतत् आत्मेत्यत्रापि च संबध्यते; आकाङ्क्षासत्त्वात् । **गुहाया-** हृदयगुहायामपि संबध्यते । तादृशम् **अक्रतुं** कर्मलेपशून्यं महामहि- ं यदा पश्यति, तदा **धातुः** धारकस्य परमात्मनः प्रसादाद्वीतशोको सीदत्यच्युतस्तस्मिन् प्रसन्ने क्लेशसंक्षयः' इति स्मृतेः । ततश्च ध्यान- प्रसादनिर्वर्त्यतया ज्ञानानिवर्त्यत्वेन (प्रसादनिवर्त्यतया ज्ञानानिवर्त्यत्वेन?) ात्वं प्रत्युक्तम् । (२०)

हमिति यस्य विभुत्वेन जन्माभावं प्रकर्षेण वदन्ति, तमजरं पुरातनं सर्वात्मानमहं **वेद** जाने इत्येवं ब्रह्मवादिनः नित्यं वदन्तीत्यर्थः ॥ (२१)

इति तृतीयाध्यायप्रकाशिका ।

---

रेण जीवसमस्यापि अदृष्टत्वविशिष्टद्रष्टृत्वादिरूपोऽतिशय उच्यते **अपाणीति**। (१९)

स्रशीर्षेत्यादिना प्रसक्ताशङ्कापरिहारमारब्धं समाप्य ततः प्राक्तनमन्त्रोक्तमुपसं- ते। 'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः' इति वक्ष्यमाण- ार्थ्यं युक्तमिति अत्र **यदा तदे**त्यध्याहारः । अन्यथा पुनः वैराग्याद् निरन्तरध्यानकृत् तत्प्रसादात् दर्शनसमानकारं ज्ञानं लभत इति अनध्याहारेण त् । मन्त्रोऽयं **कठवल्ल्या**मपि । (२०)

मिति मन्त्रानन्तरेण संदर्भेण वक्तव्यमुक्त्वा तदर्थो निगम्यते **वेदाहमिति**। **सर्व-** विषेषणम्। **विभुत्वादि**ति अपौनरुक्त्याय प्रभुत्वार्थकं सत उत्तरार्धोक्ति ॥(२१)

॥ अथ चतुर्थोऽध्यायः ॥

**एको वर्णो बहुधा शक्तियोगाद्वर्णाननेकान् निहितार्थो दधाति ।**
**चैति चान्ते विश्वमादौ स देवः स नो बुध्या शुभया संयुनक्तु ॥ १ ॥**

**तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः ।**
**तदेव शुक्रं तद् ब्रह्म तदापस्तत् प्रजापतिः ॥ २ ॥**

**त्वँ स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी ।**
**त्वं जीर्णो दण्डेन वञ्चसि त्वं जातो भवसि विश्वतोमुखः ॥ ३ ॥**

---

(४)

ब्रह्मणः सर्वविधकारणत्वं प्रपञ्चयिष्यन् तद्विषयबुद्धिप्रार्थनामन्त्रमाह **य एक**
'अकारो वै सर्वा वाक् । सैषा स्पर्शोष्मभिरभिव्यज्यमाना बह्वी नानाविधा
। ऐतरेयश्रुतेः, एकः अवर्णः **निहितार्थः** अर्थः = परं ब्रह्म स्ववाच्यत्वेन
यस्मिन् तथोक्तः परमपुरुषार्थभूतब्रह्मवाचकः—'अकारेणोच्यते विष्णु'रिति
तादृशोऽवर्णः सर्वान् वर्णान् **दधाति** उत्पादयति । [सः ?] **विश्वं** कृत्स्न
न्तकाले **व्येति**—अन्तर्भावितण्यर्थोऽयम्—गमयति नाशयति । स देवः
ध्या योजयतु । अत्र वाच्यवाचकयोरभेदोपचारात् स **देव** इत्युक्तिः । (१)

स्य देवस्य सार्वात्म्यमाह **तदेवाग्नि**रिति । **शुक्रं** रोचिष्ठम् । नक्षत्र-
र्थः । शिष्टं स्पष्टम् । (२)

देव सार्वात्म्यं संबोधनेनाह **त्वं स्त्री**ति । **दण्डेन** आलम्बनेन **जीर्णः** वृद्ध-
सि संचरसि । अत्यल्पमिदमुच्यते । त्वमेव सर्वरूपो जातोऽसीत्यर्थः । (३)

---

(४)

ाचकशब्दानां जगद्वाचकशब्दैः सामानाधिकरण्येन व्यवहारः न स्वरूपैक्यनिबन्धनः ;
भेदे सत्येव मुख्यः स्थित इति व्युत्पादनमत्र तुरीयेऽध्याये क्रियते । सेयं शुभा
े प्रथमम् **य एक** इति । शब्दस्य अपर्यवसानवृत्त्या ब्रह्मपर्यन्तवाचित्वरूपमहिमवशात्
ण्येन निर्देश इति ज्ञापनप्रवृत्तत्वादेवोपक्रमे अकारादन्येषां वर्णानामुत्पत्तिप्रस्तावः ।
र्ण इत्यस्य वर्णरहित इत्यर्थवर्णनेन नीलादिवर्णानां ब्राह्मणादिवर्णानां वोत्पादकत्वपर-
ाख्यानमानादेयम् । **निहितार्थ** इत्यर्थपद-**वर्ण**पदसमभिव्याहारबलस्वरसप्रतीत-
ागश्च न युक्तः । एवं प्रतिपाद्ये ब्रह्मणि अकारवाच्यत्वप्रतिपादनादयमध्यायोऽपि

**नीलः पतङ्गो हरितो लोहिताक्षस्तडिद्गर्भ ऋतवः समुद्राः ।**
**अनादिमत्त्वं विभुत्वेन वर्तसे यतो जातानि भुवनानि विश्वा**

**अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूप**
**अजो ह्येको जुषमाणोऽनु शेते जहात्येनां भुक्तभोगामजोऽ**

---

**नील** इति । नील–हरित–लोहिताक्षभेदभिन्नः **पतङ्गः** ।
[ तडिद्गर्भः ? ] ऋतवः समुद्राश्च । त्वमेवानादिः । यतो विश्वानि भूत
तदपि त्वमेव ; निखिलजगत्कारणमपि त्वमेवेत्यर्थः । नीलपतङ्गाद
स्वरूपेण; अपितु व्यापकत्वेनाऽऽत्मत्वादित्येतत् प्रदर्शयति **विभुत्वेन**
यतस्त्वं व्याप्य आत्मतया वर्तसे, तत सर्वात्मत्वमित्यर्थः ।

'भोक्ता भोग्यं प्रेरितारञ्च मत्वा', 'क्षरं प्रधानममृताक्षर'मिति
चिदचिद्विवेकं दर्शयति **अजामेका**मिति । तेजोबन्नलक्षणविकारगतलोहि
रूपयुक्तां स्वसमानरूपविविधभूतभौतिकस्रष्टीमुत्पत्तिरहितां काञ्चन क
उत्पत्तिराहित्येन तत्समान एव सन् तत्राहम्बुध्या सेवमानः तामनुसृत्य शे
अपरो विद्वान् कञ्चित् कालं भुक्त्वा उत्पन्नवैराग्यः त्यजतीत्यर्थः ।

नन्वस्मिन्नजामन्त्रे स्वरसत एतावान् अर्थः प्रतीयते — कामि
त्रिवर्णां स्वसरूपबहुप्रकाराम् (प्रजाकरीम् ?) एकश्छागः प्रीयमाणोऽनुवर्त
तामुपभुक्तां त्यजतीति । कथं भवदुक्तप्रकृतिरूपार्थग्रहणम् ? यदि च
लौकिकार्थप्रतिपादनानौचित्यात् आध्यात्मिकार्थे पर्यवसानं कर्तव्यमिति,
सुपर्णा' इति मन्त्रे वृक्षसुपर्णपिप्पलशब्दैः शरीरजीवकर्मफलानां गौण
ग्रहणवत् , 'गौरनाद्यन्तवती' इत्यत्र गोशब्देन गौण्या वृत्त्या प्रकृ
इहाप्यजाशब्देन गौण्या वृत्त्या प्रकृतिग्रहणं युक्तम् । न तु यौगिकार्थ
रूढिपूर्वकलक्षणाविशेषरूपगौण्यपेक्षया योगदौर्बल्यस्य प्रोद्गात्रधिकरणे नि

---

**विभुत्वेन वर्तसे** इत्युक्तम् । इयञ्च व्याप्तिः अचेतने चेतने चेति विस्त
शरीरात्मभावनिबन्धनमेव सामानाधिकरण्यमिति विवेकार्थम् **अजा**मित्यादिना । लो
**कृष्णा**मिति [illegible]

'प्रैतु होतुश्चमसः प्रोद्गातृणा' मित्यत्रापि यौगिकवृत्त्या उद्गात्रादीनां ग्रहणं स्यादिति चेन्न —

मुख्यार्थानुपपत्तौ हि गौणार्थाश्रयणं युज्यते। उपपद्यते चाजाशब्दे यौगि- मुख्यस्य ग्रहणम्। न चैवं प्रोद्गातृन्यायविरोधः। तत्र पाशन्यायेन विवक्षा नास्ति; प्रोद्गातृशब्दयौगिकार्थबहुत्वस्य संभवात्। 'अदितिः प्रमुमोक्तु' इत्यत्र रूढ्यर्थस्य वा यौगिकार्थस्य वा पाशशब्दार्थस्य बन्धन- संभवात् बहुत्वाविवक्षा। इह तु तत्संभवात् नाविवक्षेत्येवं (व?) तदधि- तिः। न तु रूढिपूर्वक[1]लक्षणापेक्षया योगस्य जघन्यत्वमित्यपि। नन्वेवं स्यापि गानकारितया योगार्थत्वात् तस्यापि ग्रहणप्रसङ्ग इति चेन्न—तस्य सदसि वेन तत्साधारण्याभावात्। मीमांसकैकदेशिभिः तत्साधारण्यस्याभ्युपेतत्वाच्च। ततश्च यौगिकार्थस्य मुख्यस्याजाशब्दार्थस्य संभवे परीत्या छागत्वरूपणं गौण- णश्चायुक्तम्। 'गौरनाद्यन्तवती'त्यत्र गोशब्दे यौगिकार्थास्फुरणात्, 'सर्व- ' मिति दोहनस्य गोशब्दरूढ्यर्थग्रहणनियामकस्य सत्त्वाच्च तत्र तथा; इह तु रूतैः रूढ्यर्थग्रहणनियामकशब्दान्तरसमभिव्याहाराभावाच्च यौगिकार्थ एवग्राह्यः। किञ्च इह रूढ्यर्थग्रहणे समभिव्याहृतानाम्, 'बह्वीः प्रजास्सृजमानाम्' ां संकोचः स्यात्। छाग्याः प्रकृतिवत् सकलप्रजास्रष्टृत्वासंभवात्। सकल- रप्रकृत्यामल्पप्रजासर्गकारिच्छागीत्वपरिकल्पनस्य विच्छित्तिविशेषाहेतुत्वात्। म्, 'आत्मानं रथिनं विद्धी' त्यादौ आत्मशरीरादौ रथिरथत्वादि- पि न विच्छित्तिविशेषजनकं स्यादिति वाच्यम्। तत्र रूप्यरूपकवाचि- वणबलेन वशीकार्यताप्रतीत्युपयुक्ततया च रूपणमङ्गीक्रियते। प्रकृते तु कवाचिपदद्वयाश्रवणात्, तद्वदत्रोपयोगाभावाच्च न छागत्वपरिकल्पनम्। 'द्वा

[1]. लक्षणाया योगापेक्षया।

तत्साधारण्यस्याभावादिति। अत एव तस्य गानकारिगणान्तर्गतत्वेऽपि गानकारित्व- वित्त्वमपि नास्तीति भावः। एकदेशिभिरिति। सूत्रभाष्यस्वरसगतिमनुगतैः प्राभा- ः। ३. ५. ७. प्रोद्गात्रधिकरण इदं द्रष्टव्यम्।

यौगिकार्थस्य मुख्यस्येति। अन्यथा, 'अजोऽपि सन् अव्ययात्मे' त्यादावपि थमपि ग्रहणं कर्तव्यं स्यादिति भावः।

सुपर्णे' ति मन्त्रेऽपि वृक्षादिशब्दैर्योगवृत्त्याऽर्थग्रहणं युक्तम् । समासोक्त्या
स्फूर्त्या विच्छित्तिविशेषोऽस्तीत्येतावन्मात्रम् । यदि च न वृक्षादिशब्दैः
यौगिकार्थग्रहणम्, तर्हि, 'गौरनाद्यन्तवती' तिवदस्तु । प्रकृते तु
यौगिकार्थस्य स्फुटप्रतीतेः योग एव ग्राह्यः । एतत् सर्व, "कल्पनोपदेशा
सूत्रभाष्यश्रुतप्रकाशिकयोः स्पष्टम् । अनेन प्रकृतिस्वरूपं बद्धमुक्तस्वरूपं

ननु अजाशब्देन अकार्यत्वप्रतिपादनात् **सृजमाना**मिति कर्तृ
स्वातन्त्र्यलक्षणकर्तृत्वप्रतीतेः अब्रह्मात्मिकैव प्रकृतिरनेन मन्त्रेणाभिधीय
चेत् — एवमेव समन्वयाध्याये पूर्वपक्षे प्राप्ते उच्यते —

"चमसवदविशेषात्" । 'अर्वाग्बिलश्चमस ऊर्ध्वबुध्नः तस्मिन्
निहितं विश्वरूप' मिति मन्त्रे, 'अर्वाग्बिलश्चमस' इति ऊर्ध्वबिलेति
प्रसिद्धचमसव्यावर्तकस्य शिरसश्चमसत्वप्रत्यायकस्य वाक्यशेषस्य सद्भाववत्
अस्वतन्त्रप्रकृतिव्यावर्तकस्य सांख्याभिमतस्वतन्त्रप्रकृतिप्रतिपादकस्य वाक्यशेषस्य
भावेन स्वतन्त्रा प्रकृतिरिहाभिधीयत इति निर्णयासंभवात् । ब्रह्मात्मकत्वेऽपि
राहित्यस्योपपत्तेः । परतन्त्रेऽपि तक्षादौ, 'तक्षति काष्ठ' मिति कर्त्रर्थप्रत्यय
तावन्मात्रेण अपरतन्त्रप्रकृतित्वनिश्चयासंभवात् ।

ननु ब्रह्मात्मकप्रकृतिग्रहणेऽपि नियामकाभावात् संदेह एव स्यात् ।
"ज्योतिरुपक्रमा तु तथा ह्यधीयत एके" । 'अथ यदतः परो दिवो ज्योतिर्दीप्यते'
ज्योतिश्शब्देन ब्रह्मनिर्देशदर्शनात् इह सूत्रेऽपि ज्योतिश्शब्देन ब्रह्मोच्यते ।
शब्दः कारणत्वार्थकस्सन् आत्मत्वं लक्षयति । मृत्कारणकस्य घटादेः मृदात्मकत्ववद्
तथाच (ततश्च) ज्योतिरुपक्रमा=ब्रह्मात्मिकेत्यर्थः । ब्रह्मात्मिकैवाजेह मन्त्रे

---

योग एव ग्राह्य इति । रूढ्यर्थग्रहणे अजेयं संगमार्हावस्थापन्ना वा अन्या वा ।
एकोऽजो न जुषमाणोऽनुशयात । आद्ये, तामन्योऽजः, इयं प्राग् भुक्तभोगा, तस्मान्माऽ
जुगुप्सया त्यजतीति लोके किं दृष्टम् ? प्रबलेनाजेन स्पर्धितुमशक्त्या तु त्यजेत् ।
इत्यर्थोऽपि इत्यभिप्रायः ।

परतन्त्रेऽपि तक्षादाविति । भृतिलिप्सया परप्रेरणावशादेव हि स तक्षति । तथा
अतकारकान्तरव्यापारानधीनव्यापारशालित्वरूपकर्तृत्व [illegible]

' देवात्मशक्तिं स्वगुणैः निरूढाम्' इति ब्रह्मात्मकाजाया एव प्रतिपादितत्वात् ।
, ' अणोरणीयान् महतो महीयान्' इति ब्रह्म प्रस्तुत्य, ' सप्त प्राणाः प्रभवन्ति
ति प्राणोपलक्षितसकलप्रपञ्चोत्पत्तिमभिधाय निर्विकारस्य ब्रह्मणोऽपरिणामितया
ञ्चोपादानत्वं न संभवतीति शङ्कावारणाय पठितस्यास्य मन्त्रस्य ब्रह्मात्मकप्रकृति-
वक्तव्यतया इहापि तथात्वावश्यम्भावाच्च ब्रह्मात्मिकैव प्रकृतिरजामन्त्रप्रतिपाद्या ।
नन्वाकाशादीनां ब्रह्मोपादानकत्वेन ब्रह्मात्मकत्ववत् प्रकृतेरपि ब्रह्मोपादान
ब्रह्मात्मकत्वस्य वक्तव्यतया अनुत्पन्नायाश्च तस्याः ब्रह्मोपादानकत्वासंभवेन
त्वासंभव इत्याशङ्क्याह, " कल्पनोपदेशाच्च मध्वादिवदविरोधः " । कल्पनं
' धाता यथा पूर्वमकल्पय ' दिति प्रयोगदर्शनात् । ' अस्मान्मायी सृजते
त् ' इति मायाशब्दशब्दितप्रकृतेः ब्रह्मोपादेयप्रपञ्चसृष्टौ हेतुत्वावेदना-
। प्रकृतेरब्रह्मात्मकत्वे च तस्याः, ' अस्मान्मायी सृजते विश्वमेतत् ' इति
तब्रह्मोपादानतानिर्वाहकत्वाभावात् तस्याः ब्रह्मात्मकत्वं सिद्धम् । अपृथक्सिद्धा-
त्रेणाप्यात्मत्वोपपत्त्या अजन्याया अपि प्रकृतेः ब्रह्मात्मकत्वं संभवत्येवेति
त्वमविरुद्धम् । मध्वादिवत् । अत्र मधुशब्देन, ' असावादित्यो देवमधु '
दिष्ट आदित्य उच्यते । आदित्यवदित्यर्थः । यथा आदित्यस्य, ' नैवोदेता
ा ' इत्यकार्यतया श्रुतस्यैव, ' य आदित्ये तिष्ठन् ' इत्यादिना ब्रह्मात्मकत्वञ्च,
रप्युपपद्यते ब्रह्मात्मकत्वमिति स्थितम् । प्रकृतमनुसरामः । (५)

---

उपक्रमे इति । अनेन ज्योतिः उपक्रमे यस्याः, यन्निरूपणारम्भविषयीभूतं ज्योतिः ;
क्रम्य तन्मुखेनैव निरूपितेयं प्रकृतिरित्यपि सूत्रार्थवर्णनं सूचितम् । **ब्रह्मोपादानकत्वेन**
**कत्वमिति** । ननु यत् यदुपादानकम्, तत् तदन्तर्यामिकमिति व्याप्त्यभावात् कथमिद-
त् — ब्रह्मात्मकत्वं नाम तदपृथक्सिद्धत्वमित्यविज्ञाय, मृदात्मको घट इति मृदुपादानके
व्यवहारवत् अयं व्यवहार इति बुद्धया शङ्का ; अपृथक्सिद्धाधारत्वप्रतिबोधनेन परिहार
द्धा ज्योतिरुपक्रमेति पदं ब्रह्मोपादानकत्वार्थकं सत् ब्रह्मात्मकत्वलक्षकमित्युक्तम् । अजाय-
प्रकृतौ ब्रह्मोपादानकत्वाभवात् तन्मुखेन ब्रह्मात्मकत्वमत्र कथमुच्यत इति शङ्का ।
तु ज्योतिरुपक्रमात्वं नाम ज्योतिरधीनोत्पत्तिकत्वम् । तत् प्रकृतेरक्षतम्, महदादिरूपेण
रूपोत्पत्तिमत्त्वात् । तथाच अजागतं लोहितादिरूपबहुप्रजारूपभवनम् अजामन्त्रोक्त
मिति सौत्रेण ज्योतिरुपक्रमेति पदेनोच्यत इति । इत्थञ्च ज्योतिरधीना उत्पत्तिः कारणा-
पि ब्रह्मात्मकत्वं गमयतीति अब्रह्मात्मकाजापक्षः सांख्यसंमतः शमितो भवतीति । (५

**द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।**
**तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति ॥ ६ ।**
**समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः ।**
**जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ॥**

प्रकृतिसंबन्धाविशेषेऽपि जीवस्य भोक्तृत्वम्; न परमात्मन इत्येतत् मुखेन प्रदर्शयति **द्वा सुपर्णे**ति । युज्यत इति **युक्**छब्दो गुणपरः । "गुणकः सयुक्" इति **व्यासार्यै**र्विवृतत्वात् । **सखायौ** परस्पराविनाभूतौ साधनत्वेन पर्णशब्दितपक्षसदृशज्ञानादिगुणवन्तौ **समानम्** एकं **वृक्षं** छेदनार्हं शरीरं समाश्रितौ । तयोर्मध्ये एको जीवः परिपक्कं **पिप्पल**मश्वत्थप कर्मफलमश्नाति । इतरस्तु परमात्मा अनश्नन्नेव अपहतपाप्मत्वादिमहामहिमशाले इत्यर्थः । अत्र शरीर-तदाश्रयजीव-परवाचिशब्दनिगरणेन विषयिवाचकवृक्ष-सु शब्दैः वृक्षत्वाद्यध्यवसानलक्षणा रूपकातिशयोक्तिर्विच्छित्तिविशेषायेति केचित् दिशब्देन योगवशाच्छरीरादिप्रतीतिः; न तु रूपकातिशयोक्तिरित्यन्ये ॥

**समान** इति । **अनीशया** भोग्यभूतया प्रकृत्या **मुह्यमानः**, "पराभि तिरोहित"मिति सूत्रोक्तन्यायेन तिरोहितपरमात्मशेषत्वज्ञानान्दलक्षणस्वस्व वृक्षवच्छेदनार्हे एकस्मिन् शरीरे जीवः, 'स्थूलोऽहं' 'कृशोऽह' मिति त बुध्या पांसूदकवत् तदेकतामापन्नस्सन् तत्संसर्गकृतानि दुःखान्यनुभवति । यद जीवो निमग्नात् स्वस्मात् धारकत्वनियन्तृत्वशेषित्वादिना विलक्षणं स्वकर्मभि परमात्मानम्, अखिलजगदीशनलक्षणमस्य महिमानञ्च पश्यति, तदा वी भवतीत्यर्थः । केचित्तु—**अनीशया** अनीशत्वेन असमर्थत्वेन शोचन् स्वोद्धर स्वयं पङ्कादाविनिमग्नं स्वस्मिन् प्रीतिमन्तं तदुद्धरणसामर्थ्यलक्षणमहिमान

बद्धमुक्तवैलक्षण्यमुक्तम् । जीवब्रह्मवैलक्षण्यमुच्यते **द्वा** इति । ज्ञानशक्ती पर्णे । बद्धे कर्मवासनादिरूपा । **अश्वत्थफले**ति । कर्मफलस्य क्षयित्वात् श्वो न स्थास्यतीति अश्वत्थत्वम् । तादृशेऽप्यहो स्वादुताबुद्धिर्बद्धस्य । (६)

अस्य बद्धस्य, 'जहात्येनां भुक्तभोगा' मित्युक्तावस्थालम्भनार्थमेव स इहाभिचाव स द्रष्टव्य इत्युच्यते **समान**इति । **जुष्ट**मिति । तस्य प्रीतिः अस्य तस्मिन् प्रीतिरूपा नायत्ता । दर्शनस्य प्रीतिरूपापन्नता च महिम्नो वेदने निरतिशयैश्वर्यादिना सर्वप्रक

ोऽक्षरे परमे व्योमन् यस्मिन् देवा अधि विश्वे निषेदुः ।
ान्न वेद किमृचा करिष्यति य इत् तद् विदुस्त इमे समासते ॥८॥
ांसि यज्ञाः क्रतवो व्रतानि भूतं भव्यं यच्च वेदा वदन्ति ।

---

ति । तत्समाधिरत्रानुसन्धेयः । "अनीशया प्रकृत्ये" ति भाष्यमपि व्यानपरम् । ; न त्वनीशाशब्दार्थतयेति वदन्ति । (७)

इति । न क्षरतीत्यक्षरम् । तादृशे, **ऋचः** ऋक्छब्दोपलक्षित- **परमे व्योमन्** परमाकाशे परमतात्पर्यविषये यस्मिन्नक्षरे सर्वे देवाः तत् अक्षरं यो न वेद, सः अधीतेन ऋग्वेदादिना किं करिष्यति ? भारवाहः (हारः) किलाभूदधीत्य वेदं न विजानाति योऽर्थम् । ', रं गार्गि अविदित्वाऽस्मिन् लोके जुहोति यजते तपस्तप्यते बहूनि , अन्तवदेवास्य तद् भवती'ति श्रुतेः । ये च तदक्षरं जानन्ति, ते ः सुखमासत इत्यर्थः । इमं मन्त्रं विश्वदेवशब्दितनित्यसूर्याश्रय- ायापि योजयन्ति । 'तदक्षरे परमे व्योमन्' इत्यस्य **वेदार्थसंग्रहे** योजितत्वात् । (८)

**ांसीति** । वेदं वैदिकमर्थजातं मायाप्रेरकः परमात्मा **अस्मात्** माया- नात् सृजते । अतश्च अपरिणामिनोऽप्युपादानत्वमविरुद्धम् । ननु जीवस्य

---

न् ज्ञानादिति ज्ञापनार्थं **महिमान**मित्यधिकमुक्तम् । एतन्मन्त्रद्वयविवरणं **गुण्ड-** ( । (७)

ातिरिक्तोपायनिषेधपरम् **ऋचोक्षरइति** । वीतशोकत्वं प्रागुक्तं यत्र देशे संपद्यते, तद्देशप्रदर्शकं वा । तथाच **अक्षरपदं** परमात्मपरं वा स्थानपरं

: करिष्यतीति ऋगादिवैयर्थ्ये वर्णिते, तर्हि किमर्थं तत्स्थितिरित्याशङ्का प्राप्ता । ांसीति । सर्वं निरोधार्थमेव, बन्धनार्थमेवेति भावः । **अस्मा**दित्यस्योपादानपरत्वं ावगम्यते । उपादानञ्च प्रकृतिः प्राक् **अजाम् अनीशये**ति स्त्रीलिङ्गनिर्दिष्टा । े नपुंसकमिहेति सूचयति साधनादिति । ननु ईश एवोपादानभूतः **अस्मा**दिति । च तर्हि **मायी**ति निर्दिष्टः तस्मादन्यः प्रसजेदिति वाच्यम्—तथासति

**अस्मान्मायी सृजते विश्वमेतत् तस्मिँश्चान्यो मायया संनिरुद्धः ।**

**मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।**

**तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् ॥ १० ॥**

---

स्रष्टृत्वं किं न स्यादित्याशङ्क्याऽऽह **तस्मिंश्चान्यो मायया संनिरुद्धः** । अन्यो तदाश्रितमायामोहितः । अतः तस्य मायाप्रेरकत्वाभावान्न स्रष्टृत्वमिति भावः ।

माया नाम का ? तत्प्रेरकश्च क इत्यत्राह **मायां** त्विति । त्रिगुणा प्रकृतिं विचित्राश्चर्यसर्गहेतुतया मायाशब्दितां विद्यात् । [1] मायाप्रेरकस्तु इति विद्यादित्यर्थः । न च महेश्वरशब्दो देवतान्तरवाचक इति शङ्क्यम्— ीयके , 'यद्वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः । तस्य प्रकृतिलीन रः स महेश्वरः' इत्यकारवाच्यस्यैव नारायणस्य महेश्वरशब्दार्थत्वाभिधान ष्टव्यम् । तस्यापृथक्सिद्धविशेषणतया तदंशभूतैर्जीवैः सर्वमचेतनं व्याप्तमित तश्च जगदन्तर्गताः तदपृथक्सिद्धविशेषणतया तदंशभूता इत्यर्थः ।

1. मायायाः

---

स्मिन् **मायया संनिरुद्ध** इति प्रयोगस्वारस्यात् तच्छब्दमायाशब्दार्थयोरपि भेदावश्यम्भा वेन्न – **तस्मि**न्निति ईशग्रहणे तत्र संनिरुद्धत्ववर्णनायोगात् । एवं वाऽस्तु—**अस्मा**दिति हिमार्थकम् । महिमबलात् मायी विश्वं सृजति । महिम्नि च जीवो निरुद्धः कुण्ठित द्वेदनाद् व्यावर्तित इति यावत् । यद्वा, पूर्वं **पश्यति, वेद** इत्युक्तं वेदनम् **अस्मा**दित्यु दनाद्धेतोः = तदर्थमेव मायी सृजते । अयं तु मायापरवशः ऋगादिदर्शितक्रत्वादिजन स्थिरजगदैश्वर्यनिमग्नो वेदने निरुद्धगतिरित्येवम् । वस्तुतः भाष्योक्तमेव श्रीभाष्या १.४.९) । (९)

या प्राक् अजा उक्ता सैव माया, यश्च प्रागुक्त ईशः स एव मायीत्युच्यते अन्यत्व वृत्त्यर्थम् **माया**मिति । **त्रिगुणात्मि**केति । पूर्वं **लोहितशुक्लकृष्णा**मित्यनेन स्तमोमयत्वस्यापि कथनसंभवात्, 'देवात्मशक्तिं स्वगुणैर्निगूढाम्,' 'दैवी ह्येषा गुणमय ाये' ति श्रुतिस्मृत्यनुसाराच्चेदम् । अत्राप्यध्याये, 'य एकोऽवर्णः — विश्वमादौ स देवः कारवाच्यं देवं प्रस्तुत्य तत्संबन्धिनी अजा प्रस्तुता । एवंभूतदेवसंबन्धिनी माया येति गायंश्च भगवान् अत्र महेश्वरशब्दस्य स्वार्थकत्वं गमयन् तैत्तिरीयसंवादं द्रढयति ।

**यो योनिं[1] योनिमधितिष्ठत्येको यस्मिन्निदं सञ्च वि चैति सर्वम् ।**
**तमीशानं वरदं देवमीड्यं निचाय्येमां शान्तिमत्यन्तमेति ॥ ११ ।**

**यो देवानां प्रभवश्चोद्भवश्च विश्वाधिपो रुद्रो महर्षिः ।**
**हिरण्यगर्भं पश्यत जायमानं स नो बुध्या शुभया संयुनक्तु ॥ १२ ।**

1. योनिर्योनिं ।

---

**यो योनि**मिति । **योनि**शब्देन जगद्योनिभूता प्रकृतिरुच्यते इति व्या· र्याख्यातम् । न च तथा सति तस्या एकत्वात् वीप्सानुपपत्तिरिति शङ्क्यम्— दीनामपि पञ्चभूतात्मकजगद्योनित्वेन वीप्सोपपत्तेः । ततश्च जगद्योनिभूतान महदादीन् योऽधितिष्ठति, यस्मिंश्च विश्वमेतत् उत्पत्तिकाले वियदादिरूपेण वैविध्यमेति; संहारकाले च **समेति** ऐक्यं गच्छति । तादृशमाश्रिताभीष्टदायिनं दर्शनसमानज्ञानेन विषयीकृत्य रागद्वेषादिप्रागभावासहकृतत्वलक्षणात्यन्ति- तां श्रुत्यादिसिद्धां सर्वानर्थशान्तिमाप्नोतीत्यर्थः । 'यस्मिन्निदं सञ्च वि चैति मिति प्रतिपाद्यमानमुपादानत्वं निर्विकारस्याऽऽत्मनः कथमिति शङ्कावारणाय, 'योनिमधितिष्ठती' ति प्रकृत्यादिशरीरकत्वादुपपद्यत इति शिष्यानुग्रहार्थं पुनः कथनमिति द्रष्टव्यम् । (११)

तज्ज्ञाने तदनुग्रह एव कारणमिति तं प्रार्थयते **यो देवाना**मिति । यो ां] जायमानं हिरण्यगर्भम्, 'असावप्रतिहतज्ञानादियुक्तस्स्या' दिति सानुग्रह- । स मां वीक्षतामिति भावः । (१२)

---

**अस्मान्मायी सृजते** इति निमित्तकारणत्वं ब्रह्मणोऽवगमितम्; उपादानत्वमपि च्यते **यो योनि**मिति । **वीप्सोपपत्ते**रिति । 'अष्टौ प्रकृतय' इति प्रकृतित्वं तेषामपि द्धमिति । **टीकायां** योनिमित्येकपदमात्रव्याख्यानम्, 'यो योनिर्योनि' मिति पाठानु- पि सुवचम् । योनिरिति ब्रह्मविशेषणम् । (११)

द्वारकसमष्टिकारणस्य व्यष्टिहेतुत्वं हिरण्यगर्भद्वारकं प्रमाणान्तरप्रसिद्धमनूद्य बुद्धिप्रार्थना ो **देवाना**मिति । उक्तरीत्या देवादिसर्वनिमित्तोपादानभूतः हिरण्यगर्भमुत्पाद्यानुगृह्णाति ।

[illegible]

**यो देवानामधिपो यस्मिन् लोका अधिश्रिताः ।**
**य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ।**

**सूक्ष्मातिसूक्ष्मं कलिलस्य मध्ये विश्वस्य स्रष्टारमनेकरूपम् ।**
**विश्वस्यैकं परिवेष्टितारं ज्ञात्वा शिवं शान्तिमत्यन्तमेति ॥**

**स एव काले भुवनस्य गोप्ता विश्वाधिपः सर्वभूतेषु गूढः ।**
**यस्मिन् युक्ता ब्रह्मर्षयो देवताश्च तमेवं ज्ञात्वा मृत्युपाशांश्छिनत्ति**

---

**यो देवानामधिप** इति । सर्वचिदचित्प्रपञ्चशेषिणे सर्वाधारभूता नियन्त्रे तस्मै परमात्मने पुरोडाशादिहविषा पूजां कुर्वीमहीत्यर्थः । य तदाराधनं तदुपासनद्वारा तत्प्राप्तिसाधनमिति भावः ।

**सूक्ष्मातिसूक्ष्म**मिति । सूक्ष्मवस्तुष्वप्यन्तःप्रवेशयोग्यं कार्यब्र हिरण्यगर्भप्रजापत्याद्यनेकरूपेणावस्थाय विश्वस्रष्टारं सर्वान्तर्यामित्वेऽप्यनव परमात्मानं ज्ञात्वा मुक्तो भवतीत्यर्थः ।

**स एव काल** इति । ब्रह्मविदो मुनयो देवताश्च यत्र मनो ये स एव परमात्मा कर्मपरिपाककालविशेषे जगतः **गोप्ता** संसारमोचकः ; **विश्वाधिपः सर्वभूतेषु गूढः ।** सर्वशेषित्वात् सर्वान्तर्यामित्वा शेषशेषिभावशरीरात्मभावसंबन्धसत्त्वात् तादृशस्य शक्तस्य मोचकत्वौ भावः । **तमेव**मिति । अनेनाऽऽकारेण तं **जानन्** दर्शनसमानाकारज्ञानेन कुर्वन् मुक्तो भवतीत्यर्थः ।

---

ननु निष्कामकर्मकरणात् बुद्धिः शुभा जायते । कर्माणि च नानादेवता तत् कथं **स नो देव** इत्यादि ? इत्यत्र, सर्वान् देवान् प्रत्यपि तस्यान्तरात्मत्वात् स ए समाराध्य इति ज्ञाप्यते **यो देवानामधिप** इति । अत्र शेषित्वाधारत्वनियन्तृत्वरू आत्मत्वप्रयोजकमुदितम् । कस्मै इति तस्मै इत्यत्र पर्यवसन्नम् । तं विना अन्यस्मै कर्म कुर्याम, तस्मै एकस्मै सर्वदेवात्मने कुर्यामेत्यर्थः । एवञ्च देवानां काम्यकर्मा निष्कामकर्माराध्यत्वं न भवतीति अत्र सूचितम् । (१३)

**घृतात् परं मण्डमिवातिसूक्ष्मं ज्ञात्वा शिवं सर्वभूतेषु गूढम् ।**
**विश्वस्यैकं परिवेष्टितारं ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥ १६ ॥**
**एष देवो विश्वकर्मा महात्मा सदा जनानां हृदये संनिविष्टः ।**
**हृदा मनीषा मनसाऽभिकॢप्तो य एतद्विदुरमृतास्ते भवन्ति ॥ १७ ॥**
**यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासच्छिव एव केवलः ।**
**तदक्षरं तत् सवितुर्वरेण्यं प्रज्ञा च तस्मात् प्रसृता पुराणी ॥ १८ ॥**

---

**घृतादिति ।** यथा घृतस्य सारांशः सूक्ष्मः क्षीरव्यापी, एवं सर्वत्र सूक्ष्म-ज्ञानतया, व्याप्य वर्तमानत्वेऽप्यनवद्यतया मङ्गळभूतं भगवन्तं ज्ञात्वा मुक्तो र्थः । (१६)

**एष देव इति ।** विश्वं **कर्म** — क्रियत इति कर्म — कार्यं यस्य स । जगत्कर्तेत्यर्थः । इतरत् उक्तार्थम् । (१७)

गायत्रीप्रतिपाद्यत्वमपि तस्यैवेत्याह **यदा तम** इति । यस्मिन् काले सदस-तमूर्तामूर्तप्रपञ्चं दिवारात्रविभागञ्चान्तरेण तमोमात्रमवस्थितम् , तस्मिन् काले, दषु प्रलीनेषु नष्टे स्थावरजङ्गमे । [ आभूतसंप्लवं प्राप्ते प्रलीने प्रकृतौ महान् ] इति विश्वात्मा स तु नारायणः प्रभुः ' इत्युक्तरीत्या ज्ञानसंकोचलक्षणा-रेण केवलं शुभतयाऽवस्थितम् ; तदेव क्षरणशून्यं वस्तु ; सवितृमण्डलमध्यवर्ति; ं भजनीयञ्च तदेव । तस्मादेव हेतोः सृष्टिकाले प्रजानां संकुचितज्ञानस्य । प्रसरणमिति भावः । **प्रज्ञा च तस्मा**दित्यनेन, ' धियो यो नः प्रचोदयात् ' तिपाद्यत्वमपि तस्यैवेत्युक्तं भवति । (१८)

---

**घृतात् पर**मिति । क्षीरदध्यादौ सूक्ष्मं सत् व्याप्तमेव मण्डं भूत्वा घृतं भवति । अतो **पर**मिति क्षीरादिव्यापनक्षमात् घृतपरिणामादप्युत्कृष्टा पूर्वावस्थोच्यते । (१६)

**अन्यदुक्तार्थ**मिति । तृतीये त्रयोदशमन्त्र इति शेषः । (१७)

एवं बहुभिर्मन्त्रैः तज्ज्ञानस्यैवामृतत्वहेतुत्वमुपवर्ण्य संध्योपास्तिप्रभृतिसर्वकर्माराध्यत्वात् ास्य प्रीतस्य शुभबुद्धिप्रेरकत्वं प्रागुक्तं युक्तमिति निगम्यते **यदे**ति । यदा तम इत्यत्र भावात् न प्रलये तमोनिषेधः । अत इदं तमः प्रागुक्ता मायेति ज्ञायते । स्पष्टमिदं सुबाले । ब्राह्मणे बृहदारण्यकगते सदिति तेजोबन्नरूपं मूर्तं गृहीत्वा तदन्यस्य वायोरन्तरिक्षस्य मुक्तम् । तदत्रानुसंधापयति **मूर्तामूर्ते**ति । **यदे**त्यस्य **तदि**ति प्रतिसंबन्धि । अत्र, यदा तदा दिवारात्र्यादिकं विना केवलः शिवः स्थित इत्यर्थस्य वर्णनीयत्वेऽपि यच्छब्दघटित-

नैनमूर्ध्वं न तिर्यञ्चं न मध्ये परिजग्रभत् ।
न तस्य प्रतिमा अस्ति यस्य नाम महद् यशः ॥ १९ ॥
न संदृशे तिष्ठति रूपस्य न चक्षुषा पश्यति कश्चनैनम् ।
हृदा हृदिस्थं मनसा य एनमेवं विदुरमृतास्ते भवन्ति ॥ २०

---

**नैन**मिति । ऊर्ध्वस्थाण्वादिरूपतया, पश्वादितिर्यग्रूपतया, तदुभयवि
नुष्यादिरूपतया सन्तमप्येनं कोऽपि जनः परितः[1] सम्यक् समन्तात् **न ज**
ाग्रहीत् । यद्वा ऊर्ध्वदेशादिषु[2] न कोऽपि ज्ञातवान् । तस्य विभुत्वादिति भ
**ास्य महद्यश इति नाम** यस्त्वपरिच्छिन्नकीर्तिः प्रसिद्धः, तस्य सदृशं
ास्तु नास्तीत्यर्थः । (१

................................................................(२

1. परितः सम्र प. 2. ऊर्ध्वप्रदेशे वा तिर्यक्प्रदेशे वा.

---

क्ये **न दिवे**त्याद्यंशघटनं भाष्ये कृतं **तमश्**शब्देन स्थूलावस्थारहितस्य तमस एव ग्राह्यत
य । **न दिवे**त्यादिना जडप्रपञ्चस्य तदा निषेधवत् जीवप्रपञ्चस्यापि तदा निषेधार्थं **शिव**
**ेवल** इति । शिवः केवलः स्थितः ; अशिवः दुःखाक्रान्तो व्यष्टिजीवप्रपञ्चो नासीदित्
स्य वाक्यस्य शिवसद्भावविधौ न तात्पर्यम् । किंतु विवक्षितनिषेधे । एवकारसत्त्वे वा
र्थविधानपरत्वात् । अतश्च यः शिवः प्रमाणान्तरतः प्रलयस्थिततयाऽवधारितः, स इह ग्रा
च प्राक्, ' सर्वव्यापी स भगवान् तस्मात् सर्वगतः शिवः ' इत्यादिना अनुवादरूपेण बहु
वशब्देनैव अनवद्यः मङ्गलात्मा य उक्तः ; स एव केवलशिवः प्रसिद्धशिवविलक्षणः अ
मा शिवः शाश्वतशिवो बुद्ध्यारूढ इति न पूर्वसंदर्भानुसंधायिनां देवतान्तरग्रहणप्रसक्ति
ति ध्येयम् । एवञ्च **केवल**पदमपि सार्थकम् । **तत्** केवलशिवम् । नपुंसकनिर्देशः सा
छब्दग्राह्यवस्त्वैक्यस्य बुद्धिस्थत्वात् । तत् **सवितुः** सवितृसंबन्धि । तद्विवरणम्, **स**
**ण्डलमध्यवर्ती**ति । ' धियो यो नः प्रचोदयात् ' इत्यत्र पुल्लिङ्गयच्छब्दस्य सवितृशब्दवा
परत्वेऽपि न तस्यैव धीप्रेरकत्वं विवक्षितम्, किंतु तदन्तर्वर्तिनः परमात्मन इति ज्ञा
ा **च तस्मादि**ति । **पुराणी** अनादिर्नित्या, ' अविनाशी वा अरे अयमात्मा अनुच्छित्तिध
धर्मभूतज्ञानस्य नित्यत्वश्रुतेः । तादृशी प्रज्ञा **तस्मात्** परमात्मन एव हेतोः – तदनुग्रहादे
त् – **प्रसृता** प्रसरणं विकासम् अवस्थाविशेषं प्राप्नोतीति । (१८)

स्वरूपतो गुणश्चापरिच्छिन्नत्वमुच्यते **नैन**मिति । (१९)

विग्रहतः स्वरूपतश्चाचाक्षुषत्वमुच्यते **न संदृश** इति । एतद्व्याख्यानमिह न लक्ष्यं
पनिषदि (६.९.) द्रष्टव्यम् । (२०)

**अजात इत्येवं कश्चिद्भीरुः प्रपद्यते ।**
**रुद्र यत् ते दक्षिणं मुखं तेन मां पाहि नित्यम् ॥ २१ ॥**
**मा नस्तोके मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः ।**

---

**अजात** इति । हे संसाररुग्द्रावक! त्वम् । **अजातः** जननादिलक्षणसंसार-
इति मत्वा **कश्चित्** पुरुषापशदोऽहं दाक्षिण्यशालि 'उदग्रपीनांसविलम्बि-
लकावलीबन्धुरकम्बुकन्धरम्, प्रबुद्धमुग्धाम्बुजचारुलोचनं सविभ्रमभ्रूलतमुज्ज्व-
, शुचिस्मितं कोमलगण्डमुन्नसं ललाटपर्यन्तविलम्बितालकं' मुखं **प्रपद्यते**
= ध्यायामि । **प्रपद्यत** इति पुरुषव्यत्ययः छान्दसः । **तेन** ध्यानेन मां **नित्यं**
निरस्तसंसारं कुर्वित्यर्थः । स्तनन्धयप्रजाया अवतरणमुखभूतस्तनवत् अवतरण-
तं चरणारविन्दं प्रपद्य इति वाऽर्थः ।　　(२१)

**मा नस्तोक** इति । अपत्यपुत्रायुर्गवाश्वादिप्रवणतया मां मा हिंसीः ।
हिंसायां' मिति धातुः । हे [1]संसाररुग्द्रावक! त्वमसदपचारेण

1. संसारेत्यतः प्राक् मेलकतया पूजोपकरणेति क्वचित् पाठः । तद् विना
ादि विशेषणतया त्वत्पूजोपकरणेति अन्यत्र पठितम् ।

---

ध्यानस्यैवं मोक्षसाधनत्वावगमात ध्यानं कुर्वन् फलमर्थयते **अजात** इति । जन्मप्रबन्धरूप-
भीतः जन्मरहितं भगवन्तं प्रपद्ये तत्क्रतुनयेन जन्मराहित्यरूपसाधर्म्यसंपत्त्यै इति भावः ।
अहमित्यनिर्दिश्य कश्चिदिति निर्देशः नैच्यानुसंधानेन अनहङ्कारस्य [illegible]नयस्याऽऽविष्करणाय ।
**पुरुषापशद** इति । एवमपि **तेन मामि**ति वक्ष्यमाणानुसारेण कश्चिदहं प्रपद्ये इत्युक्तावपि
भात्, **कश्चि**दित्यनेन स्वान्यस्य ग्रहणं मा भूदिति कश्चिदहमित्येव वक्तुमुचितमित्याशयेन
**यत्ययश्छान्दस** इत्युक्तम् । मुखस्य रक्षणसाधनत्वकथनं न स्वरसम् । तदपेक्षया
इति पद्लृधातोः गत्यर्थकस्य ध्यानार्थकत्वं युक्तमिति मुखस्य तत्कर्मत्वविवक्षया तृतीय-
पूर्वार्धेऽन्वयः स्वीकृतः । अतश्च **यदि**त्यस्य यस्मादिति, **तेने**त्यस्य च तस्मादिति
ः । पूर्णध्यानासमर्थस्य अवयवध्यानमप्यलमिति **मुखमि**त्युक्तम् । (२१)

भक्तिनिष्पत्तये परिकरान् अपेक्षमाणस्य पुंसः काम्यकर्माराध्योऽपि भवति स इति
ोति । पूर्वार्धे प्रतिज्ञारूपं रीरिष इति संबध्यते । '[illegible]' इति [illegible]

वीरान्मा नो रुद्र भामितो वधीर्हविष्मन्तः सदसि[1] त्वा हवाम
[ इति श्वेताश्वतरोपनिषदि चतुर्थोऽध्यायः ॥

अथ पञ्चमोऽध्यायः ॥

द्वे अक्षरे ब्रह्मपरे त्वनन्ते विद्याविद्ये निहिते यत्र गूढे
क्षरं त्वविद्या ह्यमृतं तु विद्या विद्याविद्ये ईशते यस्तु सोऽ

1. सदमित्. पा०

---

**भामितः** कुपितस्सन् वीर्ययुक्तान् ज्ञानवैराग्यादीन् मोक्षौपयिकान् म
हिंसीः । त्वत्पूजोपकरणपुरोडाशादिलक्षणहविरादियुक्ताः सन्तः त्वां सदा
आराधयामः । **इदि**त्यवधारणे । त्वामेवेत्यर्थः । ( २२ )

इति चतुर्थाध्यायप्रकाशिका ।

( ५ )

पुनरपि ब्रह्ममाहात्म्यं ( तादात्म्यं ) चिदचिद्विवेकञ्च प्रपञ्चयति ।
इति । **ब्रह्मपरे** ब्रह्माराधनरूपे **अनन्ते** असंख्यातव्यक्तिके नित्यानित्यप
[ ? क्षरामृतशब्दिते ] विद्याविद्याशब्दिते ( त ? ) ज्ञानकर्मरूपे [
**अक्षरे** आत्मनि दुर्मोचतया लग्ने , सोऽप्यन्यः, आभ्यां समाराध्यम
प्रदश्चान्य इत्यर्थः ।

---

**सद**मित्यस्य सदेत्यर्थः ; सदसीत्येव वा । **त्वा हवामहे** इत्यनेन काम्यस्यापि भग
करणमुचितमिति ज्ञाप्यते भक्तानामाराध्येषु देवेषु भगवच्छेषत्वधियः सत्त्वात् । (२

(५)

नन्वु अहं ब्रह्मास्मीत्यनुसंधानरूपत्वाद् ब्रह्मोपासनस्य जीवब्रह्मैक्यमेष्टव्यमिति
बृहदारण्यकादौ देवानामृष्यादीनाञ्चोक्तम् अहं ब्रह्मास्मीत्युपासनमपि जीवभिन्नब्रह्मोपास
च्य ब्रह्मणो महत्त्वम् , जीवस्यात्यन्तं तद्वैलक्षण्यञ्चाणुत्वादिरूपं निरूपयितुं पञ्चमोऽध्या
तमवतारयति **पुनरपी**ति । **अक्षरे** इत्येतत् द्वे इत्येतत्समानाधिकरणं न भवति । ब्र
द्वयाभावात् । 'क्षरं प्रधानममृताक्षरं हरः'इति प्रागुक्तरीत्या क्षरामृतशब्दाभ्यां प्रकृतिपु
विद्याविद्याशब्दयोरपि ज्ञानस्वरूपजडात्मकनिरुक्तचिदचित्परत्ववर्णनसंभवेऽपि द्वे अक्ष
तद्ग्रहणसंभवः । क्षरत्वेन वर्णनावसर एव प्रकृतेरक्षरत्वकथनानौचित्यात् । अतः अन्यः
पूर्वार्धं जीवपरम् , उत्तरार्धञ्च ब्रह्मपरमाह **द्वे** इति । **अक्षरे** इति सप्तम्यन्तं जीवपरं य
नाधिकरणम् । **विद्या**विद्यापदे ज्ञानकर्मपरे । पूर्वार्धेऽपि **सोऽन्य** इत्यस्योत्तरार्ध
स्वरससिद्ध इत्यभिसधायाह ब्रह्माराधनेत्यादि । **गूढे निहिते** इत्यस्य विवरणं द्
लग्ने इति । (१)

**यो योनिं योनिमधितिष्ठत्येको विश्वानि रूपाणि योनीश्च सर्वाः ।**
**ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति जायमानं च पश्येत् ॥ २ ॥**
**एकैकं जालं बहुधा विकुर्वन्नस्मिन् क्षेत्रे संहरत्येष देवः ।**
**भूयस्सृष्ट्वा पतयस्तथेशः सर्वाधिपत्यं कुरुते महात्मा ॥ ३ ॥**
**सर्वा दिश ऊर्ध्वमधश्च तिर्यक् प्रकाशयन् भ्राजते यन्वनड्वान् ।**
**एवं स देवो भगवान् वरेण्यो योनिस्वभावानधितिष्ठत्येकः ॥ ४ ॥**

---

**यो योनि**मिति । सर्वाणि समष्टिव्यष्टिरूपाणि तत्तद्योनीश्च सर्वाः योऽधिति-
, यस्तु **अग्रे** सृष्टिपूर्वसमये प्रसूतं कपिलं ज्ञानादियुक्तं **बिभर्ति** कृतवान्,
ानदशायाञ्च सानुग्रहमैक्षत, सोऽप्यन्य इति पूर्वेण संबन्धः । (२)

**एकैक**मिति । यस्मिन् क्षेत्रे प्रकृतिरूपे जालवद् बन्धकं महादिकार्यवर्गं
ाधतया कुर्वन् पुनश्च संहरति, तस्मिन्नेव प्रकृतिरूपे क्षेत्रे कल्पान्तरेऽपि भूयः
त्युपलक्षितं प्रपञ्चं सृष्ट्वा सर्वदा सर्वेषां नियन्तृतयाऽऽस्ते यतोऽसौ, [ततो ?]
ाहिमशाल्यात्मेत्यर्थः । (३)

नन्वेतस्य कथं युगपत् सर्वयोन्यधिष्ठातृत्वमुपपद्यत इत्यत्राह **सर्वा दिश** इति ।
 चक्रपरिवर्तनहेतुतया अनडुच्छब्दवाच्यः सूर्यः तिर्यगूर्ध्वमधश्च युगपद्भासयन्
यथा भासते, तथा मुमुक्षुभिर्वरणीयो भजनीयो भगवानेक एव सर्वयोन्यधिष्ठाता
ोत्यर्थः । (४)

---

ब्रह्मत्वेन शङ्क्यमानात् कपिलादितोऽप्यन्यस्य परब्रह्मणः कुतस्तरां जीवैक्यमिति बुबोध-
। कपिलादिर्द्वितीयमन्त्रे प्रस्तुतः । **योनिं योनि**मिति सर्वसमष्टिग्रहणम् । **विश्वानि रूपा-**
नामरूपे व्याकरोदित्युक्तसर्वव्यष्टिरूपग्रहणम् । **योनीश्च सर्वा** इति समष्टिव्यष्टिसर्वकारण-
लस्वभावादिकारणग्रहणम् । **जायमानञ्चे**ति प्रसक्तकपिलमात्रग्रहणौचित्यात् **पश्येदि**त्यस्य
दित्यर्थ उक्तः । अन्यथा सकलजायमानपुरुषदर्शनस्य तात्क्रियमाणत्वाभावेन जायमानञ्च
इति सामान्योक्त्ययोगात् । (२)

अनन्तब्रह्मकल्पकारणत्वादस्य चतुर्मुखाद्यतिशयितं माहात्म्यमित्युच्यते **एकैक**मिति । **जालं**
वर्गं **विकुर्वन्** व्यष्टिरूपेण कुर्वन् । **तथा** एवम् । **भूयः** महाप्रलयात् पश्चात् । **पतय** इति
ार्थे प्रथमा । तदाह **प्रजापत्युपलक्षित**मिति । प्रजापतयः चतुर्मुखदक्षादयः सर्वे । (३)

**कालचक्रे**ति । अनड्वान् हि अनसि युक्तः चक्रपरिवर्तनहेतुः । तथा सूर्यः दिनमासवर्ष-
कालात्मकचक्रपरिवर्तकत्वादनड्वानिति । (४)

यच्च स्वभावं पचति विश्वयोनिः पाच्यांश्च सर्वा
सर्वमेतद्विश्वमधितिष्ठत्येको गुणांश्च सर्वान् विनि
तद् वेदगुह्योपनिषत्सु गूढं तद् ब्रह्मा वेदते ब्रह्म
ये पूर्वं देवा ऋषयश्च तद्विदुस्ते तन्मया अमृता
गुणान्वयो यः फलकर्मकर्ता कृतस्य तस्यैव स
स विश्वरूपस्त्रिगुणस्त्रिवर्त्मा प्राणाधिपः संचरति

---

यच्चेति । यच्चेति लिङ्गव्यत्ययश्छान्दसः । यः सर्वेषा
उष्णानुष्णस्वभावं **पचति** संकल्पलक्षणपाकेन निर्वर्तयति, यश्च
ग्यान् परिणमयति । सत्त्वा (सत्या) दींश्च गुणान् प्रवर्तयति
प्रकृत्यधिष्ठातेत्यर्थः । **तद्वेदे**ति । तेषु प्रसिद्धेषु वेदेषु गुह्योप
विषयतया प्रतिपाद्यं ब्रह्मणो वेदस्य योनिभूतं तत् परं ब्र
**ब्रह्मा** चतुर्मुखः **वेदते** जानाति । अतादृशो न जानाति । ये
तत् ज्ञातवन्तः, ते सर्वे स (तत्स?) मानाकारा मुक्ता बभूवुरि

एवं परमात्मस्वरूपं तज्ज्ञानस्यामृतत्वसाधनत्वञ्चोक्त्वा
**गुणान्वय** इति । सत्त्वरजस्तमोगुणानामन्वयो यस्य स तथोक्त
न्वितस्सन् यत् फलसाधनभूतं कर्म यः करोति, स एव तत्
नियतकर्तृत्वभोक्तृत्वशाली स्थावरनरपक्ष्यादिरूपयुक्तः कामक्रोध
देवयानपितृयाणकष्टगतिरूपमार्गत्रययुक्तः प्राणसहचरितस्सन् क
तीत्यर्थः ।

---

' कालः स्वभावो नियति'रित्यादिप्रागुक्तस्वभावादीनामेतदधीनत्वजिज्ञापयिष

ईदृशब्रह्मवेदनात् मुक्तिः चतुर्मुखादीनां देवानामृषीणाञ्चेति अस्यो
अत्र बृहदारण्यकस्थितम्, 'योयो देवानां प्रत्यबुध्यत, अहं ब्रह्मास्म
मनुष्याणाम्, स एव तदभवत्' इत्यादि वाक्यमनुसंधेयम् । (६)

एवं देवैः ऋषिभिश्च क्रियमाणम् अहं ब्रह्मास्मीत्युपासनं न जी
महता जीवस्यात्यन्ताणोः ऐक्यायोगात् । किंतु शरीरात्मभावायत्तविशिष्टैक्य
जीवाणुत्वमुपदिश्यते **गुणान्वय** इत्यादिना । तत्र परमात्मवत् अस्य विभु
फलभोगार्थोत्क्रान्त्यनेकलोकगत्यागतीनां संप्रतिपन्नत्वादिति परममहत्त्व
क्रियते । (७)

ष्ठमात्रो रवितुल्यरूपः सङ्कल्पाहङ्कारसमन्वितो यः ।
गुणेनात्मगुणेन चैव आराग्रमात्रो ह्यपरोऽपि दृष्टः ॥ ८ ॥
ग्रशतभागस्य शतधा कल्पितस्य च ।
गो जीवः स विज्ञेयः स चानन्त्याय कल्पते ॥ ९ ॥

---

गुष्ठमात्र इति । बुद्धेः अन्तःकरणस्य सत्त्वरजस्तमोलक्षणगुणकारितेन नानाविधार्थविषयकाध्यवसायेन युक्तः तत्कार्येण तत्तत्फलसङ्कल्पेन, जनवानस्मी ' त्यहङ्कारेण [च ?] युक्तस्सन् आत्मवत् स्वप्रकाशः, रुषं निश्चकर्ष यमो बलात् ' इत्युक्तरीत्या अङ्गुष्ठपरिमाणः शास्त्रेषु दृष्टः । रः हीनपरिमाणः आराग्रमात्र इत्यपि दृष्टः शास्त्रेषु दृष्ट इत्यर्थः । (८)

मुपन्यस्यति वालाग्रेति । वालाग्रशतांशशतांशतुल्यपरिमाण एव जीवो ज्ञानविकासेन विभुत्वलक्षणानन्त्याय प्रभवतीत्यर्थः । (९)

---

र्हि मध्यमपरिमाणः । न च तदा सावयवत्वादनित्यत्वापत्तिरिति वाच्यम् — पुर पराविमहादीनामिव सावयवत्वेऽपि प्रमाणबलेन नित्यत्वस्य संभवात् । अणोर्म- परिमाणकस्यापि प्रमाणतो निरवयवत्वस्वीकारसंभवाच्चेत्यत्र तत् परिमाणं प्रत्य- णमव्यवस्थितं काल्पनिकमित्युच्यते अङ्गुष्ठेति । ' अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो दृशप्रमाणानुसारादङ्गुष्ठमात्रत्वस्यैव, आराग्रमात्रत्वादेरपि प्रामाणिकत्वादेकतरपरिशेषे क्रमि । भावः । रवितुल्यरूप इति । स्वप्रकाशोऽयं यदि मध्यमपरिमाणतया- : स्यात्, तदा तत् स्वाभाविकं स्यात् । न त्वेवमिति सूचनायैतदुक्तिः । अङ्गुष्ठ- वम्, किंतु हृदयस्याङ्गुष्ठपरिमाणत्वात् हृदयपरिच्छिन्नत्वप्रयुक्तमङ्गुष्ठमात्रत्वमिति गुणेनेत्युक्तम् । नन्वत्यन्ताणोः हृदयकुहरकोणनिलीनस्य स्थूलं हृदयमादाय वोयुक्तिरपि कथमित्यत्र जैवधर्मभूतज्ञानविकासस्य प्रसमरस्य हृदयपरिच्छिन्नत्वादिति त्मगुणेन चैवेति । आराग्रमात्रोऽह्यवरोऽपि दृष्ट इति । आरा चर्मसूची । मात्रतया तत्र स्थितिदशायां जीवस्यातथात्वसंभवेऽपि मशकपिपीलिकाद्यणुदेहगतस्य कमप्येष्टव्यं हीति भावः । तर्हि यथायथं संकोचविकासभावितबहुविधपरिमाण । चेन्न — तथासति देहसमानपरिमाणवादिजैनमतावतारात् । निरवयवत्वनिर्विका- त्तदयोगादिति । (८)

मत्यन्ताणुरिति सिद्धान्त उच्यते वालेति । शतभागस्येत्यादिकमत्यन्ताणुत्व- णेदम्परम् । एवम्भूतस्य आराग्रमात्रत्वाङ्गुष्ठमात्रत्वयोरुपपादनं नाशक्यम् । मुक्ता- मतेः तदुपपादनं यत् धर्मभूतज्ञानमादाय, तदेवादाय एतयोरप्युपपादनं शक्यम्

नैव स्त्री न पुमानेष न चैवायं नपुंसकः ।
यद्यच्छरीरमादत्ते तेन तेन स युज्यते ॥ १० ॥
सङ्कल्पनस्पर्शनदृष्टिहोमैर्ग्रासाम्बुवृष्ट्याऽऽत्मविवृद्धजन्म
कर्मानुगान्यनुक्रमेण देही स्थानेषु रूपाण्यभिसंप्रपद्यते

---

स्त्रीपुंनपुंसकत्वादिकमपि तस्य तादृशशरीरसंबन्धकृतम् ; न [
कमित्याह **नैव स्त्रीति** । स्पष्टोऽर्थः ।

देहप्राप्तौ हेतुमाह **संकल्पनेति** । पुण्यविषयकसंकल्पगङ्गा
वस्तुस्पर्शतादृशवस्तुदर्शनयागहोमादिभिरात्मनो विवृद्धियुक्तं जन्म—
यावत्—अनेन क्रमेण (?) कर्मानुसारीणि रूपाणि तेषु तेषु ब्राह्मण
[अनुक्रमेण ? ] पर्यायेण प्रपद्यत इत्यर्थः ।

---

अवस्थाविशेषग्रहणेनेति सूचयितुं **स चानन्त्याय कल्पत** इत्युक्तम् । आन
च्छिन्नत्वाय । धर्मभूतज्ञानस्य सर्वव्यापी विकासो मुक्ताविति तद्द्वारा जीवस्यान
भाष्यादौ । **स विज्ञेय** इत्यनेनाणुत्वविधाने नैर्भर्याविष्करणात् अणुत्वस्य
आनन्त्यस्य वास्तवत्वञ्चात्र नैव वक्तुं शक्यम् (९)

ननु जीवस्य स्त्रीपुरुषनपुंसकात्मना त्रैविध्यस्य प्रसिद्धत्वात्, स्त्रीत्वादे
विशेषादिनैवोपपाद्यत्वात् सावयवत्वमावश्यकमिति कथमयमत्यन्ताणुरिति शङ्का
दिकं शरीरगतम्, न त्वात्मगतमिति परिहारः क्रियते **नैव स्त्रीति** । एक एव
स्त्री च भवति, पुरुषोऽपि भवतीति दृष्टम् । अतः स्त्रीजीव एव स्त्री, पुरुषजीव
निर्बन्धः । एवञ्चापृथक्सिद्धशरीरगतस्त्रीत्वादिनैव व्यवहारनिर्वाहे, जीवेऽपि स
न किञ्चित् प्रमाणम् । किमुत मुक्तकण्ठमिह निषेधे सति । (१०)

एवंरूपशरीरग्रहणे कारणमुच्यते **संकल्पने**त्यादिना । आत्मसंबन्धि य
जन्म, तत् संकल्पनादिभिर्भवतीत्यर्थः । अनेन निकृष्टजन्मकारणमेतद्विपरीतरू
**विवृद्धिजन्मे**ति पठित्वा विवृद्धिश्च जन्म चेति द्वयमात्मनः संकल्पनादिभिरिति
**विवृद्धिपदम्** 'अपक्षयविनाशाभ्यां परिणामर्धिजन्मभिः' इत्युक्तभावविकारान्तरा
च । एवञ्च पुण्यापुण्यजन्मद्वयस्यापि सुग्रहतया **संकल्पने**त्यादिकमपि उभयर
पुण्यविषयकसंकल्पादिपरमिव पापविषयकसंकल्पन पतितादिस्पर्शनाभिचारहोमादि
**ग्रासाम्बुवृष्ट्ये**त्यस्य विज्ञानभगवत्कृतं व्याख्यानमन्यापेक्षया आदरणीयमस्ति । त
देशकालपात्रेषु अन्नाम्बुनोरत्यादरेण दानमतिदानं पुण्यहेतुर्भवति ; विपरीतेष्व
अथवा योग्यायोग्येषु ग्रासप्रदानं पुण्यपापहेतुर्भवति, अम्बुदानञ्च । तथा वृ

स्थूलानि सूक्ष्माणि बहूनि चैव रूपाणि देही स्वगुणैर्वृणोति ।
क्रियागुणैरात्मगुणैश्च तेषां संयोगहेतुरपरोऽपि दृष्टः ॥ १२ ॥

अनाद्यनन्तं कलिलस्य मध्ये विश्वस्य स्रष्टारमनेकरूपम् ।
विश्वस्यैकं परिवेष्टितारं ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥ १३ ॥

भावग्राह्यमनीडाख्यं भावाभावकरं शिवम् ।

---

**स्थूलानी**ति । मशकमातङ्गादिस्थूलसूक्ष्मशरीराणि बहुविधान्यपि तत्तत्फल
ध्यादिलक्षणरागादिरूपात्मगुणप्रयुक्तयागादिरूपक्रियालक्षणैः गुणैर्हेतुभिर्भजते
ात्मगुणयोगे च पूर्वपूर्वं कर्मैव हेतुर्दृष्ट इत्यर्थः । (१२

**अनाद्यनन्त**मिति । **कलिलस्य** कार्यस्य मध्ये स्थित्वा हिरण्यगर्भप्रजापत्य
रूपतया विश्वस्य स्रष्टारमित्यर्थः । शिष्टं पूर्ववत् । (१३

भावेति । **भावग्रह्यं** भक्तिग्राह्यं अनीडत्वेन अनिलयत्वेन अनाधारत्वे
ख्यायमानं [1] विश्वस्य **भावाभावकरं** सर्गसंहारकारकं सर्वदा अशुभास्पृ

I. ख्याप्यमानं

---

**मशकमातङ्गे**ति । मातङ्गमशकेति भाव्यम् । एतदुत्पत्त्यनुगुणक्रियाविशेषो यः का
प्र **ागादी**त्य विवक्षितः । (१२)

एवमणुत्व – सृज्यमानत्वाभ्यां जीवं निरूप्य स्रष्टृत्वमहत्त्वाभ्यां परमात्मनः तद्वैलक्ष
क्ति **अनादीति । विश्वस्य परिवेष्टितार**मिति परममहत्त्वं ज्ञाप्यते । (१३)

'ये पूर्वं देवा ऋषयश्च तद् विदुः, ते तन्मया अमृता वै बभूवुः' इति पूर्वं बहूनां
ज्ञानान्मुक्तिरासीदिति यदुक्तम्, तत् एवम्भूतजीवविलक्षणोपासनादेवेति निगमयति **भावे**
कवेकलभ्ये पुरुषे पुराणे' इत्युक्तरीत्या बाह्यसंभरणमप्रतीक्ष्य भक्तिमात्रेण सुग्रहत्वं
त्वम् । **अनाधारे**ति । आधारः शरीरादिः । नीडपर्यायः कुलायशब्दः शरीरे प्रयु

**कलासर्गकरं देवं ये विदुस्ते जहुस्तनुम् ॥ १४**

इति श्वेताश्वतरोपनिषदि पञ्चमोऽध्यायः ॥

---

अथ षष्ठोऽध्यायः ॥

**स्वभावमेके कवयो वदन्ति कालं तथाऽन्ये परि**
**देवस्यैष महिमा तु लोके येनेदं भ्राम्यते ब्रह्मचक्र**

---

विद्यासर्गकारणं (कारिणं ?) ये पूर्वं ज्ञातवन्तः, ते प्रकृति
रित्यर्थः । [ द्विरुक्तिरध्यायसमाप्त्यर्था । ]

इति पञ्चमाध्यायप्रकाशिका

( ६ )

पुनरपि परमात्मनो गुणान् वक्तुमध्यायान्तरारम्भः । स्व
लोकायतिकाः जगच्चक्रपरिवृत्तिहेतुं स्वभावं वदन्ति । अन्ये
कालकर्मादिकं वदन्ति । तदिदमौपनिषदपरमपुरुषवरणीयताहेतु
हिणां जल्पितम् । परमात्ममहिम्नैव ब्रह्माश्रितं जगच्चक्रं बम्भ्रमीती
**ब्रह्म** प्रकृतिः । प्रकृतिप्राकृतचक्रं बम्भ्रमीतीत्यर्थः ।

---

' बहिष्कुलायादमृतश्चरित्वा ' इति । **कलासर्गकर**मिति, ' स प्राणमसृज
इति प्रश्नषष्ठखण्डोक्तप्राणादिषोडशकलास्रष्टृत्वं सुविवक्षम् । तेन षोडशक
भवति । अथापि **भावाभावकर**मिति सर्वसृष्टिसंहारोक्त्या अर्थान्तर
पूर्वमर्थसृष्टिरुक्ता, अनेन शब्देन च शब्दसृष्टिरिति विभागे तात्पर्यम् । **वि**
देवा ऋषयश्च तद् विदुः ' इत्यत्रेव वर्तमानार्थाविवक्षा । अस्तु वेह **अ**
जहुरिति भूतकालनिर्देशात् । अविदुः = अजानन् ।

अन्तिमेऽस्मिन् षष्ठेऽध्याये पञ्चाध्याय्युक्तार्थानुवादपूर्वकं परमा
निर्दिश्यन्ते, ' पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया
पापनुदं भगेशम् ', ' एको देवः सर्वभूतेषु गूढः — ' इत्यादिना । तदाह
**त्मनो गुणान् वक्तु**मिति । भगवतः प्रपत्तिमात्रवशीकार्यत्वौपयिकं पर
इहाऽऽविष्क्रियते, ' मुमुक्षुर्वै शरणमहं प्रपद्ये ' इति । तत्र प्रथमेऽध्या
नियतिर्यदृच्छा—चिन्त्यम् ' इत्युक्तमिह प्रथममुपपाद्यते **स्वभाव**मित्यारभ्य
तत्र प्रथममन्त्रेण कालः, स्वभावः इत्यनयोर्जगत्कारणत्वपक्षः प्रतिक्षिप्य
सेति । देवसंकल्प एव मुख्यं कारणम् । स्वभावादिकं तु तदधीनमिति भा

**नावृतँ नित्यमिदँ हि सर्वँ ज्ञः कालकालो गुणी सर्वविद्यः ।**
**नेशितं कर्म विवर्तते ह पृथ्व्याप्यतेजोऽनिलखानि चिन्त्यम् ॥ २ ॥**
**त्कर्म कृत्वा विनिवर्त्य भूयस्तत्त्वस्य तत्त्वेन समेत्य योगम् ।**
**केन द्वाभ्यां त्रिभिरष्टभिर्वा कालेन चैवात्मगुणैश्च सूक्ष्मैः ॥ ३ ॥**

---

**नावृत**मिति । यो नित्यं सर्ववस्तुव्यापकः सर्वज्ञः, 'कालं स पचते लस्तत्र वै प्रभुः' इत्युक्तरीत्या कालस्यापि पाचकः, 'तेजोबलैश्वर्यमहाव-शक्त्यादिगुणैकराशिः', सर्वज्ञानप्रकार (प्रकारज्ञान ?) वान, **तेनेशितं कर्म** । क्रियत इति कर्मेति कार्यतया **कर्म**शब्दितं पञ्चभूतात्मकं जगत् त्मना, स्यादिति सङ्कल्पमात्रविषयीकृतं सत् **विवर्तते** निष्पद्यत इत्येतदेव नीयमित्यर्थः । (२)

**त्कर्मे**त्यादि । 'तत्त्वं नारायणः' इति श्रुतेर्नारायण एव तत्त्वम् । तत- । इतरेभ्यो **विनिवर्त्य तत्त्वस्य** भगवतः समाराधनं नित्यनैमित्तिकलक्षणं कृत्वा, **एकेन** जायमानदशाप्रसृतभगवत्कटाक्षेण, **द्वाभ्याम्**, 'यस्य देवे : यथा देवे तथा गुरौ' इत्युक्तरीत्या देवगुरुभक्तिभ्याम्, **त्रिभिः** बाल्य-नैः, **अष्टभिर्योगाङ्गैश्च** .... ? सहितस्सन् **तत्त्वेन** परमात्मना शेषत्वज्ञान-

---

:— नियतिरपि देवप्रेरितैव कार्यकरीत्युच्यते **येने**ति । **सर्वविद्य** इत्यस्य सर्वाः विद्याः यर्थः । अथवा **सर्ववित् यः इति च्छेदः** । **ज्ञः सर्ववि**दिति च, 'यः सर्वज्ञः इतिवदपुनरुक्तं भाव्यम् । **तेनेशितं कर्मे**त्यादि । **कर्म** जीवकृतं पुण्यपापात्मकं **तेन** देवेन प्रेरितं सत् पृथ्व्यादिरूपेण विवर्तते । **ह** प्रसिद्धमेतत् इत्यप्यर्थो घटते । **पृथ्व्याप्ये**त्यादिपदसामानाधिकरण्यात्यन्तसामञ्जस्यसंपिपादयिषया तु **क्रियत इति** त्पत्तिरादृता, 'यस्य वैतत् कर्मे' ति श्रुताविव । पृथ्व्याप्येतिपदेन भूतानि स्वतन्त्राणि मिति पक्षोऽपि व्युदस्तो भाव्यः । **चिन्त्य**मित्यस्य इति निर्णयमित्यर्थः । (२)

**कर्मे**त्यादिना **स तत्त्वतोऽन्य** इत्यन्तेन जीवापरपर्यायस्य पुरुषस्य कारणत्वपक्षो । **शाङ्कर**रीत्या तु तत्कर्मेतिश्लोक उत्तरश्लोकानन्वितः पृथग्वाक्यम् । तदर्थरीतिरेवं या — तत् पूर्वोक्तं **कर्म** समष्टिकार्यजातं पृथ्वीपर्यन्तं कृत्वा **विनिवर्त्य** समष्टिकरणा-वर्त्य एकस्य तत्त्वस्य सृष्टस्यापरेण तत्त्वेन योगं संपाद्य—कतिभिस्तत्त्वैरिति विचारे त् अष्टीकरणप्रक्रियां वक्तुम् **एकेन द्वाभ्यां त्रिभिरि**त्यवयवानुवादपूर्वम् **अष्टभिर्वे**ति कृतीनां मिथः संमेलनरूपाष्टीकरणपक्षे आदरः प्रदर्श्यते—**कालेन** कारणभूतेन आत्म-

**आरभ्य कर्माणि गुणान्वितानि भावांश्च सर्वान् विनियोजयेद्यः।**
**तेषामभावे कृतकर्मनाशः कर्मक्षये याति स तत्त्वतोऽन्यः ॥**

**आदिः स संयोगनिमित्तहेतुः परस्त्रिकालादकलोऽपि दृष्टः**

---

लक्षणयोगं प्राप्य प्रारब्धत्वगुणयुक्तानि कर्माण्यवलम्ब्य **वर्तमानान्** सर्वान् कामान् स्वस्मै विनियोजयति=भुङ्क्ते । स **तेषां** कर्मफलभोगानामवसाने वर्गितया कर्मणां नाशात्, 'तस्य तावदेव चिर' मित्युक्तरीत्या कर्म **याति** प्राप्नोति । स तत्त्वतः परमात्मनोऽन्य एव । अतो नैक्यशङ्का भावः ।

परमात्मोपासनमपि स्वात्मोपासनपूर्वकं कर्तव्यमित्याह **आदिरि** पूर्वमन्त्रोक्तजीवः **संयोगे** समीचीनपरमात्मयोगे तत्प्राप्तौ आदिकारणम्—हेतुरिति यावत्—कालत्रयपरिच्छिन्नात् परत्वेन भिन्नत्वेन निरवयवत्वेन श

---

गुणैश्च रागद्वेषादिभिः सहायैः व्यष्टिं कुरुते देव इति । **विज्ञानभगवतो** व्याख्यानशैली द्भाष्यानुरोधिनी । **तत्कर्मे**त्यस्य तदर्थं कर्म **तत्कर्म** भगवदाराधनरूपं कर्मेति तत्र व्य एवमपि सुवचम्—तत् पूर्वोक्तं पृथ्व्याप्यादिजगद्विवर्तोपयोगि भोगप्रदं काम्यं **कर्म** क कृत्वा, **भूयः** पश्चात् तादृशकर्मकारणादात्मानं विनिवर्त्य, आत्मतत्त्वस्य ब्रह्मतत्त्वेन योग भावात्मकं बुद्ध्वा, अन्यविधानि सात्त्विकत्यागरूपगुणान्वितानि आरभ्य सर्वं तत्रोपयं इत्येवम् । कश्चित्तु, 'एकेन द्वाभ्यां त्रिभिरष्टभिर्वा जन्मभिर्यथायथं तत्तद्भाग्यपरिप रोधेन' इति **एकेने**त्याद्यंशं व्याख्याति । **कृतकर्मनाश** इत्यस्य **कृतः** एवं निष्पादित येनेति विग्रहेण **स** इत्येतद्विशेषणत्वं भाव्यम् । **स तत्त्वतोऽन्य** इत्यनेन, एवं सांसारिकं कर्म कृत्वा क्लेशमनुभूय विरज्य सत्कर्मकरणेन भगवत्तत्त्वमाराध्य मुक्तिं प्राप्तुं पुरुषस्य कथं जगत्कारणतत्त्वतासंभव इति प्रदर्शितमिति ध्येयम् । (३. ४.)

**आदिरि**त्यादेः परमात्मपरतया योजना एवं भवेत्—'संयोग एषां न त्वा इति प्रागुक्ततया संयोगनिमित्ततयाऽभिमतानामप्यादिहेतुर्देव एव कालत्रयपरिच्छिन्न वयव इति । तथासति तं देवं पूर्वमुपास्य, तदनन्तरं विश्वधाम आत्मस्थं ज्ञात्वेति वाक्यार्थानन्वयः प्रसजति । अतः **आदिरि**ति मन्त्रः पूर्वप्रकृतजीवपरतयैव क

**तं विश्वरूपं भवभूतमीड्यं देवं स्वचित्तस्थमुपास्य पूर्वम् ॥ ५ ॥**

**स वृक्षकालाकृतिभिः परोऽन्यो यस्मात् प्रपञ्चः परिवर्ततेऽयम् ।**
**धर्मावहं पापनुदं भगेशं ज्ञात्वाऽऽत्मस्थममृतं विश्वधाम ॥ ६ ॥**

र्मवशादनन्तशरीरं **भवभूतं** भवं संसारं **भूतं** प्राप्तम् — संसारिणमिति — **ईड्यं** स्तुत्यम् — अपहतपाप्मत्वादिगुणकमिति यावत् — अत एव द्योतमानं स्वप्रकाशज्ञानानन्दरूपं स्वहृदयस्थं प्रथमत उपास्य,

**स वृक्षे**ति । यस्मादयं चिदचित्प्रपञ्चः परिवर्तते, स वृक्षकालाकृतिभ्यः उत्कृष्टः — **वृक्ष**शब्देन छेदनार्हप्रकृतिप्राकृतमुच्यते — **आ** समन्तात् **कृतिः** यस्येति **आकृतिः** कर्ता जीवः । प्रकृतिकालजीवेभ्य उत्कृष्ट इत्यर्थः । प्तिप्रतिबन्धकपापानि अपनुद्य तदनुकूलपुण्यप्रवर्तकम् , 'ऐश्वर्यस्य समग्रस्य य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ' इत्युक्तानां ज्ञानादी- श्वरं विश्वस्य **धाम**भूतमाधारभूतं मरणाद्यवद्यशून्यं स्वात्मनि अन्तर्यामितया वर्तमानं । मुक्तो भवतीत्यर्थः । (५+६)

निषदि (१·१ १.) 'ब्रह्मजज्ञं देवमीड्यं विदित्वा' इत्यत्र, "'जीवात्मानमुपसकं ब्रह्मात्म- वगम्य" इति **भाष्यकृता** व्याख्यानात् तद्रीत्या इहापि **ईड्यं देव**मिति ब्रह्मात्मकत्व- ऽपि भवेत् । (५)

एवं स्वभावकालकर्मपञ्चभूतजीवेभ्यः प्रस्तुतेभ्योऽन्यः परमात्मा ज्ञातव्य उच्यते **स वृक्ष- कृतिभि**रिति । **वृक्षे**ति 'ऊर्ध्वमूलोऽवाक्छाखः एषोऽश्वत्थः सनातनः' इति कठोक्तं ज्ञाप्यते । **आकृति**शब्दस्याऽऽकाररूपार्थविवक्षायां वैयर्थ्यात् प्रकृतजीवपरतया संभवति ये तत्त्यागायोगाच्च तदुचितमर्थमाह **आ समन्ता**दिति । तृतीया, 'अन्यदेवाहुर्विद्यये विव पञ्चम्यर्था । **ज्ञात्वे**त्यस्य उत्तरमन्त्रे **विदामे**त्यत्रान्वयो न भवति । ज्ञानवेदनकर्मणो न ज्ञानवेदनयोरप्यैक्यात् क्त्वाप्रत्ययानुपपत्तेः । न च ज्ञानमिदं वाक्यार्थज्ञानमात्रम्; वेद- नमिति वाच्यम् — वाक्यार्थज्ञाने जीवोपासनानन्तरभावित्वनियमाभावेन **पूर्वमुपास्ये**त्युक्ता नन्वयात् । अतो **मुक्तो भव**तीत्यध्याहृत्य पृथग्वाक्यकरणम् ।

ननु **आदि**रित्यादि सर्वं परमात्मपरमेवास्तु । तत्र स्वचित्तस्थत्वेन तस्य (विग्रहविशिष्टस्य नं पूर्वमुच्यते । अथ आत्मस्थत्वेन ध्यानमुक्तम् । अथ भुवनेशत्वेन सर्वविभूतिविशिष्टत- परज्ञानरूपं मुक्तिप्राक्कालिकं प्रार्थ्यते । तथाच मुक्तो भवतीति मा भूदध्याहारः । अथ वेति ज्ञानं आलम्बनसंशीलनरूपमस्तु; **विदामे**ति चोपासनमिति चेत् — किमनेन? य म् , तदाद्रियतां सम्यग् विमृश्य । (६)

**तमीश्वराणां परमं महेश्वरं तं देवतानां परमञ्च दैवतम् ।**
**पतिं पतीनां परमं परस्ताद् विदाम देवं भुवनेशमीड्यम् ।**

**न तस्य कार्यं करणञ्च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते**
**पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च**

**न तस्य कश्चित् पतिरस्ति लोके न चेशिता नैव च तस्य लि**
**स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः**

**यस्तन्तुनाभ इव तन्तुभिः प्रधानजैः स्वभावतः ।**

---

**तमीश्वराणा**मिति । **विदामे**ति ज्ञानप्रार्थना । शिष्टं स्पष्टम् ।

**न तस्ये**ति । **कार्यं** शरीरम् । **कारणम्** इन्द्रियम् । ज्ञानबलाभ्यां सृष्टिसंहारादिलक्षणक्रिया **ज्ञानबलक्रिया** । शिष्टं स्पष्टम् ।

**न तस्य** कश्चिदिति । **लिङ्गं** ज्ञापकहेतुः । **करणाधिपो** जीवः । नतिरोहितार्थम् ।

**यस्तन्तुनाभ** इति । लूताख्यः कीटविशेषः स्वसंनिहितजन्तुविशे न्तुभिरावृणोति , एवं प्रकृतिजैः प्राकृतैः तत्त्वैः **स्वभावतः** स्वे

---

**महेश्वर**मिति न रूढ्यर्थरुद्रविवक्षासंभवः ; तदा पारम्यानन्वयात् । देवतामध्ये प त्वस्य पतिमध्ये परमपतित्वस्य चेव ईश्वरमध्ये परमेश्वरत्वस्यात्र कथ्यमानतायाः साहचर्यब या परममहेश्वरपदान्तर्गतेश्वरशब्दस्य यौगिकत्वावधारणादिति हि श्रुतप्रकाशिकोक्तमुपरि द्रेष्यति । **महेश्वर**मित्यत्र महत्त्वमविवक्षितं वस्तुस्थित्यनुवादमात्रम् । अस्तु वा **ईश्वराण** दं महेश्वराणामित्यर्थकम् । ' ईश्वराणां मध्ये परमत्वात् महेश्वरः ; देवतानां मध्ये परमत्व भूतः ; देवतैव दैवतमिति व्युत्पत्त्या अस्य देवतात्वं नियतम् ; अन्येषां तु मनुष्यादि क्षया देवतात्वम् , उत्कृष्टापेक्षया च तदभाव इति देवतात्वं न नियतमिति वाक्यार्थवर्ण हेश्वरपदस्य महाश्चासौ ईश्वरश्च महेश्वर इति योगार्थ एव विवक्षितो भवतीति ध्येयम् । ।

**यस्तन्तुनाभ इवे**ति तन्तुनाभदृष्टान्तेन जन्तूनां स्वात्मनि लयसंपादनायैव तन् न्तून् निर्माय वितनोति यथा, तथा देवोऽपि अन्ततो जीवानां स्वात्मन्यप्ययरूपमोक्ष शरीरात् प्रधानात् तन्तुतुल्यानि महदादीनि कार्याणि सृष्ट्वा विस्तृणातीति दर्शितम् । (

देव एकः[1] समावृणोति स नो दधाद् ब्रह्माप्ययम् ॥ १० ॥

एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ।
कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च ॥ ११ ॥

एको वशी निष्क्रियाणां बहूनामेकं बीजं बहुधा यः करोति ।
तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् ॥१२॥

नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् ।

[1] स्वभावृणोति. पा०

---

**वृणोति** लुप्तज्ञानं करोति [यः ?], स देवोऽस्माकं ब्रह्मणि **अप्ययम**मात्यन्तिकं तु । मुक्तस्य ब्रह्मण्यप्ययो नाम भेदकाकारास्फुरणम् ।  (१०)

**एको देव** इति । सर्वभूतेषु इतराविदिततया वर्तमानः, सर्वव्यापितया त्मा, तच्छरीरेष्वनुप्रविष्टः, कर्मसु प्रेरकः, **चेता** — चिञ् चयने ' इति — सकलप्रपञ्चनिर्माता, त(अ)थापि गुणत्रयवश्यत्वाभावात् फलाभिसन्धि- त्वाभावेन [च ?] (?) केवलोदासीनः, ईशः (?), ' अपहतपाप्मा दिव्यो नारायण ' इति प्रसिद्धो दिव्यो देव एक एवेत्यर्थः ।  (११)

**एको वशी**ति । **निष्क्रियाणां** स्वतः प्रवृत्तिरहितानां सर्वचेतनानां स्वाधीनसर्वचेतनवर्ग इति यावत्—एकं जगद्बीजमव्यक्तलक्षणं महद्- रूपेण यो बहुधा करोति, तं स्वान्तर्यामिणं ये जानन्ति, त एव मुक्ता र्थः ।  (१२)

**नित्य** इति । अनित्यानां चेतनानां बहूनां नित्य एक एव चेतनस्सन् कामान् विदधाति, तज्ज्ञानं मुक्ति [हेतु ?] रित्यर्थः । अत्र नित्यचेतनानाम- धर्मभूतज्ञानसङ्कोचादिधर्मयोगादिति द्रष्टव्यम् । नित्यानां मध्ये नित्यः त्यः, चेतनानां मध्ये चेतनः परमचेतनः इत्यर्थाश्रयणेऽपि न दोषः ।

---

त्यो **नित्यानामि**त्यत्र नित्यानामिति पदच्छेद एव भगवद्भाष्यकारदर्शितः । तथैव च

तत् कारणं सांख्ययोगाधिगम्यं ज्ञात्वा देवं मुच्यते सर्वप

न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुत
तमेव भान्तमनु भाति सर्वं तस्य भासा सर्वमिदं विभाति

एको हँसो भुवनस्यास्य मध्ये स एवाग्निः सलिले संनि
तमेव विदित्वाऽति मृत्युमेति नान्यः पन्था विद्यतेऽयना

स विश्वकृत् विश्वविदात्मयोनिर्ज्ञः कालकालो गुणी सर्व

---

नित्यत्वचेतनत्वतारतम्यञ्च विवक्षाविशेषेण द्रष्टव्यम् । **सांख्यये** सांख्ययोगशास्त्रयोः तात्पर्यविषयभूतम् । 'सांख्यं योगः पाञ्चरात्रं वे तथा । आत्मप्रमाणान्येतानी' त्युक्तेरिति भावः ।

**न तत्रेति** । अयं मन्त्रोऽन्यत्र बहुकृत्वो व्याकृतः ।

**एक** इति । **भुवनस्य** चिदचित्प्रपञ्चस्य मध्ये, पक्षिसंघे राजह जमानः । 'यमन्तस्समुद्रे कवयो वदन्ती' ति समुद्रसलिलसंनिविष्टः । अग्रनेता मोक्षप्रदः संसारपाशदाहक इति वाऽर्थः । शिष्टं स्पष्टम् ।

**स विश्वेति** । **विश्वकृत्** सर्वकर्ता, **विश्ववित्** सर्वं प्राप्तः,—विदि धातुः—**आत्मयोनिः**—आत्मा योनिः स्थानं यस्य स तथोक्तः । जीवान्तय **ज्ञः** सर्वज्ञः, **कालकालः** कालस्यापि नियन्ता, स विद्यः सर्वा

---

**कठोपनिषदि** एषां व्याख्यानमपि । इह तु, **स नो दद्यात् ब्रह्माप्ययमिति** यस्योक्तत्वात् किञ्चिद्रूपेण अनित्यत्वस्य जीवेषु वर्णनसंभवात् पराभिमतस्य अनित्य विभागस्य स्वीकारेऽपि नातीव हानिरिति व्युत्पादनाय प्रकारान्तरेण व्याख्यानं **सांख्ययोगाधिगम्यम्** ज्ञानयोगकर्मयोगाभ्यामधिगम्यमित्यप्यर्थः स्यात् । पृथग्बालाः' इत्यादौ गीतासु तथा प्रसिद्धेः । (१३)

**न तत्र** सूर्य इति मन्त्रः कठवल्ल्यां मुण्डके च श्रूयते । (१४)

प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः ॥ १६ ॥
स तन्मयो ह्यमृत ईशसंस्थो ज्ञः सर्वगो भुवनस्यास्य गोप्ता ।
य ईशेऽस्य जगतो नित्यमेव नान्यो हेतुर्विद्यत ईशनाय ॥ १७ ॥
यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ।
तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ॥ १८ ॥

---

त्रज्ञपतिः प्रकृतिजीवयोः शेषी, **गुणेशः** ज्ञानादिषाड्गुण्यपरिपूर्णः, प्रकृतिसंबन्धलक्षणस्य मोक्षे च तत्स्थितौ च हेतुरित्यर्थः । (१६)

स **तन्मय** इति । **सः** परमात्मा **तन्मयः** तत्प्रचुरः । तदात्मक एव; । अनन्यप्रेर्य इति यावत् । **अमृतः** असंसारी । **ईशे** ईशनव्यापारे थतिर्यस्येति तथोक्तः । **य ईशे** यो नित्यमीष्टे । यस्य चेशनमनन्यहेतुकं मोक्षदशायामप्यनपायीत्यर्थः । शिष्टं स्पष्टम् । (१७)

पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः' इति वशीकार्यपरम्पराभूमिभूतभगवद्वशीकरणोपायभूतप्रपदनमन्त्रमाह **यो ब्रह्माणमिति** । यः ब्रह्माणमुत्पाद्य तस्य वेदप्रदानेन जगत्सर्गशक्तिमाहितवान्, तं द्धिप्रकाशहेतुं मुमुक्षुरहं शरणं प्रपद्य इत्यर्थः । आत्मबुद्धेः प्रकाशो यस्मात् बुद्धिप्रकाशः । तद्विषयबुद्धिस्फुरणस्य तदनुग्रहायत्तत्वादित्यर्थः । (१८)

---

ारमोक्षस्थितिबन्धहेतुरिति । **संसारे**तिपदं स्थितावप्यन्वेतीत्याशयेन **संसार**न्धसामान्यषष्ठीविग्रहादरणम् । अर्थस्तु संसारान्मोक्षे, संसारस्थितिरूपे सर्गकालिलयसाधारणे बन्धे च हेतुरिति । (१६)

त्य इत्यत्र तच्छब्दः स इत्युक्तपरामर्शी भवतु अत्यन्तसंनिहितत्वादित्यभिसंधायाह त्रेति । व्यवहितग्रहणेष्टौ तु प्रधानक्षेत्रज्ञमय इत्येवं रीत्याऽपि व्याख्यानं भवति । (१७)

या भगवतः प्राप्यत्वमेतावदुक्तम् । प्रपत्त्याऽपि प्राप्योऽयमिति रहस्योपदेशः क्रियते मेति । **प्रपदनमन्त्र**मिति । मन्त्ररत्नवत् अस्यापि प्रपद्ये इति वर्तमानापदेशघटितत्वात् णमन्त्रत्वम् । भक्तवत्स्वतन्त्रोभयविधप्रपत्तिपरमिदमविशेषादिति स्तोत्रभाष्यादितो **आत्मबुद्धिप्रकाश**मिति पदेन मधुकैटभापहृतवेदपुनरर्पणविहितोऽनुग्रहोऽपि (१८)

निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम् ।
अमृतस्य परं सेतुं दग्धेन्धनमिवानलम् ॥ १९ ॥

यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः ।
तदा देवमविज्ञाय दुःखस्यान्तो भविष्यति ॥ २० ॥

तपःप्रभावाद् देवप्रसादाच्च ब्रह्म ह श्वेताश्वतरोऽथ विद्वा
अत्याश्रमिभ्यः परमं पवित्रं प्रोवाच सम्यगृषिसंघजुष्टम्

---

उक्तब्रह्मज्ञानाभावे मोक्षसंभावनैव नास्तीत्याह **निष्कल**मिति
आकाशस्य चर्मकटादिवत् वेष्टनं यदा अल्पशक्तयो मनुष्याः करिष्य
**निष्कलं** निरवयवं **निष्क्रियं** कृतकृत्यं **शान्तम्** अशनायाद्यूर्मिषट्करहि
आश्रितपराङ्मुखत्वाद्यवद्यरहितं **निरञ्जनम्** असङ्गस्वभावम् **अमृतस्य**
मुख्यं सेतुं दग्धेन्धनानलवत् स्वप्रकाशकं देवमविज्ञाय दुःखस्य नाश
यथा आकाशस्य चर्मवत् वेष्टनमसंभावितम्, एवं परमात्मज्ञानमन्तरे
संभावित इत्यर्थः । (

**तप** इति । 'मनसश्चेन्द्रियाणाञ्च ऐकाग्र्यं परमं तपः' इत्युक्त
लक्षणतपःप्रभावाच्च [त् परमात्मानुग्रहाच्च ?] संपन्नब्रह्मविज्ञानः श्वेताश्वत
**अत्याश्रमिभ्यः**—अति पूजायाम्—पूज्याश्रमयुक्तेभ्यः परमहंससंन्यासि
**संघैः** वामदेवादिभिः **जुष्टं** सेवितं परमं पवित्रं ब्रह्म प्रोवाचेत्यर्थः ।

।.

---

यथा भक्त्यभावेऽपि प्रपत्तिवशान्मुक्तिरधिकारिविशेषे, तथा तदभावेऽपि
निरपेक्ष एव केभ्यश्चित् स मुक्तिप्रदः स्यात्; अन्यतोऽपि वा मुक्तिः स्यादिति
तन्निरसनाय निष्कलमित्यादिमन्त्रद्वयम् ।

**अत्याश्रमिभ्य** इत्यस्य अतिशयिताश्रमशालिभ्य इत्यर्थः । 'अनाश्रम
क्षणमेकमपि द्विजः' इति अनाश्रमावस्थानस्य निषिद्धतया तादृशानामुत्तमपात्रतया
दित्याशयेन **अति पूजाया**मित्युक्तम् । (२१)

वेदान्ते परमं गुह्यं पुराकल्पे प्रचोदितम् ।
नाप्रशान्ताय दातव्यं नापुत्रायाशिष्याय वा पुनः ॥ २२ ॥

यस्य देवे परा भक्तिः यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥

प्रकाशन्ते महात्मनः इति ॥

ओं 'पूर्णमदः,' 'भद्रं कर्णेभिः,' 'सह नाववतु' इति शान्तिः ॥

। इति श्वेताश्वतरोपनिषदि षष्ठोऽध्यायः ।

॥ इति श्वेताश्वतरोपनिषत् ॥

शुभमस्तु

---

**वेदान्त** इति । वेदान्तेष्वतिरहस्यतया निगूढं पुराकल्पे ब्रह्मणे उपदि-
विज्ञानं शान्तेभ्यः पुत्रेभ्यः शिष्येभ्य एव प्रब्रूयात्; नान्येभ्यः
। (२२)

भगवद्विषये गुरुविषये च उत्कृष्टभक्तिशून्यानाम् उक्तार्था उपदिष्टा अपि
इत्याह **यस्य देव** इति । यस्य भगवत्युत्कृष्टा भक्तिः, तत्तुल्या गुरावपि भक्तिः,
महात्मन एते अर्था भासन्ते; नेतरेषामित्यर्थः । द्विरुक्तिरध्यायसमाप्त्यर्था
र्था **च** ] ।

एतदध्यायान्तर्गतवाक्यविषयमधिकरणं लिख्यते —

तृतीयाध्याये उभयलिङ्गपादे वेदान्ते जगत्कारणतया प्रतिपाद्यमानस्यात्मनः;
य आत्मा स सेतुर्विधृति' रिति सेतुत्वश्रवणात् सेतोश्च प्राप्यान्तरप्रापकत्व-
र्शनेन ब्रह्मणोऽपि प्राप्यान्तरप्रापकतैव [ प्रतीयते ]; न तु स्वयं प्राप्यता ।
-- एतं सेतुं तीर्त्वेति तरितव्यत्वाभिधानेन एतस्य प्राप्यत्वाभावाविष्करणात्

---

ले हीति एवार्थे । तेन तस्यैवेत्यर्थलाभः । एतदनुसारेण व्यतिरेकमुखेनावतरणं कृतम् ।
इत्यस्य अत्रोपनिषदि उक्ता इत्यर्थः । **अकथिताः** साक्षादाचार्यानुक्ता अपीत्यर्थोऽपि
।

वेदान्तेषु, 'चतुष्पात् ब्रह्म षोडशकलम्' इत्युन्मा
अपरिमितस्योन्मानासंभवात् । अतो वेदान्तेषु अपरिमि
प्रतीयते । किञ्च — 'अमृतस्य परं सेतु' मिति अमृत
कत्वलक्षणः संबन्धः षष्ठ्या प्रतीयते । न हि स्वस्मि
संबन्धः संभवति । किञ्च — 'तेनेदं पूर्णं पुरुषेण सर्वं'
'ततो यदुत्तरतरम्' इत्यधिकस्य निर्देशात् परस्मादपि
दिश्यते । अत एभ्यो हेतुभ्यः परस्मादपि ब्रह्मणः अ
"परमतः सेतून्मानसंबन्धभेदव्यपदेशेभ्यः" इति सूत्रेण

'सामान्यात्तु" । 'य आत्मा सेतु' रिति व्यप
संभेदाये' ति वाक्यशेषश्रुतासंकरकारित्वलक्षणधर्मसामान्य
न्तरप्रापकत्वलक्षणधर्मनिबन्धनः । 'एतं सेतुं तीर्त्वा' इ
वेदान्तं तरतीतिवत्; नोल्लङ्घनवचनः ।

यदुक्तमुन्मानव्यपदेशादस्य परिमितत्वं प्रतीयत
पादवत्" । यथा 'मनो ब्रह्मेत्युपासीतेत्यध्यात्मम्', '
पादः प्राणः पादः चक्षुः पादः श्रोत्रं पादः इत्यध्यात्मम्'
आदौ वागादिपादत्वव्यपदेश उपासनार्थः; न तु ता
पादत्वासंभवात् — एवमपरिच्छिन्नस्य ब्रह्मणः, 'प्राची
कला दक्षिणा दिक् कला उदीची दिक् कला । एष वै
ब्रह्मणः प्रकाशवान् नामे'त्युक्तदिगादिलक्षणचतुष्कलपादसंब

---

**षोडशकल**मिति । नेदं श्रौतं पदम् । किंतु सत्यकामं
विद्यायां चतुरः पादान् प्रदर्श्य प्रतिपादं चतुष्कलत्वमुक्तमिति अर्थ
**रस्ये**ति । वस्त्वन्तरं प्रतीत्यर्थः ।

**मनसो वागादिपादत्वासंभवा**दिति । निखिलजगत्का
पादायोगात् इदं चतुष्पात्त्वं तस्य नूनमुपासनार्थमिति निश्चितम्,
भाष्यादितो ज्ञायते । अत्र तु मनो ब्रह्मेत्युपासीतेति वाक्ये ब्रह्म
वास्तवम्, किंतु उपासनार्थं कल्पितमित्यधिकमुक्तमिति ध्येयम् ।

ननु स्वयमनुन्मितस्य कथमुपासनार्थतयाऽप्युन्मानप्रतीतिः ? तत्राह, " स्थान-
ान प्रकाशादिवत्" । यथा प्रकाशाकाशादेरपरिच्छिन्नस्यापि वातायनाद्युपाधिवशेन
छन्नत्वानुसन्धानम् , एवमिहापि अभिव्यक्तिस्थानभूतप्रा(वा ?)गाद्युपाधिवशेन
त्वानुसन्धानमुपपद्यते ।

यदुक्तम् , ' अमृतस्य परं सेतु'मिति संबन्धव्यपदेशेन अमृताद् भेदोऽवग-
इति । तत्राह, " उपपत्तेश्च " । ' यमेवैष वृणुते तेन लभ्यः ' इति 'स्वप्राप्तेः
व साधनतया जोघुष्यमाणे ' ब्रह्मणि स्वेनैव प्राप्यप्रापकत्वलक्षणसंबन्धव्यपदेश-
नानुपपत्तिः ।

यदुक्तम् —'ततो यदुत्तरतर'मिति अधिकं वस्तु प्रतिपाद्यत इति, तत्राह,
ऽन्यप्रतिषेधात्" । 'यस्मात् परं नापरमस्ती'ति तदतिरिक्तोत्कृष्टवस्तुनो
न तद्विरुद्धतया , ' ततो यदुत्तरतर ' मिति वाक्ये तदधिकवस्तुपक्षे ासंभवात् ।
यदुत्तरतर मित्येतत् पूर्वोप(पूर्वप्रति) पादितस्य पुरुषपारम्यस्य उपरि उपसंहार-
। एतच्च पूर्वत्र तन्मन्त्रव्याख्यायां स्पष्टीकृतम् ।

---

वातायनादीति । प्रकाशस्य वातायनेन परिच्छिन्नत्वम्, आकाशस्य च घटादिना
भ्यक्तिस्थानभूतवागाद्युपाधीति पाठो युक्तः ; न तु प्रागादीति । श्रुतप्रकाशिकायाम्
नभूतवागादिविषयमिदं सूत्रम्" इत्युक्तत्वात् । षोडशकलत्वादिकं ब्रह्मणि उपासनार्थं
, वागादिपादवदित्युक्तं कथमुपपद्यते, अनुन्मिते वागादिपादोन्मानस्याप्ययोगादिति शङ्का
ार्थं सूत्रमिति तदर्थः ।

**यमेवैष** इति । ननु यमेवैष इति वाक्यं निरतिशयप्रीतिरूपापन्नध्यानलभ्यत्वस्य ब्रह्मणि
र्थमिति जिज्ञासाधिकरणभाष्ये स्पष्टमिति कथमत्रानन्योपायत्वमनेन बोध्यत इत्युच्यत इति
तृतीयपादेन प्रीतिरूपापन्नभक्तिलभ्यत्वमुक्तम् । यमेवेति एवकारेण वृतेनैव लभ्य इति
् वरणाभावे अलभ्य इति ज्ञापनात् वरणकारणजिज्ञासायां प्रियतमत्वस्य वरणहेतुताय
वेकत्वात् प्रियतमत्वं प्रति प्रीत्यतिशयभाक्त्वं हेतुरित्यस्य गीतत्वाच्च प्रीतिरूपापन्नध्यान
। एवमपि प्रापकस्यास्यैव प्राप्यत्वमपि लभ्य इति पदेन दर्शितमेव । स्पष्टीकृतश्चैव
ादेन ' तस्यैष आत्मा विवृणुते तनूं स्वाम् ' इत्यनेनेत्याशयात् ।

"अनेन सर्वगतत्वमायामशब्दादिभ्यः"। अनेन=ब्रह्मणा सर्वगतत्वं=सर्व
ो व्याप्तत्वम् आयामशब्दादिभ्योऽवगम्यते । आयामशब्दस्तावत् — 'ते
पुरुषेण सर्वम्', 'अन्तर्बहिश्च तत् सर्वं व्याप्य नारायणः स्थितः' इत्यादि
शब्देन, 'ब्रह्मैवेदं सर्वम्' इत्यादयो गृह्यन्ते । अतो न परब्रह्मणोऽन्यत्र प्रा
ति स्थितम् ॥

अस्याश्चोपनिषदः कृत्स्नाया भगवत्परत्वं सर्वव्याख्यानाधिकरणे व्याम
तम् । तदुच्यते । प्रथमद्वितीयखण्डयोः, **देवात्मशक्तिम्, व्यक्ताव्य
विश्वमीशः, यदात्मतत्त्वेन तु ब्रह्मतत्त्वम्, ज्ञात्वा देवम्, एष
प्रदिशोऽनु सर्वाः** इति देवात्मेशब्रह्मशब्दैः परमात्मा निर्दिश्यते । ते
: 'अपहतपाप्मा दिव्यो देव एको नारायणः', 'विश्वं नारायणं देवम्
मा नारायणः परः', 'अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठञ्च समाश्रितः । ईशः सर्व
', 'येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्' इत्यादिवाक
ायणप्रत्यभिज्ञापकाः । अत्रेशशब्दश्च न रूढ्या प्रयुक्तः । अपितु गुण
। '**अनीशश्चात्मा**,' '**ज्ञाज्ञौ द्वावजावीशनीशौ**', '**ईशः सर्वस्य**' इ
स्य सप्रतिसंबन्धितया अवयव( वार्थ? )विवक्षाज्ञापकत्वात् । **अनन्तश्चात्
रूपो ह्यकर्ता** इत्यत्रानन्तशब्दो योगरूढः । रूढ्यविवक्षानिमित्तसप्रतियोगित्व
ाभावात् ।

तृतीये च खण्डे, **य एतद्विदुरमृतास्ते भवन्तीत्यनेन**, 'अम्भस्यपार
ाकः प्रत्यभिज्ञाप्यते । स हि परमपुरुषविषयः । एवमुपक्रमो भगवत्परः । एवं
द्र इत्यस्यानन्तरम्, **विश्वतश्चक्षुरुत विश्वतोमुख** इति मन्त्रश्च भगवत्प्रत्यभि
: । तस्य विद्युद्वर्णपुरुषविषयत्वात् । **द्यावाभूमी** जनयन् देव एकः इ

---

सर्वव्याख्यानाधिकरणटीकायामस्या अप्युपनिषदो भगवत्परत्वस्थापनं रुद्रपरत्वभ्रमव्यु
कृतं जिज्ञासुशिक्षणसौकर्याय प्रायः शब्दत एवानुवदितुमारभते अस्याश्चेति ॥

, 'शीर्ष्णो द्यौः समवर्तत, पद्भ्यां भूमिः' इत्यस्य प्रत्यभिज्ञापकम् । यो देवा
भवश्चोद्भवश्च विश्वाधिको रुद्रो महर्षिः । हिरण्यगर्भं जनयामास पूः
येतत्तु यच्छब्दयोगादनुवादरूपतया प्रमाणान्तरसापेक्षतया दुर्बलम् । इदं रुः
हृचशतपथब्राह्मणावगतहिरण्यगर्भजन्यत्वविरोधि हिरण्यगर्भजनकत्वं न प्रतिप
ातुं प्रभवति । बह्वृचे , 'तदिदास भुवनेषु ज्येष्ठं यतो जज्ञे उग्रस्त्वेष नृम्णः । स
ज्ञानो निरिणाति शत्रून्' इति हिरण्यगर्भस्रष्टृत्वं रुद्रशब्दरूढ्यर्थस्य प्रतिपाद्यं
बालोपनिषदि, 'ललाटात् क्रोधजो रुद्रः' इति नारायणादुत्पन्नत्वं प्रतीयं
ोपनिषदि, सोऽन्यं कामं मनसा ध्यायीत । त्र्यक्षः शूलपाणिः पुरुषोऽजायत' इ
ारायणोपनिषदि, 'नारायणाद्रुद्रो जायते'इति । बृहदारण्यके, 'ब्रह्म वा इद' ि
ह्म प्रस्तुत्य, 'इन्द्रो वरुणः सोमो रुद्रः पर्जन्यः' इतीन्द्रादितुल्यतया रुद्रस
ह्मणः सकाशादुत्पत्तिः प्रतिपाद्यते । शतपथे अष्टमूर्तिब्राह्मणे, 'भूतानां
जापतिः संवत्सरमुषसि रेतोऽसिञ्चत् । संवत्सरे कुमारोऽजायत । सोऽरोदी
प्रजापतिरब्रवीत्, कुमार ! किं रोदिषीति । सोऽब्रवीत्, अनपहतपाप्मा
ाहमस्मीति अनाहितनामा; नाम मे धेहि पाप्मनोऽपहत्या इति । तं
ाजापतिरब्रवीत्, रुद्रोऽसीति' इत्यादिना रुद्रस्य चतुर्मुखजन्यत्वम् अनप
ाप्मत्वादिकमावेद्यते । तथा शैलालिब्राह्मणे चतुर्मुखसृष्टत्वं रुद्रस्य प्रतिपाद्य
ान्न च 'विरूपाक्षाय दन्ताञ्जये (दत्ताञ्जलये) ब्रह्मणः पुत्राय' इति ब्रह्मणः पु
ातीयते । 'सोऽब्रवीत् । वरं वृणै । अहमेव पशूनामधिपतिरसानीति । तस्मा
ाशूनामधिपतिः' इति वरदानलब्धपशुपतिभावः श्रूयते, 'विष्णोरेवा(षा)ऽस्य
ुविर्भिः । विधेहि रुद्रियं महत्त्वम्' इति विष्ण्वाराधनलब्धमहिमत्वं रुद्रस्य श्रूय
अतो हिरण्यगर्भजन्यत्वेन नारायणजन्यत्वेन च अनपहतपाप्मत्वेन कर्माधीनैश्वर्यव
व श्रुतस्य रुद्रस्य तद्विरुद्धहिरण्यगर्भजनकत्वस्य अवताररूपोत्पत्तिरिति विरोधपरिह

---

विरोधपरिहारस्य वा असंभवादित्यादर्थं न प्रतिपादयितुं प्रभवति
ागुक्तं प्रति हेतुः । मध्ये बह्वृचे इत्यारभ्य, 'श्रूयते । अतः' इत्यन्तेन तत्र हेतुर
बह्वृचादौ एवमेवंश्रवणादिति तदर्थः ।

[illegible]शिवशब्दस्य परमपुरुषविषयतां गमयति । तद्धि स्वयं समुद्रान् [illegible]पुरुषविषयम् । अतः, '**मा नस्तोक**' इति मन्त्रस्थरुद्रशब्दोऽप्य[illegible] शक्त्या अपर्यवसानवृत्त्या वा भगवद्विषयः ।

[अतः ?] पञ्चमखण्डे, '**भावाभावकरं शिव**'मिति शिव[illegible] व्याख्यातः ।

षष्ठे च — **यः कालकालः** इति कालस्यापि परिच्छेदकः काल उ[illegible] नायमन्तकः । **भगेशमित्यनेनापि** भगवच्छब्दवाच्यानामैश्वर्यादीनां षण्णामी[illegible] त्वमेव प्रतीयते । ऐश्वर्यनिरङ्कुशत्वमेवोक्तम्, **तमीश्वराणां परमं महेश्वरमि**[illegible] [ई]श्वराणामिति प्रतिसंबन्धिनिर्देशात् महेश्वरपदे रूढिर्न शक्यशङ्का । **देवतानां** [illegible] **दैवत**मित्यनन्तरनिर्देशवत् । तद्धि वाक्यं देवतापारम्यपरम् । तत्र च **दैवत**[illegible] [श]ब्दो न क्वचित् देवताविशेषे रूढौ । तत्स्थानीयश्च महेश्वरशब्दः । अते[illegible] [illegible]दृगुन्मेषः । **न तत्समश्च, पराऽस्य** शक्तिरित्यादिभिश्च तत्पारम्योपपादन[illegible] एको देवः,' 'एको नारायणः' इत्यनेनैकार्थ्यात् । **न तत्र सूर्यो भार्त**[illegible] [illegible]त्वश्च कठवल्ल्यधीतत्वात् विष्णोः प्रत्यभिज्ञापकः । **नान्यः पन्था** इति, पुंर[illegible] [illegible]रयति । ईशादिशब्दानां यौगिकत्वम्, ईशानत्वस्य निरुपाधिकत्वञ्च दर्शयति [illegible]ऽस्येति । '**यो ब्रह्माणं विदधाति पूर्वम्**, शरणं प्रपद्ये, **अमृतस्य परं से**[illegible] [illegible]ति निर्देशाश्च नारायणत्वसाधकाः । **य** इत्यनुवादरूपत्वात्; ब्रह्मणो भगवन्ना[illegible] [illegible]त्व[स्वि]स्य प्रमाणप्रतिपन्नत्वात्; 'निवासः शरणं सुहृत्' इति श्रुतेः; 'अ[illegible] [illegible]येप सेतुः' इति मुण्डके श्रवणात् । **यदा चर्मवदिति** वाक्यम् उपायान्तर[illegible] [illegible]परम्, **नान्यः पन्था** इत्युक्तार्थविवरणरूपम् ।

एवमुपक्रमोपसंहारादिभिः भगवत्परत्वावगमात् बहूपनिषच्छ्रुतयोग्यार्थासाधा[illegible] [illegible]भ्यस्तनारायणशब्दानुरोधेनैव नानार्थसाधारणैकैकोपनिषत्पठितायोग्यार्थशिवादि[illegible] [श]ब्दानां नेयत्वाच्चास्या उपनिषदो भगवत्परत्वं सिद्धमिति ॥

क्षेमाय यः करुणया क्षितिनिर्जराणां
भूमावजृम्भयत भाष्यसुधामुदारः ।
वामागमाध्वगवदावदतूलवातो
रामानुजः स मुनिराद्रियतां मदुक्तिम् ॥

इति श्रीमद्वाताचार्यचरणारविन्दचञ्चरीकस्य
वात्स्यानन्तार्यपादसेवासमधिगतशारीरकमीमांसाभाष्यहृदयस्य
परकालमुनिपादसेवासमधिगतपारमहंस्यस्य
**श्रीरङ्गरामानुजमुनेः**
कृतिषु
**श्वेताश्वतरोपनिषत्प्रकाशिका संपूर्णा ॥**
श्रीरस्तु
श्रीमते रङ्गरामानुजस्वामिने नमः ।

---

बृहदारण्यकान्तानां वेदान्तानां परिष्कृतिम् ।
विदधानः परिष्कारं भाषितानामपि क्रमात् ॥

विधित्सुस्तां विनम्यार्यान् वात्स्यः श्रीवीरराघवः ।
श्वेताश्वतरवेदान्तपरिष्कारं व्यधादिति ॥

मानस मदीय शुद्धो हंसः श्रीरङ्गलक्ष्मणो भवति ।
लसतु, श्वेताश्वतरश्रुतिर्यथादेव इति सदा भाव्या ॥

इति श्रीमद्वेदान्तरामानुजयतीन्द्रचरणारविन्दचञ्चरीकस्य
श्रीमद्रङ्गरामानुजयतीन्द्रचरणसरोजसेवासमधिगतसर्ववेदान्तार्थस्य
वात्स्यसच्चक्रवर्तिनो **वीरराघवाचार्यस्य**
कृतिषु उपनिषद्भाष्यपरिष्कारे
**श्वेताश्वतरोपनिषद्भाष्यपरिष्कारः ।**
शुभमस्तु ॥

श्रीः

## श्वेताश्वतरोपनिषदर्थसंग्रहकारिकाः



१. बृहदारण्यकान्तासु गतास्वीशादिषु क्रमात् ।
श्वेताश्वतरमन्त्रोपनिषदेकादशी स्थिता ॥

२. भोक्तृभोग्यात्मचिदचिदन्तरात्मैव कारणम् ।
अष्टाङ्गयोगतो जीवं समीक्ष्यैष निरीक्ष्यते ॥

३. एकोऽसौ भगवान् मुक्तेः पन्था जन्मलयादिकृत् ।
अकारार्थोऽयमग्न्यादिदेवतादिजगन्मयः ॥

४. कर्मार्हपरतन्त्राणुजीवतत्त्वविलक्षणः ।
ब्रह्मादिकृत् प्रपत्त्येकवश्यो विश्वफलप्रदः ॥

५. श्वेताश्वतरखण्डानां षट्केनेत्थं समीक्षितः ।
शिवरुद्रादिशब्दोक्त्या भगवान् पुरुषोत्तमः ॥

शुभमस्तु



श्रीः

# अथर्वशिखोपनिषत्

ेदीयोपनिषच्छान्तिपाठः—

भद्रं कर्णेभिः शृणुयाम देवाः भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवाँसस्तनूभिर्व्यशेम देवहितं यदायुः ॥
स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥

ओंशान्तिश्शान्तिश्शान्तिः ]

## प्रथमः खण्डः

म् । १ अथ हैनं ? ? पैप्पलादोऽङ्गिराः सनत्कुमारश्चाथर्वाणमुवाच—

---

श्रीः

श्री श्रीनिवासपरब्रह्मणे नमः

नोपनिषदां भाष्यं रामानुजमतानुगम् । रम्यं कृतं प्रपद्ये तं रङ्गरामानुजं मुनिम् ॥ ]

## श्रीरङ्गरामानुजमुनिविरचिता अथर्वशिखाप्रकाशिका ।

च्छसच्छायमञ्चितोरःस्थलं श्रिया । अञ्जनाचलशृङ्गारमञ्जलिर्मम गाहताम् ॥
मणयोगीन्द्रं प्रणम्यान्यान् गुरूनपि । कुर्वेऽथर्वशिखाव्याख्यां विदुषां तोषहेतवे ॥

ध्येयं निर्धारयितुमाख्यायिकामाह—**अथ हैनम्............** । पिप्पलाद-राश्च ब्रह्मपुलश्च (?) सनत्कुमारश्चाथर्वाणं गुरुमुपेत्य ऊचुः । **उवाचेति** प्रायेणैकवचनम् ।

---

श्रीः

श्रीमद्भ्यो रङ्गरामानुजमहादेशिकेभ्यो नमः

## अथर्वशिखोपनिषद्भाष्यपरिष्कारः

ईशान शम्भु शिवशब्दसमीरितोऽपि मुक्त्यर्थभक्तिविषयः पुरुषः स विष्णुः ।
इत्यादिशत् स्फुटमथर्वशिखेति तत्त्वं बुद्धं यतो भवतु तेभ्य इदं नमो नः ॥

. **ध्येयं निर्धारयितु**मिति । ध्यानकरण – ध्यान – ध्यातृ – ध्येयरूपांशचतुष्टयविषय-रूपाया अप्यस्या उपनिषदो ध्येयदेवताविशेषनिर्धारणैदम्पर्यं, 'न कारणं कारणाना' परनिषेधपूर्वं तदंशस्थापनोपपादनादवगम्यते ॥

नत्कुमारोऽपि कश्चित् पिप्पलादसुत इति भ्रान्तिव्युदासायाह **ब्रह्मपुत्र** इति । **ऊचुरिति,** एभ्योऽथर्वा प्रत्युवाच' इति वाक्ये प्रतिपाद्यपुरुषस्वरस बहुवचनान्तेदम्पदश्रवणात् प्रचारो निश्चित्य । एवञ्च पैप्पलादोऽन्यः, अङ्गिरा अन्य इति मन्तव्यम् । **पिप्पलादोऽङ्गिरा**

---

ोतिमङ्गलतालकोशः क अडयार् तालकोशः ख. मुद्रितकोशः ग.

. किमादौ प्रयुक्तं ध्यानं ध्यायितव्यम्, किं [तद्] ध्यानम्, को
, कश्च ध्येय इति ।

स एभ्योऽथर्वा प्रत्युवाच—ओमित्येतदक्षरमादौ प्रयुक्तं ध्यानं
मिति, एतदक्षरं परं ब्रह्म । ४. अस्य पादाश्चत्वारो वेदाः ।
दिदमक्षरं परं ब्रह्म ।

---

ध्यायते अनेनेति ध्यानं ध्यानकरणम् । उपासनस्याऽऽदौ प्रयुक्तो
ो ध्यातव्यो मन्त्रः क इत्यर्थः । कं[1] मन्त्रं ध्यात्वा आदावुच्चार्य ध्यानं
: । तथा ध्यानक्रिया किंदेवतारूपा ध्यातव्या । ध्याता किंदेवतारूपो
ध्येयो देवताविशेषः क इत्यर्थः । ३. एतदक्षरं परं ब्रह्म ।
(ब्रह्मबुद्धिः कर्तव्येत्यर्थः । ४. [2] अस्य ओंकारस्य अकार-उकार-
ारूपेषु चतुर्ष्ववयवेषु चतुर्वेदबुद्धिः कर्तव्येत्यर्थः । ५. एतस्मिन्
गस्तं परं ब्रह्म प्रतीकस्य चतुष्पात्त्वेन स्वयमपि चतुष्पादित्यर्थः ।

मन्त्रं. ग. 2. एषु चतुर्वेदबुद्धिः. तालकोशे.

---

ंत केचित् । तदा स्पष्टं बहुत्वम् । पिप्पलादः पैप्पलादोऽङ्गिरास्सनत्कुमारश्चेति
ाः स्यादित्यपि विमृश्यम् ॥ ध्यानकरणमन्त्रः क इत्येतावन्मात्रप्रश्ने ध्यायित-
र्थम् । ध्यानध्यातारौ किंदेवतारूपेण ध्यातव्यावित्येवोपरि प्रश्नः क्रियते, न तु
नम्, को नाम ध्यातेति । उपरि तैलधारावदविच्छिन्नस्मृतिसंततिर्ध्यानम्,
न्तःकरणो ध्यातेत्येवंरूपोत्तराभावात्, ध्यानं विष्णुः, ध्याता रुद्र इति देवता-
। अतो ध्यानकरणमन्त्रोपि किंरूपो ध्यातव्य इत्येव प्रथमप्रश्नोऽपि स्यात् ।
मन्त्रः प्रणवः । स च नानाक्षरसमाहारात्मकः । तत्र समुदायः ब्रह्मत्वेन
गाश्च लोकवेदतत्तद्देवतादिरूपेणेति उपरितनवर्णनोपपत्तिः । अतः किं ध्यायि-
रूपेण ध्यातव्यमित्यर्थो वर्णनीय इति, भाष्ये कं ध्यात्वेति किंरूपं ध्यात्वे-
न्ने तु ध्येयः किंरूपेण ध्येय इत्युक्तावपि ध्येयगोचरदृढविधेर्मोक्षार्थत्रियायाम-
पृष्टं भवतीति 'ध्येयो देवताविशेषः क' इत्येव प्रश्नपर्यवसानम् । तद्
ध्यानमितिपूर्वप्रयुक्तकरणार्थकल्युडन्तघटकधातूक्तं ध्यानमित्यर्थः ।

र्वोऽस्य मात्रा पृथिव्यकारः स ऋग्भिः ऋग्वेदो ब्रह्मा वसवो
त्यः । ७. द्वितीयाऽन्तरिक्षं स उकारः स यजुर्भिर्यजुर्वेदो
त्रिष्टुप् दक्षिणाग्निः । तृतीया द्यौः स मकारः स सामभिः
दित्याः जगत्याहवनीयः । याऽवसानेऽस्य चतुर्थ्यर्धमात्रा सा
कारः साऽथर्वणैर्मन्त्रैरथर्ववेदः संवर्तकोऽग्निर्मरुतो विराडेकर्षिः ।

स्वती स्मृता प्रथमा रक्तपीता महद्ब्रह्मदे( दै )वत्या ।

---

अकार-उकार-मकार-नादरूपार्धमात्रात्मकान् ओंकारावयवान् पृथि-
सोमलोकत्वैः, ऋग्यजुस्सामाथर्वणत्वैः, ब्रह्मविष्णुरुद्रसंवर्तकाग्नित्वैः,
त्वैः, गायत्रीत्रिष्टुब्जगतीविराट्त्वैः, गार्हपत्यदक्षिणाग्न्याहवनीयै-
--पूर्वोऽस्य........ । ऋग्भिः ऋग्वेदः ऋङ्मन्त्रोपेतः ऋग्वेद
तरत्रापि । सूर्यलोकलक्षणद्युलोकापेक्षया चन्द्रलोकस्योर्ध्ववर्तित्वम्
लोकस्य द्युलोकापेक्षया पृथङ्निर्देशोपपत्तिः । आथर्वणिकानामेकाग्नि-
णाग्न्याहवनीयाभावात् तस्यैवैकाग्नेरेकर्षिशब्दितस्य गार्हपत्यादि-
ग्रते ॥ नन्ववसाने श्रूयमाणनादात्मिकाया अर्धमात्रायाः, अर्धमात्र-
नादैकविग्रहः इति प्रमाणप्रतिपन्नाया ओंकारभिन्नत्वात् कथमस्या
कार इत्युक्तिरिति चेत्—' अर्धमात्रात्मको नादो ब्रह्मनादैकविग्रह '
' ततोऽभूत् त्रिवृदोंकारः ' इति ओंकारप्रकृतित्वस्य श्रवणात्
व्यपदेश इति द्रष्टव्यम् ॥

॥ अकाराख्या अर्ध (?) मात्रा भास्वतीनाम्नी रक्तपीतवर्णा महत्त्व-

क. क.

---

: स्मृताः इति पृथग्वाक्यपाठस्सर्वत्र । (८-१३) तात्पर्यचन्द्रिकायामपि
थमेत्यादिवाक्यमुपात्तम् । एवं नृसिंहतापनीयेऽपि । तद्धि माण्डूक्याथर्व-
हुलमनूद्य वर्णयति ।

९. द्वितीया विद्युमती कृष्णा विष्णुदेवत्या। शुभाशुभा शुक्ला रुद्रदेवत्या। ११. याऽवसानेऽस्य विद्युमती सर्ववर्णा पुरुषदेवत्या। १२. स एष ह्योंकारश्चतुरक्षरशिरश्चतुरर्धमात्रः (श्चतुर्थमात्रः)। १३. स्थूलमेतं सत् ( ह्रस्वदीर्घप्लुतमिति। १४. ओं १ ओं २ ओं ३ [ सः

---

९. विद्युमतीति स्मृता कृष्णवर्णेत्यर्थः। १०. [1]शुभा शुक्लवर्णेत्यर्थः। ११. अत्र पुरुषशब्देन वासुदेव उच्यते।

"भगवानिति शब्दोऽयं तथा पुरुष इत्यपि।
निरुपाधी च वर्तेते वासुदेवे सनातने॥"

"पुरुसंज्ञे शरीरेऽस्मिन् शयनात् पुरुषो हरिः।
शकारस्य षकारोऽयं व्यत्ययेन प्रयुज्यते॥"

"स्त्रीप्रायमितरत् सर्वं जगत् स्थावरजङ्गमम्।
ऋते तमेकं पुरुषं वासुदेवं सनातनम्॥"

"ब्रह्माद्याः सकला देवा यक्षगन्धर्वकिंनराः।
ते सर्वे पुरुषांशत्वादुच्यन्ते पुरुषा इति॥"

इति स्मरणादिति द्रष्टव्यम्।

१२. चतुर्थी अर्धमात्रा यस्य स तथोक्तः। पूरणप्रत्ययाभावा
१३+१४. स्थूलमेतं सत् ह्रस्वदीर्घप्लुतमिति। स्थूलं मिलितं प्लुतभेदेन[3] त्रिविधमित्यर्थः। तदेव प्रदर्शयति ओं १. ओं २. ओं ह्रस्वाभावात् कथमोंकारस्य ह्रस्वत्वमिति शङ्क्यम्– न्यूङ्खेषु ह्रस्वस्यापि

1. शुभेतिप्रसिद्धा. 2. प्रत्ययाभावः. ग. 3. प्लुतभावेन. क.

---

११. त्रिवृदोंकारं प्रति नादस्य प्रकृतित्ववत् पुरुषस्य वासुदेवस्य त्रिदेवतात्वोपपत्तिः।

१३. स्थूलमेतं सदिति पाठमादृत्य आङ्पूर्वकइण्धातोः क्तप्रत्यये एतमिति कमुक्तमिति ज्ञायते। स्थूलमेतदित्येव पाठश्चेत्, स्थूलपदमेव मिलितार्थकं नेयम् प्रश्नोपनिषदि तु ह्रस्वदीर्घप्लुतानां मात्रापदेन ग्रहणम्। न्यूङ्खेष्विति। न्यूङ्खकादि व्याकरणे वाचस्पत्यादौ च द्रष्टव्यम्।

१५. इति त्रिरुक्त्वा चतुर्थश्शान्त आत्मा प्लुत [प्रणव] प्रयोगेण मोमिति प्रयुक्त (ज्य) आत्म (प्रयुक्तमात्म) ज्योतिः सकृदावर्तते ।

**१६. प्राणान् सकृदुच्चारितमात्रस्स एष ऊर्ध्वमुन्नमयतीत्योंकारः । [ सर्वान् प्रलीयत इति प्रलयः ।**

---

एवमुक्तप्रकारेण अकार-उकार-मकारात्मकात्रयवत्त्रयप्राधान्येन ब्रह्मविष्णुरुद्र-तानुसंधानपूर्वकं ह्रस्वदीर्घप्लुतरूपेण त्रिरुक्त्वा—**चतुर्थः** तुरीयमात्रार्धभूतः ेदतो वासुदेवः शान्ताख्यो महात्मा चतुर्मात्रप्लुतप्रयोगेण अनुसंदधान[1] ान?) स्सन् **सकृत्** एकरूपतया **स्वात्मज्योतिः** स्वप्रकाशज्ञानमयः ते **आ** = समन्तात् हृदये वर्तत इत्यर्थः । चतुर्थार्धमात्रयाऽनुसंहितः । हृदये प्रतिष्ठितो भवतीत्यर्थः ।

ओंकारादिनामानि[2] निर्वक्ति — १६. ऊर्ध्वलोक**मुन्न**[3]**मयति** प्रापयति । कार इत्यर्थः ।

1. संधानस्सन्. क. 2. नामादीनि. ख. 3. उन्नामयति. ग.

---

१५. **इति** त्रिरित्यत्र इतीत्यस्य एवमित्यर्थः । तद्विवरणम् उक्तरूपेणेति । **समस्तमिति** ोषणम् । कृत्स्नयेत्यर्थः । समस्तम् ओमिति प्लुतप्रयोगेण प्रयुक्त इत्यन्वयः । प्रकर्षेण ोगविषयीकृतः अनुसंहितः प्रयुक्त इति आत्मविशेषणम् । **आत्मपदात्मज्योतिः** ्यादेवं व्याख्यातम् । अन्यथा पुनः—**चतुर्थः** नादरूपः, **शान्त आत्मा** विना प्रणवं ईस्वरूपः प्लुतप्रणवविशिष्टतयैव समस्ततया ओमिति प्रयुज्यमानः स्वात्मस्वरूपं प्रकाशयन् भवति । एषा ह्रस्वदीर्घप्लुतानां पृथक् पृथक् प्रयोगानन्तरं प्लुतस्य ( सनादस्य ) रमावृत्तिः समस्तप्रणवप्रयोगः इति वाक्यार्थो वक्तव्यः । **मात्रार्धे**ति वासुदेवे शान्तात्मनि इति चतुर्थार्धमात्राऽभेदारोपः । उक्तत्रिमूर्त्यधिकत्वाद्वा चतुर्थता । 'चतुर्थं मन्यन्ते स इति माण्डूक्येऽप्युक्तम् । अत्र अकारादौ क्रमेण ब्रह्मविष्णुरुद्रत्वोक्तिः, माण्डूक्ये क्रमेण द्युम्नसंकर्षणत्वोक्तिश्च अविरुद्धा; चतुर्मुखस्य जागरस्रष्टुरनिरुद्धाधीनत्वात्, रुद्रस्य च कर्षणाधीनत्वात् अत्रापि माण्डूक्योक्त एव तात्पर्यात् ।

१७. प्राणान् सर्वान् परमात्मनि प्रणामयतीत्येत चतुर्थोऽवस्थित इति १८. सर्ववेददेवयोनिः, सर्ववाच्य (च्यवस्तु) प्रणवात्मकम् ।

इत्यथर्वशिखायां प्रथमः खण्डः ।

(२)

१. देवांश्च समुद्धर्ता सर्वेभ्यो दुःखभयेभ्यस्संतारय तारः । २. सर्वे देवा अस्मिन् विशन्तीति विष्णुः ।

---

१७+१८. सर्वेन्द्रियाणि [1] परमात्मप्रवणानि करोतीति **चतुर्थोऽवस्थितः ।** प्रणव उक्तरीत्या अकार-उकार मकार-न अवस्थित इत्यर्थः । तस्यैवोंकारस्यावयवभूतानां [2] पादानां ऋग्य रूपत्वात्, (?), ब्रह्मविष्णुरुद्रसंवर्तकाग्निरूपत्वात्, वसुरुद्रादित्यमरु त्यादिच्छन्दोरूपत्वाच्च [4] सर्ववेददेवयोनित्वमोंकारस्य । अत एव प्रणवात्मकञ्चे(?)त्यर्थः ।

१. देवान् सत्त्वप्रकृतिकान् समुद्धर्ता । तदेव विवृणोति— अतः प्रणवस्य तारशब्दितत्वमित्यर्थः । २. सर्वे **देवाः** ब्रह्माद्या प्रविष्टा इति ओंकार एव विष्णुरित्यर्थः ।

1. परमात्मनि द्रवणानि. क. 2. पदानां. ग. 3. वे
4. रूपत्वाद्वा. ग. मूले सर्ववेददेवयोनिस्सर्ववाक्यञ्च. क. सर्ववेदयोनिस्सर्वा

---

१७+१८. **गायत्र्यादीति** पञ्चम्यन्तं वेदरूपत्वादित्येतत्समनन्तरमे **वाक्यवस्तु प्रणवात्मकमिति** शङ्करानन्दपाठः । **वाक्यं** नाम । **वस्तु** नामरूपं ब्रह्मात्मकमिति तदुक्तोऽर्थः । **सर्ववाच्यवस्तु प्रणवात्मकमिति** त्कोशे । सर्ववाक्यञ्च प्रणवात्मकमिति पाठेऽपि सर्वस्यापि वैदिकवाक्यस्य मन्‍ प्रयोगात् प्रणवात्मकत्वं विवक्षितं स्यात् ? ।

३. सर्वाणि बृंह(ब्रह्म)यतीति ब्रह्म । सर्वस्यान्तःस्थाने ध्यायिभ्य
वत् प्रकाशयतीति प्रकाशः [प्रकाशः] प्रकाशेभ्यः । ४. सद
त्यन्तश्शरीरे विद्योतयति (विद्युद्वद् द्योतयति) मुहुर्मुहुरिति
दिति प्रतीयात् । ५. दिशं दिशं भित्त्वा सर्वान् लोकान् व्याप्नोति
तीति व्यापनाद्व्यापी महादेवः ।

६. पूर्वाऽस्य मात्रा जागर्ति जागरितम् । ७. द्वितीया स्वप्नम्
ा सुषुप्तिः । चतुर्थी(र्थः)तुरीयम् ।

---

३. सर्वाणि[1] स्वानुसंधातृभूतानि ज्ञानानन्दादिगुणैः बृंह (ब्रह्म)यति
ति ब्रह्म । सर्वस्यान्तःस्थाने ध्यायिभ्यः प्रदीपवत् प्रकाशयतीति
:–(?) प्रकाशेभ्यः[2] । सर्वस्य [3]ध्यातृजनस्यान्तःस्थाने हृदये वर्तमान-
यायिभ्यः स्वेन ब्रह्मध्यायिभ्यः प्रदीपवत् ध्येयं प्रकाशयतीति प्रकाशः
भ्यः अपि सूर्यादिभ्यः अतिशयिततया प्रकाशयतीति प्रकाश इत्यर्थः ।
ा ओमिति अन्तःशरीरे [4]हृदयस्थाने मुहुर्मुहुस्तत्त्वं विद्योतयतीति
ति प्रतीयात् विद्युदात्मकतया जानीयादित्यर्थः । दिशं भित्त्वा दिक्कृत-
दमन्तरेण सर्वदिग्देशवर्तिव्यापकतया व्यापित्वम् । व्यापित्वादेव महादेवत्वम
स्यैव महत्त्वा (?) दिति भावः ॥

एवतुमस्सरणार्थं नामानि निरुच्य, अथ 'एतदक्षरं परं ब्रह्म' इति प्रक्रमो-
ब्रह्मध्यानसाधनत्वं निरूप्यते–पूर्वाऽस्य मात्रा जागर्ति । "जागरिते
श्रुतेः जाग्रद्दशासंपादकत्वादकारस्य ब्रह्मणो जागर्तीत्युक्तिः । अतः पूर्वमात्रैव
तम् । तुरीयम् मोक्ष इत्यर्थः । ब्रह्मविष्णुरुद्रपुरुषशब्दितानां चतुर्णाम्
–उकार–मकार–अर्धमात्रार्थानां जागरितस्वप्नसुषुप्तिमुक्त्यवस्थासंपादकत्वात

सर्वाणीत्यत्र 'ब्रह्म' इति. ग. 2. प्रकाशेभ्य इति न. ग. 3. सर्वस्यान्तः. ख
न्तश्शरीरे विद्योतयति हृदयस्थाने. क.

---

प्रकाशः प्रकाशः प्रकाशेभ्य इति द्विरावृत्तपाठो भाष्येपि संमतो वेति विमृश्यम् ।

८, माता मात्राः प्रतिमात्रा गताः । ९. सम्यक् सम
जयतीति स्वयं प्रकाशः स्वयं ब्रह्म भवतीत्येष सिद्धिकरः ।
ध्यानादौ प्रयुज्यते । ११. सर्वकरणोपसंहारत्वात् धार्य
तुरीयम् ॥ १२. सर्वकरणानि मनसि संप्रतिष्ठाप्य ध्यानं

---

तदभिमानित्वाच्च । "जागरिते ब्रह्मा ; स्वप्ने विष्णुः ; सुषुप्ते
परमक्षरम्" इति श्रुत्यन्तरात । [ **माता ?** ] एवं प्रमात्रा = एवम्
**मात्राः** [1] चतस्रोऽपि मात्राः [ **प्रतिमात्राः गताः ?** ] प्रतिनियत
भवन्तीत्यर्थः । ९. समस्तान् ब्रह्मवादान् जयतीत्यर्थः । **स्वयं**
आविर्भूतब्राह्मरूपो * भवतीत्यर्थः । **एषः** ओंकारः सर्वसि
**एतस्मात् ध्यानादौ प्रयुज्यते ।** एतस्माद्धेतोः ध्यानादौ प्रणवः प्र
**सर्व**[2]**करणोपसंहारत्वात्** सर्वेन्द्रियवशीकरणहेतुत्वादित्यर्थः । **धार्य**
यस्य ब्रह्मणोऽवधारणहेतुत्वाच्च, ब्रह्मप्राप्तिसाधनत्वाद् ब्रह्मप्रतीकत्वाद्
गाच्चैतदेव ब्रह्मेत्यर्थः ॥

एवं प्रथमप्रश्नस्योत्तरमुक्त्वा द्वितीयप्रश्नस्योत्तरमाह—**सर्वक**
**विष्णुः** । सर्वाणि बाह्येन्द्रियाणि मनसि विलीनानि कृत्वा क्रियमाणं
**विष्णुः** । विष्णुरूपत्व[4]ध्यानं कर्तव्यमित्यर्थः ।

* आविर्भूतस्वरूपो. ख. ग.

1. 'चतस्रोऽपि मात्रा इत्यर्थ' इत्येतावदेव. क. कोशेषु वाक्यार
नास्ति । **मात्रामात्राः** चतस्रोऽपि मात्रा इत्यस्ति । 2. कारण. ग 3
4. विष्णुस्वरूप. ग. एतदुपरि ग. कोशे बहुलं व्याख्येयव्याख्यानव्युत्क्रमसं

---

**ब्रह्मगुणेति** । परस्य ब्रह्मणो बृहत्त्वमप्यस्ति । प्रणवे तदभावेऽपि
त्वमस्तीति भावः ।

**ध्यानं विष्णुरिति** । अत्र ज्ञानस्य स्वयंप्रकाशतया मितिमातृमेयरूपत्रि
निर्विकल्पसमाधौ, "अधराहितचारुवंशनालाः मकुटालम्बिमयूरपिञ्छमालाः ।
विभक्तनीलाः प्रतिभास्सन्तु" "दयाशिशिरिताशया मनसि मे सदा जागृयुः श्रिय
संविदः" इति श्रीदेशिकोक्तदिशा मितिमेयभेदापरिस्फूर्त्या मेयमात्रशेषणा
ध्येयविष्णुमयमेव भवति । तदेवं ध्यानं श्रेष्ठमिति दर्शितम् । अनेनैव ध्येयो विष

**१३. प्राणं मनसि सह करणैस्संप्रतिष्ठाप्य ध्याता र**
**१४. प्राणं मनसि सह करणैर्नादान्ते परमात्मनि संप्रति**
**ध्यायीतेशानं प्रध्यायितव्यम्। १५. सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते [**

तृतीयस्योत्तरमाह—**प्राणं........रुद्रः** । मनसि प्रविलापितैरिन्द्रि
**प्राण**मपि जीवमपि, "यच्छेद्वाङ्मनसी प्राज्ञस्तद् यच्छेद् ज्ञान आत्मनि ।
आत्मनि महति नियच्छेत् तद् यच्छेच्छान्त आत्मनि" इत्युक्तरीत्या परम
संप्रतिष्ठाप्य ध्याता पुमान् रुद्ररूपः । ध्याता रुद्रबुद्ध्या ध्यातव्य इत्यर्थः ।

कश्च ध्येय इति चतुर्थस्योत्तरमाह—**प्राणं–प्रध्यायितव्यम्** । **ना**
अर्धमात्रावसाने परमात्मनि जीवं **संप्रतिष्ठाप्य** तच्छेषतैकप्रवणं कृत्वा प्रकर्षेण ध्
यमीशानं ध्यायीतेत्यर्थः। एवञ्च **ईशान**शब्दितो देवताविशेषो ध्यातव्य इत्युक्तं भ
**प्रध्यायितव्यम्** इति आत्वाभावेडा[1]गमौ छान्दसौ । तस्यैव प्रकर्षेण ध्यात
युक्तिमाह **सर्वम्**– । **सर्वमिदं** चिदचिदात्मकप्रपञ्चभूतं [2] प्रसिद्धाः ब्रह्मविष्णुरु

1. इगा. तालकोशे । इडा. ग. 2. प्रपञ्चः ग.

---

ध्याता रुद्रः । विष्णूपासकेषु योगिषु मध्ये सर्वज्ञो रुद्र एव सम्यक् परमात्मनो ध्
अस्मिन् रुद्रभावना ध्यातुर्ध्यानपरिनिष्पत्त्युपयोगिनीति भावः । अनेन परमैकान्तिनोऽ
गौरवातिशयः, न तु मुक्त्यर्थमुपास्यत्वमिति च दर्शितम् ॥ अत्र प्रथमवाक्ये सर्वकरणानां
प्रतिष्ठापनम्, द्वितीयवाक्ये प्राणस्यापि मनसि प्रतिष्ठापनम्, तृतीयवाक्ये मनसीव परम
प्रतिष्ठापनञ्च क्रमेणोक्तमस्ति । तथाच प्रत्याहारः, प्राणायामः, ध्यानधारणादि च क्रमेणोप
प्रतीयते । तत्रैतद्वाक्यत्रयमुख्यार्थभूतेषु, 'ध्यानं विष्णुः,' 'ध्याता रुद्रः,' 'ध्यायी
प्रध्यायितव्यम्' इत्येतेषु प्रत्याहाराद्यर्थत्रयक्रमस्य न कश्चित् प्रतिनियत उपयोगो ल
अतः तत्तदंशव्युत्पादनमात्रे श्रुतेस्तात्पर्यम्; सर्वं सर्वत्र विवक्षितमेव इत्यभिप्रेत्य द्वितीय
एव, 'परमात्मनि संप्रतिष्ठाप्य' इति परमात्मघटनं कृतं भाष्ये । प्राणायामस्य च प्रत्याहार
पूर्वाङ्गतया अष्टाङ्गयोगे परिगणनात् पूर्ववाक्ये करणप्रतिष्ठापने कथिते प्राणायामोऽपि कथि
इति प्राणपदं जीवपरं स्वीकृतम् । अथवा ध्यानस्य विष्णुमयत्वं विष्णुमात्रगोचरत्वं विषय
भूतदेवमनुष्यादितः करणानां प्रत्याहारे सत्येवेति पूर्ववाक्ये तावदुक्तम् । ध्यातुः रुद्रताद
भावना च रुद्रवत् स्वात्मनः परमात्मनि प्रतिष्ठापने कृत एव भवितुमर्हतीति द्वितीयवाक्ये
तात्पर्यं तद् विवक्षितम् । मोक्षार्थध्येयेशानध्यानञ्च नादान्ते परमात्मनि प्रतिष्ठान एव, स
पदार्थापरिचये इति तृतीयवाक्ये दर्शितमिति प्रतिनियतनिर्देशोपपत्तिर्विमृश्या । तृतीयवा
**पदार्थसंग्रहवर्णितोऽर्थ** उपरि दर्शयिष्यते । एवं, 'न कारण'मित्यस्य **श्रुतप्रकाशिकोक्तोऽर्थ**

**संप्रसूयन्ते सर्वाणि चेन्द्रियाणि सह भूतैः । १६. न कारणं का ध्याता । १७. कारणं तु ध्येयस्सर्वैश्वर्यसंपन्नः सर्वेश्वरः शम्भुः**

---

भूतेन्द्रियैस्सहोत्पद्यन्ते । अत उत्पत्तिमत्त्वादेषां न प्रकर्षेण ध्यात
ननु सर्वकारणत्वेन प्रसिद्धयोर्ब्रह्मरुद्रयोः कुतो न प्रध्यातव्यत्वमित्यत्राह
........ ।। **धाता** ब्रह्मा कारणभूतोऽपि, पूर्वत्र ' ध्याता रुद्रः ' इति ध
रुद्रः [1] जगत्कारणभूतोऽपि जगत्कारणकारणं न भवतीत्यर्थः ।

पुनः किं ध्येयमित्यत्राह—**कारणं तु....** । **कारणं** चेत
प्रपञ्चकारणभूतः **सर्वेश्वरः** सर्वनियन्ता **सर्वैश्वर्यसंपन्नः** सर्वेण=सर्वविध
शेषित्वेन, मातापितृनृपलोकपालादिनिष्ठेनापि शेषित्वेन, संपन्नः, मात
च यः स एव, शं भवत्यस्मादिति **शम्भुः** मोक्षप्रद इत्यर्थः । स एव ह
ध्यातव्यः, न त्वीशानशब्दवाच्यः संहर्ता रुद्र इत्यर्थः ।

[ " इति नारायणः शम्भुर्भगवान् जगतां पतिः ।
संदिश्य विबुधान् सर्वानजायत यदोः कुले ।। "

इति शम्भुशब्दस्य भगवत्परतायाः तदुत्पत्तेरवताररूपतायाश्चोपबृंहितत्व
शब्दोऽपि भगवत्परः । **ब्रह्मविष्णुरुद्रेन्द्रा** इति श्रूयमाणाऽपि विष्णोर

1. रुद्रश्च. क.

---

नन्वस्तु नाम विष्णोर्जन्म अवतारभूतम् । अथापि तस्य रुद्रादिवदुपास्यत
सर्वकारणस्य पुरुषस्य परवासुदेवस्यैवोपास्यत्वविधानादिति चेन्न—विष्णुपुराणे,
वै बोधस्तेषामप्यन्यतो यतः ' इत्येवं परतन्त्रोपासनस्यैव मोक्षाहेतुत्ववर्णनात् ।
देवाभिन्नतयाऽनुपास्यत्वायोगाच्च । अत एव, ध्यानं विष्णुः इति परध्यानस्य हि
वोक्तम् । ' विभवार्चनाद् व्यूहं प्राप्य व्यूहार्चनात् परं ब्रह्म वासुदेवाख्यं प्रतिप
विष्णूपासनं क्रमिकमुक्तिहेतुरपि स्यात् । तथा फलान्तरहेतुरपि ; परोपासनं पुनः
हेतुरिति तत्र श्रुतेरादरः । किञ्च यथा परिच्छिन्नविभवः प्रतीयते विष्णुः, तथा त
पास्यत्वमेव । परवासुदेवाभिन्नतया ताद्रूप्येणोपासनं तु नासंमतम् । ब्रह्मरु
ताद्रूप्येणोपासनमिष्टम् । परंतु ताद्रूप्यमिदं प्रमाणबलात् तत्र शरीरात्मभावरूपम्,
साक्षादभेद इति विशेषः । अत एव, ' विष्णोःसकाशादुद्भूतं जगत्तत्रैव च स्थि
परमर्षिपराशरसूक्तिरिति ।

**१८. ध्रुवं स्तब्ध्वाऽधिकं क्षणमेकम्, क्रतुशतस्यापि चतुस्सप्तत्या यत् तदाप्नोति कृत्स्नमोंकारंगतिश्च सर्वध्यानयोगज्ञानानां यत् फलम्।**

---

द्रष्टव्यम्? ] " अजायमानो बहुधा विजायते ", " पिता पुत्रेण पितृमान् नौ " इत्यादिश्रुतिरप्यत्रानुसंधेया ।

**एकं क्षणमधिकं वा ध्रुवं = स्थिरं परमात्मानं स्तब्ध्वा नैश्चल्येन** ध्यात्वा

---

अजायमान इति वाक्यमिदं सर्वव्याख्यानाधिकरणश्रुतप्रकाशिकायामथर्वशिखानिर्वाहे ोपादानस्थल इव अत्रापि विष्णूपत्तेरवताररूपत्वस्थापनार्थमेव प्रवृत्तम् अन्यथा असंगतेरिति, त्रचतुरवाक्यव्याख्यानानन्तरनिविष्टः " इति नारायणः शम्भुः " इत्यादिः 'द्रष्टव्य'मि- न्थोऽत्रैव भाव्य इति अत्रैव मुद्रितः । शम्भुशब्दस्याप्यत्रैव सत्वात् उपरितद्ग्रन्था- ।

त्रेदमथर्वशिखारहस्यम्—कश्च ध्येय इत्यस्य साक्षात् समानाकारमुत्तरम्—**कारणं तु ध्येय** च्छेषतया प्रवृत्ते, 'ध्यायीतेशानं प्रध्यायितव्यम्' इति वाक्ये इदमुच्यते । ईशानं ध्यायेत् । शानम्? न रुद्राभिधमीशानम्, किंतु प्रध्यातव्यम्, प्रकर्षेण ध्यानार्हम्, प्रकर्षेण ध्येयतया मीशानम् । प्रकृष्टध्यानं नाम मोक्षार्थध्यानम् । प्रसिद्धेशानव्यावर्तनाय **प्रध्यातव्य**मिति कुतस्स रुद्र ईशानः प्रध्यातव्यो न भवतीत्याशङ्कां परिहर्तुं **सर्वमिद**मिति वाक्यं

---

.. **आकाशमध्य**इत्येतदनन्तरं पुनर्ध्येयपदं नास्तीति श्रुतप्रकाशिकाशैल्याऽप्यवगम्यते, यारभ्य वाक्यैक्यात् । 2. **ओंकारगत**मिति क्वचित् पाठः ।

त्र पाठभेदादेस्सुगमत्वाय आनन्दात्मशिष्यशङ्करानन्दकृतप्रतिपदव्याख्यातालकोशग्रन्थात ा उद्ध्रियते—**अर्धमात्रा अर्धं** विन्दुः । तद्रूपा मात्रा । **संवर्तकोऽग्निः** संकर्षणः । **भास्वतीः स्मृताः** । भास्वत्यो विचित्रवर्णाः प्रकाशादिकाः; स्मृताः चिन्तिताः । महदाख्यम् । **शुभाशुभा** पुण्यपापरूपा, एतन्नाम्नी च । **चतुष्पादः** ऋग्वेदादिः । **चतुश्शिरः** ब्रह्मविष्णुरुद्रपुरुषरूपशिरस्कः । चतुश्शिरा एव चतुश्शिरः[1] **मात्रः** । गार्हपत्याद्यग्नय एवार्धमात्रा इति । **प्लुतप्रयोगेण** प्लुतातीतत्वेन प्रणवस्य । प्राणानुद्दिश्य **प्रलीयते** लयं याति । प्राणान् स्वस्मिन् लयं नयतीति वा । **प्रणामय**ते प्रापयति । **चतुर्धावस्थितः** पृथिव्यादिरूपैश्चतुष्प्रकारावस्थितः । **इति** अस्मात् कारणात् ब्रयोनिः । **सर्ववाक्यवस्तु** सर्वनामरूपम् **प्रणवात्मकम्** प्रणवस्वरूपम् । **देवाश्चेति**

---

चतुश्शिरआदिपदानामस्मद्भाष्ये विशेषव्याख्यानादर्शनात्, चतुरर्धमात्रत्वादेव चतुरक्षर मात्र इति चतुश्शिरा इति शोध्यत इत्येतावानेवार्थोऽभिमतः स्यादित्यवगम्यते ।

**१९. ओंकारो वेदपर ईशो वा। २०. शिव एको ध्येय सर्वमन्यत् परित्यज्य। २१. समाप्ताऽथर्वशिखेति।**

---

[1] क्रतुशतचतुस्सप्ततिफलमाप्नोति कृत्स्नम् **ओंकारगतिं** ओंकारप्राप्यं फल तीत्यर्थः। सर्वध्यानयोगज्ञानानां यत् फलम्, तत् फलं प्राप्नोतीत्य ध्यानकरणमोंकारं स्तौति **ओंकारः—**। सर्वस्माद्वेदात् ओंकारः श्रेष्ठ सर्वफलप्रदाने **ईशः** शक्तश्चेत्यर्थः। **वा**शब्दश्चार्थे॥

ध्येयमुपसंहृति—**शिवः—परित्यज्य**। अन्यत् सर्वं परित्यज्य। **नारायणः** शम्भुर्भगवान् जगतां पतिः........विष्णोरुत्पत्तिरवताररूपेति द्रष्ट **शिवंकरः** [2]शिवकरः मोक्षपदश्शिव एव ध्येयः। अत्रत्यशिवंक प्रसिद्धशिवव्यावृत्त्यर्थः॥ वक्तव्यांशं (शे?) किमपि नावशिष्टमिति श्रुतिराह—**समाप्ताऽथर्वशिखेति।**

1 ध्यात्वा यत् फलं तच्चाप्नोति. क. 2. शंकरः ग. 3. शिवशंकर
* इदं वाक्यं पूर्णं पूर्वपुटे मुद्रितम्।

---

देवादयोऽपि प्रणवात्मका इत्यनेन प्रकारेण। **संधत्ताम्** संधत्त = सम्यग् ध्यानं कुरुत। स्थानशब्दाभिधेयेभ्यः। **ध्यायिभ्यः** ध्यानशीलेभ्यः अधिकारिभ्य (चतुर्थी) [अत्र 'स शरीरे स्थनेभ्यः प्रकाशयतीति प्रकाशः प्रकाशः प्रकाशेभ्यः। सद्योमिति विद्युमद् मुहुर्मुहुरिति विद्युद्वन् प्रनीयात् इति पाठः। दिशं दिशमिति द्विः पाठो नास्ति व्यापयतीति पाठः] जागर्ति जागरणं करोति। तेन सा जागरणम्। [अत्र **मात्रे**त्यादेः पवर्ण्य, 'मात्राचतुष्टयान्नाधिकमित्यर्थः' इति भावो वर्णितः।] सर्वमिदं ब्रह्मविष्णुरुद्रै ते ब्रह्मादयः **संप्रसूयन्ते** स्वामिनं सर्वमिदमुत्पादयन्ति। [अत्रापि **सर्वं** इति किमीश्वरस्वरूपमिन्द्रियभूतमायाध्यातृरूपमन्यद्वेत्यत्राह **सर्वाणि** चेति। **कारणमि** च्यते। इन्द्रियादि न ध्येयमित्यर्थः। किंतु कारणमेव ध्येयम्। कारणमिह मायाया [सर्वेश्वरश्चेति चकारसहितपाठः] **शम्भुः** सुखकारणम्। **आकाशमध्य** इति। उ आकाशमध्यं स्तब्धतां नीतमित्यर्थः। ओंकारो यत् फलं वेद जानाति, तदप्याप्नोति। **वा** परः ईश एवेति॥

२२. एतामधीत्य द्विजो गर्भवासात् विमुक्तो विमुच्यते ;
ामधीत्य द्विजो गर्भवासाद्विमुक्तो विमुच्यत इति [ओं सत्यमित्युपनिषत्

इति द्वितीयः ? खण्डः । ओं भद्रं कर्णेभिरिति शान्तिः ।

**इत्यथर्वशिखोपनिषत् ॥**

॥ श्रीरस्तु ॥

---

एताम्........ः । एतामुपनिषदमधीत्य पूर्वोऽपि जनो विमुक्तः । अद्याप
ामानो (अधीयानो ?) विमुच्यत इत्यर्थः । द्विरुक्तिरुपनिषत्समाप्त्यर्था ॥

क्षेमाय यः करुणया क्षितिनिर्जराणां
भूमावजृम्भयत भाष्यसुधामुदारः ।
वामागमाध्वगवदावदतूलवातो
रामानुजः स मुनिराद्रियतां मदुक्तिम् ॥

इति श्रीमत्ताताचार्यचरणारविन्दचञ्चरीकस्य वात्स्यानन्तार्यपादसेवा-
समधिगतशारीरकमीमांसाभाष्यहृदयस्य परकालमुनिपादसेवा-
समधिगतपारमहंस्यस्य श्रीरङ्गरामानुजमुनेः कृतिषु
अथर्वशिखोपनिषत्प्रकाशिका संपूर्णा ।

॥ शुभमस्तु ॥

---

ितम् । सर्वस्यैव प्रपञ्चस्य, ब्रह्मरुद्रादेरपि कार्यत्वात्,

" आब्रह्मस्तम्बपर्यन्ता जगदन्तर्व्यवस्थिताः । प्राणिनः कर्मजनितसंसारवशवर्तिनः ॥

यतस्ततो न ते ध्याने ध्यानिनामुपकारकाः", "अशुद्धास्ते समस्तास्तु देवाद्याः कर्मयोनयः
नबृंहितरीत्या न मुमुक्षुध्येयत्वमित्युक्तं भवति । ननु जगत्संहारकारणत्वेन प्रसिद्ध ईशानः
ूयते इत्यत्राह **न कारणमित्यादि** । अत्र धातुर्ब्रह्मण उपादानं रुद्रपितुर्ब्रह्मण एव कार्
यत्वे च सति किमुत रुद्रस्येति ज्ञपये । एतेन ईशानशब्दस्य रूढत्वे रुद्र एव ध्येयः, यौ
चतुर्मुखोऽपीति शङ्काऽपि शमिता, तयोः व्यष्टिगतयोः कारणभूतसमष्ट्यादिकारणत्वाभाव
कारणकारणत्वादिविशिष्टो यः शम्भुः स ध्येयः, न तु कार्यभूतोऽनीश्वरशम्भुरिति । आका
। इति वात्सल्यातिशयेन विशेषानुग्रहाय अजहत्स्वस्वभावतया हृदयकुहरेऽवतीर्णत्वं प्रदर्श
द्रार्दावतारवत् विष्ण्वाख्योऽवतारोऽपि कश्चिदिति नावतारूप संप्रसूतिरैश्वर्यघातिनीति गमित

तर्हि विष्णोरिव ब्रह्मरुद्रयोरपि प्रसूतिरवतार एवास्त्विति शङ्काशमनाय ब्रह्मविष्णुरुद्रैः इन्द्रस्य सह घटनम् । तथासति इन्द्रादिजन्माप्यवतारः स्यादिति । महेन्द्रस्य, सर्वमिदं प्रपञ्चस्यैवोपेन्द्रवशत्वमिन्द्रप्राणाधिकारणसिद्धम् । तथा च जन्मसामान्यं कर्मकृतमित्यु अकर्मवश्यतया, 'न चास्य कश्चिज्जनिता न चाधिपः' इति अकारणकतया, विशेषवच विष्णुप्रसूतिरेवावतार इति । तत् सिद्धं प्रसिद्धरुद्रव्यावर्तनेन अर्धमात्रादेवताभूतः पुरुषः ८ श्रीमन्नारायण एव रुद्रतुल्येन ध्यात्रा सर्वेश्वरशिवपितामहशिवंकरशम्भुरत्र ६ तिपाद्यत इति ॥

विमुक्तपदं न रागद्वेषादिविमुक्तिपरम् कठोपनिषदि, 'विमुक्तश्च विमुच्यते' इ र्भवासादितिश्रवणात् । अतः एवं व्याख्यातम् । एतद्विद्या पुनर्जन्मरहित एव सन् अ न्मनि मुक्तो भवतीत्यर्थस्तु कामं घटताम् ।

इत्यथर्वशिखाभाष्यपरिष्कारो व्यतन्यत ।
ईशाद्युपनिषद्भाष्यपरिष्कारविधायिना ॥

इति वेदान्तरामानुजयतीन्द्रपदाब्जमधुव्रतस्य श्रीरङ्गरामानुजमुनि-
चरणाम्बुजसेवासंपादितसर्ववेदान्तस्य वात्स्यसच्चक्रवर्तिनो
वीरराघवाचार्यस्य कृतिषु

**अथर्वशिखाभाष्यपरिष्कारः**

श्रीमते लक्ष्मीहयवदनपरब्रह्मणे नमः

शुभमस्तु ॥



वेदार्थसंग्रहे, प्राणं मनसि सह करणैः इत्यादिवाक्यस्य अथर्वशिर
ार्थ एवं संगृहीतः—। " अतः प्राणं मनसि सह करणैः " इत्यादिवाक्यं स
ो परमात्मनि करणप्राणादि सर्वं विकारजातमुपसंहृत्य * तमेव परमात्मानं स
ानं ध्यायीतेति परब्रह्मभूतनारायणस्यैव ध्यानं विदधाति । 'पतिं विश्वस्य'
तस्येशे कश्चने'ति च तस्यैव सर्वस्येशानता प्रतिपादिता । अत एव सर्वैश्व
ः सर्वेश्वरः शम्भुराकाशमध्ये ध्येय इति नारायणस्यैव परमकारणस्य शम्भुशब
स्य ध्यानं विधीयते । 'कश्च ध्येय' इत्यारभ्य, 'कारणं तु ध्येय' इ
ञाध्येयतापूर्वकारणैकध्येयतापरत्वाद् वाक्यस्य । " इति ।

* " उपसंहृत्य = परमात्मनि विकारजातोपसंहारमनुसंधाय " इति वेदा
व्याख्या तात्पर्यदीपिका । तुरीये सर्वकरणोपसंहारत्वस्य प्राक् श्रुत्युक्त
गुणमिदम् ।

'न कारणम्' इत्यत्र पूर्ववाक्यात् 'संप्रसूयत' इति विपरिणम्यानुषङ्गे
कारणं नोत्पाद्यत इत्यर्थ उक्तः श्रुतप्रकाशिकायाम् । तदनुरोधेन भावप्रका
म्, 'धाता ध्याता' इत्यस्य जगतः स्रष्टा तदर्थमादिसर्गसंकल्पकर्तेत्यर्थो वर्णित

शम्भुशब्दार्थश्च श्रीसहस्रनामभाष्ये एवं भाषितः—, " स्वसौन्द
र्यादिगुणाविष्कारेण शं सुखं भावयतीति शम्भुः " इति ।

श्रीः

## अथर्वशिरस्सारः



एवमथर्वशिरोर्थसंग्रहश्च वेदार्थसंग्रहे—, " यत् पुनरथर्वशिरसि रु
श्वर्यं प्रपञ्चितम्, तत् 'सोऽन्तरादन्तरं प्राविशत्' इति परमात्मप्रवेशादुक्त
न व्यक्तम् " इति । व्याख्यातमिदमित्थं तात्पर्यदीपिकायाम्—" रुद्रेण
नेति पृष्टेन प्रथमम्, अहमेकः प्रथममासं वर्तामीत्यादिना स्वस्य सर्वात्म
'परमात्मनो हि सर्वात्मकत्वम्; कथं तद् भवतः' इत्यपेक्षायाम्, इत्थ
ार्थोऽयमितिशब्दः । सोऽन्तरादन्तरमिति वक्ष्यमाणप्रकारेणेत्यर्थः । यद्वा

**इति**हेतौ । 'सोऽन्तरादन्तरं प्राविशत् दिशश्चान्तरं स प्राविश'दिति प
प्रवेशात् सर्वात्मकत्वमित्यर्थः । इतिशब्दस्य हेतुपरत्वमभिप्रेत्य परमात्म
त्युक्तम् । यद्यपि इतिशब्दस्य समाप्तिरेवार्थः; अर्थान्तरं न स्यात्–
धर्मिकल्पनातो वरं धर्मकल्पनेति न्यायात् प्रयुक्तस्य **इति**शब्दस्य रुद्रवाक
ऽन्वयकल्पनं न्याय्यम्, न त्वप्रयुक्तपदान्तराध्याहार इति । तस्माद् रुद्रवाक्य
**स** इति परमात्मोच्यते, बुद्धिस्थत्वात् परमात्मनः । सः **अन्तरादन्तरं** शरी
प्राणादेरप्यन्तरं जीवं प्राविशत् । **दिशश्चान्तरम्** । दिक्छब्देन समस्तजग
जातं लक्ष्यते । सर्वपदार्थानामन्तरं जीवात्मवर्गं प्राविशत् । सर्वसामानाधि
वक्ष्यमाणत्वात् तदुपपत्तये स्वस्य सर्वजीवानाञ्च परमात्मानुप्रवेश उक्तः ।
वाक्यत्वमेव युक्तम् ॥ यद्वा श्रुतिवाक्यमस्तु । तदाऽयमर्थः—**सः रुद्रः**
**दन्तरं** जीवादन्तरं परमात्मानं **प्राविशत्** बुध्याऽगाहत । अनुप्रवेशशब्दस्
म्बोधनार्थत्वं लोकसिद्धम् । तथा चाणक्यप्रयोगश्च—'यस्य यस्य हि यो
तेन हि तं नरम् । अनुप्रविश्य मेधावी क्षिप्रमात्मवशं नयेत्' इति ।
स्वान्तर्यामिणं सर्वपदार्थान्तर्यामिणं परमात्मानं तच्छरीरकं बुद्ध्याऽनुसंहितवानि
एवं निर्वाहद्वयमभिप्रेत्य परमात्मप्रवेशादित्युक्तम् । परमात्मनः प्रवेशादि
समासः । परमात्मकर्तृकप्रवेशात् परमात्मकर्मकप्रवेशाच्चेति भावः" इति ।

अत्र इतिशब्दस्य हेतुपरत्वे **परमात्मप्रवेशा**दित्युत्तरवाक्येऽन्वय[1] इ
वाक्यान्वयोऽपि दर्शितः सर्वव्याख्यानाधिकरण**श्रुतप्रकाशिकायाम्** — ,
**कश्चिन्मत्तो व्यतिरिक्त इति**=मद्व्यतिरिक्ताभावादित्यर्थः । मद्व्यतिरिक्त
अहमेव प्रथममासं वर्तामि च भविष्यामि चेति ।

अथोपरितनखण्डार्थसंग्रहोऽपि (श्रुतप्र.), "द्वितीयखण्डो रुद्रवा
वादेन स्तुतिपरत्वात् तदन्तर्यामिपरमात्मविषयः । **यो वै रुद्रः स भगवान्**

1. अथर्वशिरस उपक्रमस्तावत्– "देवा ह वै स्वर्गमायन् । ते (देवा) रुद्रमपृच्छ
भवानिति । सोऽब्रवीत्, अहमेकः प्रथममासम्, वर्तामि च, भविष्यामि च । नान्यः कश्चि
व्यतिरिक्त इति । सोऽन्तरादन्तरं प्राविशत् दिशश्चान्तरं प्राविशत् सोऽहं नित्योऽनित्य" इ

र्यामी सः वासुदेव इत्यर्थः । भगवच्छब्दस्य वासुदेवासधारणत्वात् । तच्च र्यो वै रुद्रः स भगवान् यश्च विष्णुरिति अन्तर्यामिण एवावताररूप- ुक्तम् । तृतीये तु परमात्मनो वैभवम् । तद्वाचकस्य ओंकारस्य नामधेयानि निर्वचनं पञ्चमे । षष्ठे तु, * 'तदेतदुपासितव्यम्,' 'निचाय्य तं शान्ति- रुद्रशरीरकपरमात्मोपासनं साङ्गमुक्तम् । व्रतमेतत् पाशुपतमिति । पशु- ात्मोपासनाङ्गतया पशुपतिसंबद्धं पाशुपतम्, न तु पाशुपतागमप्रतिपद्यर, ल्पकाभावात् । समन्त : भसितस्पर्शनं तु प्रकरणगृहीतत्वान्न सर्वत्र प्नोति प्रकरणगृहीतप्रयाजवत्, सौत्रामणिप्रकरणगृहीतसुराग्रहवच्च । तस्मादथर्व- द्रान्तरात्मा नारायण एव प्रतिपाद्यः, यथा प्रतर्दनविद्यायामिन्द्रा- ........ " इति ।

ेमिदं तदाचार्यपादैः श्रीवात्स्यवरदगुरुभिरेव विवेचितं तत्त्वसारे ।

यद् देवैरनुयुक्त उत्तरमुशन् रुद्रो विवृत्यात्मनि
ाजह्रे महतीमधीश्वरधुरामाथर्वणे मूर्धनि ।

प्रादुर्भवदन्तरात्मभगवद्भूमाऽफणत 'सोऽन्तरात
न्तः प्राविश' दित्यधीतविधया तद् वामदेवादिवत् ॥ ८० ॥

नान्यः कश्चिन्मत्त' इत्युग्रवाक्यादूर्ध्वं नेतिस्तत्समाप्तिं ब्रवीति [२] ।
ग्वत् पश्चादुग्रवाक्यानुवृत्तेः 'सोऽहं नित्योऽनित्य' इत्यादिभङ्ग्या ॥ ८१ ॥

ऽतो हेतुं वक्ति, नेतिः प्रकारं प्रह्लादोक्तो हेतुरन्तःप्रवेशः ।
ादोक्तिः 'सर्वगत्वादनन्तस्ये' ति व्यक्ता वैष्णवाख्ये पुराणे ॥ ८२ ॥

१ श्रुतिवाक्यपाठो महीशूरमुद्रणे द्रष्टव्यः ।

श्लोकानामर्थः दर्शिततात्पर्यदीपिकायां अवधानं वहतां सुगम इति न तन्यते ।

ान्यः कश्चिन्मत्तो व्यतिरिक्त इति ' इति 'नान्य ' इति वाक्योपरि श्रूयमाण इतिः , तावति रुद्रवाक्यसमाप्त्यभावात्, उपर्यपि सत्त्वादिति श्लोकार्थः ।

[1]अथवेतिपदेन हेतुरत्र व्यतिरेकोऽकथि नान्य इत्यधीतः
अहमेक इतीरितान्वयस्य; प्रतिपत्तुं सुकरः प्रकारपक्षः ॥ ७

रुद्रस्योक्तिः 'सोऽन्तरा'दित्यतोऽसौ तस्मादन्यः कोऽपि त
अन्येषाञ्चेत्युच्यते 'सोन्तरा' दित्युक्त्या रौद्या सोऽपि विष्णु

[2]इत्युक्तिर्वा समाप्तिं वदतु हरगिरः 'सोऽन्तरा' दित्यतोऽ
मा भूद् रुद्रोक्तिरित्थंसति न विघटना किञ्चिदसन्मत
रुद्रः स्वात्मात्मभूतं हरिममलधिया स प्रविष्टश्चिकीर्षुः
मेधावीव स्ववश्यं नरमपरमिति व्यज्यते वेदवाचा ॥ ८

द्वितीयखण्डं व्याख्याति—

"श्रुत्वा रुद्रवचस्तदीयमहिमस्तोत्राय लब्धोद्यमाः
[3]सध्र्यञ्चमथर्वमूर्ध्नि यदपि व्याजह्रिरेऽस्यामराः ।
तेऽन्तर्याम्यमाधिहेतव इह व्यक्ता हि रुद्रोक्तयः
तद् युक्तास्तदनूक्तयस्तु दिविषद्वाकास्तदेकाशयाः ॥

तृतीयखण्डं व्याख्याति—[4]

"ओंकारपूर्वकतया प्रतिपादितानि नामान्तराणि ननु [5]रुद्र
अथर्वणे शिरसि तानि तु न प्रसिद्धरुद्रेशितृत्वमुपपादयितुं क्ष

1. इतिशब्दः पूर्ववाक्यार्थस्य हेतुत्वपरोऽपि सुवच इत्याह अथ
श्रुतप्रकाशिकास्थ पूर्वं दर्शितमेव । अथ इतिशब्दस्य प्रकारार्थकत्वमपि स्वीकरो

2. अस्तु वा इतिशब्दः समाप्त्यर्थक इत्यर्थः । समाप्त्यर्थकत्वेऽस्य
योजनेति कश्चित् पक्षोऽस्ति । तमप्यस्वीकृत्य, एतदुत्तरवाक्यस्य रुद्रवाक्यत्वाभ
इति स्वीकारेपि न दोष इत्यर्थः ।

3. 'यो वै रुद्रस्स भगवान् यश्च ब्रह्मा तस्मै वै नमोनमः । यो वै
यश्च विष्णुस्तस्मै वै नमोनमः' इत्यादिवाक्यविषयमेतत् ।

4. अत्र दर्शितः खण्डविभागः अष्टोत्तरशतोपनिषत्कोशप्रसिद्धम्,
कर्तृभिराचार्यैः कृतं तत्त्वनिर्णयग्रन्थञ्चानुसृत्य । श्रुतप्रकाशिकायां पुनरन्यथा ।
यत्रापि खण्डविभागे व्यवस्थाऽभावात् ।

5. रुद्रादिनामान्यत्रोक्तानि प्रक्रमानुसारादोङ्कारस्यैव नामानीति भावः ।

थंखण्डं व्याख्याति—

समाख्याः प्रक्रान्तप्रणवविषयिण्यः प्रतिपदं निरुक्ता
रुद्राद्या यदपि हि महादेव[1] शिरसि ।
राथर्वण्याः शिरसि तदिदं तारविभवं
व्यनक्त्योंकारः स्यादुपरितनविद्यापरिकरः ॥ ८८ ॥"

मखण्डं व्याख्याति—

न्था बन्धस्य शान्तेः पशुपतिभजनं नन्विहाथर्वमूर्ध्नि
प्रोक्तः प्राच्या तदुक्त्या स्फुरति हरिरिहोपासनीयस्तदात्मा ।
न्मध्वादिविद्यास्वितरसुरतनुः ; स्रष्टृसज्यादिभावः
श्रौतस्त्वत्रापि तुल्यः [2]श्रुतमिह भसितं प्रस्तुतोपास्तिशेषः ॥ ॥ ८९ ॥

त्य रुद्रवपुषः पुरुषोत्तमस्य
विद्यामथर्वशिरसीरितमङ्गमस्याः ।
, प्रसक्तिरितत्र न चास्ति (स्य?) यद्वत्
सौत्रामणीप्रकरणस्थसुराग्रहस्य ॥ ९० ॥

र्वण्यां शिखायामगणि भगवतो या जनिः कारणैक-
ध्येयत्वेदम्परायां जगदुपकृतये सोऽयमिच्छावतारः ।
विष्णोः कारणैकप्रवणफणितिभिः कारणत्वोपदेशः
स्पष्टो, दृष्टप्रयोगः सुखजनकतया शम्भुशब्दोऽपि तस्मिन् ॥ ९१॥

तमुपासनद्वयमथर्वशिरश्शिखायोः
स्फुटमपुनर्भवाय पुरवैरिकलेबरिणः ।

[1] ते महादेवनाम्नः ओंकारनामतया पाठो महीशूरमुद्रणे द्रष्टव्यः ।
[2] मेतत् पाशुपतमित्यारभ्य—अग्निरित्यादि "भस्म गृहीत्वा विमृज्याङ्गानि संस्पृ...त्' भाव्यम् ।

कमलदृशः [1]क्वचित् क्वचन कारणतत्त्वपरश्रुति-
विहितस्य हार्दसुषिमध्यजुषो विदुषः ॥ ९२ ॥ ”

भगवद्भाष्यकारपरमाचार्यैः **श्रीभगवद्यामुनमुनिभिरेव** शिखाश्वेताश्वतरादीनां निर्वाहः **पुरुषनिर्णये** प्रपञ्चित इति न **श्रीमद्वेदान्तदेशिकैर्दर्शितम्** । स तु पुरुषनिर्णयग्रन्थः संप्रति नोप सिद्धाञ्जनव्याख्यायां दशोपनिषद्भाष्यकारैरेव यद्यपि अथर्वशिरः वर्तितः—**अथापि** स संग्रहरूप इति यथोपलम्भं प्राचीनपूर्वाचार्यव्याख्या प्रतिपदव्याख्याविरहेऽपि सारो दर्शित एवेत्यलम् ।

ननु देवैः, ‘के वयम्’ इति वा, साक्षादेव ‘कः प प्रश्नमकृत्वा, को भवानिति प्रश्नः कुतः कृत इति **चेत्**—अत्रोक्तं **कायाम्**— ‘देवतात्वेन साजात्येऽपि प्रभावातिशयदर्शनेन संदेहाद् इति । अयं भावः—तत्त्ववेदिभिर्देवैः स्वयमुपेन्द्रकिङ्करैः कदाचित् विलक्षणं भस्मधारणादिरूपं रुद्रवेषं दृष्टवद्भिः, ‘अस्मत्साजात्यादने किङ्करेण भाव्यम् । तत् कथमस्यैवं वेषः ?’ इति आश्चर्यमग्नैः, त शयदर्शनेन किमयं स्वतन्त्र इति मनाक् संदिहानैः पृष्टम् ‘को स चाऽऽशयवेदी प्रत्युवाच—अहमपि वैष्णव एव । जानाम्येव स्थानम् । मयाऽनुष्ठीयमानश्चायं तदुपासनाविशेषः, यत्र मे वे

1. **क्वचित् क्वचने**त्यस्य तत्रतत्र श्रुत्यन्तरेविष्वत्यर्थं वर्णयन्ति । स्वहृदयसुषिवर्तिपुण्डरीकाक्षमूर्त्यनुसंधानमेव कार्यम् । तत्रेह रुद्रान्तर्यामित्व संधेयमिति भावो वक्तव्यः । वस्तुतस्तु प्रतर्दनविद्यायामिन्द्रेणेव अथर्वशिरसि व्यवहारात्, देवैश्च तथैव स्तवनात्, (ओंकारे ईशानमहेश्वरमहादेवनामघटना भस्मधारणस्य विद्याङ्गत्वश्रवणाच्च रुद्रान्तर्यामित्वमप्युपास्याकारोऽस्तु । अथाप कुतः ? । तथाच **क्वचिदि**ति अथर्वशिरसीत्यर्थकं पूर्वत्रान्वेति । **क्वचने**ति अ कमुत्तरत्रान्वेति । तथाच शिखायां न रुद्रान्तर्यामित्वमुपास्याकारः । ‘अत एव स्व भेदः प्रदर्शितः । **कारणतत्त्वपरश्रुतिविहितस्ये**त्यनेन शिखायां ‘कार न कारणत्वविधिः; किंतु श्रुत्यन्तरतः कारणत्वेन प्रसिद्धस्य ध्यानविधिरिति **वेद** मनूदितम् । **तात्पर्यचन्द्रिकाया**मपि (८. १३.) अथर्वशिरःप्रस्तावमात्रे, वशात् प्रतर्दनविद्यावत् अन्तरितं शासनमनुसंधेयम्’ इत्युक्तम् ।

। ततस्ते तद् विज्ञाय तं तुष्टुवुः। तदेतत् तदीयमुपासनमथर्वशिरसि इति। अयमर्थोऽस्माभिर्वेदान्तपुष्पाञ्जलौ प्रदर्शित एवेति ॥

ईशाद्युपनिषद्भाष्यपरिष्कारविधायिना।
इत्यथर्वशिरःप्राच्यव्याख्यासंकलनं कृतम् ॥

श्रीमते भगवद्रामानुजाय नमः। श्रीलक्ष्मीहयवदनपरब्रह्मणे नमः।

**श्रीरस्तु. शुभमस्तु.**



नथर्वशिरसि पदवाक्यानुपूर्व्यामभ्यधिकाः विपर्यासा व्यक्तं लक्ष्यन्ते। उत्तर-नागरीमुद्रणेषु महीशूरपुरान्ध्रलिपिमुद्रणे च महद् वैषम्यम्। पूर्वत्र मुद्रणे से अथर्वशिखोक्तप्रणवमात्राभेदतद्देवतावर्णादेरीषद्विशदं वर्णनमपि लक्ष्यते। तत्प्रस्तावः। पूर्वत्र ओङ्कारनाम्नां बहूनां परिगणने रुद्रेशानभगवन्महेश्वर-ईशः; उत्तरत्र महादेवनामापि ओङ्कारनामतया अन्ते समगणि, निरवाचि इमिदं प्रदर्शनम्। आदितः आ अवसानात् सन्ति असंख्या भेदाः। पाताः पूर्वाचार्यग्रन्थाः प्रायो महीशूरमुद्रणदृष्टामानुपूर्वीमेवानुरुन्धत इति तवाक्यांशनिरीक्षणान्निश्चीयते। श्रीवेंकटेशप्राच्यविद्याविमर्शालयकोशः प्रायो द्रितसमान एव। अतो **बहुविवादग्रस्तानुपूर्व्यतया, आनुपूर्व्या ाख्यानस्यास्मदीयाद्दतस्य अलाभेन** अथर्वशिरोमूलमुद्रणस्य पृथग-गतया अत्रैवाथर्वशिखाप्रसङ्गादथर्वशिरसोऽपि प्रमेयसारः परमिह दर्शित



## अथर्वशिखासारसङ्ग्रहकारिकाः ।

अङ्गिरःप्रभृतिप्रश्ने प्राहाथर्वा चतुष्टयम् ।
ध्यानस्य करणं ध्यानं ध्याता ध्येय इति क्रमात् ॥

ओंकारः करणं ब्रह्म चतुष्पाच्चतुरक्षरम् ।
प्रत्यक्षरं लोकवेददेवच्छन्दोऽग्निभावना ॥

ब्रह्मा विष्णू रुद्र एवं पुरुषो देवताः क्रमात् ।
ह्रस्वदीर्घप्लुतात्मा स प्लुतरूपः प्रयुज्यताम् ॥

नाना नामानि चान्वर्थान्येतस्येत्युक्तमादिमम् ।
अथ त्रीण्यत्र च ध्यानं विष्णुर्भाव्यं यतात्मना ॥

ध्याता रुद्रतया भाव्यो ध्येयस्तु श्रूयतां परः ।
भूतेन्द्रियादिवद् ब्रह्मरुद्राद्यपि हि सूयते ॥

अतो यो मोक्षसुखदः समष्टेरपि कारणम् ।
स ध्येय ईश्वरो नान्य इत्यथर्वशिखाश्रुतिः ॥

### पुरुषनामानि

पैप्पलादः. अङ्गिराः. सनत्कुमारः. अथर्वा.

### विषयाः



॥ शुभमस्तु ॥

श्रीः

# कौषीतकिब्राह्मणोपनिषत् ।

[ मनसि —' इति शान्तिः ]

हरिः ओम् । चित्रो ह वै गार्ग्यायणिर्यक्ष्यमाण आरुणिं वव्रे ॥ १ ॥

---

श्रीमते रामानुजाय नमः

नोपनिषदां भाष्यं रामानुजमतानुगम् । रम्यं कृतं प्रपद्ये तं रङ्गरामानुजं मुनिम् ॥ ]

श्रीमद्रङ्गरामानुजमुनीन्द्रानुगृहीता

## कौषीतक्युपनिषत्प्रकाशिका

अतसीगुच्छसच्छायमञ्चितोरस्स्थलं श्रिया ।
अञ्जनाचलशृङ्गारमञ्जलिर्मम गाहताम् ॥
व्यासं लक्ष्मणयोगीन्द्रं प्रणम्यान्यान् गुरूनपि ।
कौषीतकि(की)श्रुतिव्याख्यां करवाणि यथामति ॥

अर्चिरादिगतितत्प्राप्यदेशविशेषतद्विशिष्टब्रह्मानुभवप्रकारोपदेशाय आख्या-
भ्यते चित्रो ह— वव्रे । नाम्ना चित्रः गार्ग्यस्यापत्यं गार्ग्यायणिः
[मा ]क्षत्रियः आरुणिं गौतमं याजनाय प्रार्थितवानित्यर्थः ॥ (१) ॥

---

श्रीः

श्रीमद्भ्यो रङ्गरामानुजमहादेशिकेभ्यो नमः

## कौषीतक्युपनिषद्भाष्यपरिष्कारः

विद्वद्भिश्चन्द्रमाद्यैरपि विहितमखैः सेव्यपर्यङ्करूपः
प्राणादौ वश्यभूते वशयितुमुचितश्चेन्द्रमुख्यान्तरात्मा ।
धाम स्वापादिकर्तुः कृतनिखिलजगद् यो हि कौषीतकीष्टः
श्रीमान् श्रीवेङ्कटाद्रीश्वर इह वितनोत्वजस्रेष श्रियं नः ॥

षेतकिब्राह्मणोपनिषदि चतुरध्याय्यां प्रथमेऽध्याये पर्यङ्कविद्या प्रस्तूयते । सेयं परमपदे
ासीनस्य भगवतो वासुदेवस्य ध्यानरूपा । तामिमां प्रस्तोष्यता प्रथमतः चन्द्रं प्राप्तैरपि
द्यैः परमपदं सुखलभ्यमिति कयाचिदाख्यायिकया प्रदर्श्यते । तत्र चित्रनामा
यं पर्यङ्कविद्यावित् मुमुक्षुर्यष्टुं प्रवृत्ते । याजकस्तु ब्राह्मणः यागेनानेन अयं चन्द्रमण्डलं
न् अनुभूय पुनर्निवर्तिष्यते यथालोकमित्येव मेने । यतः स न विजज्ञौ काम्यकर्मैकरतेभ्यो-
य वस्तुविशेषम् । तदेष क्षत्रियः याजकस्य यथावस्थितबुद्धिपूर्वकमनुष्ठापकत्वे सत्येव
यं मन्वानः याजकमागतं रहस्यमर्थं पप्रच्छ । अथ चाविदुषे तद्रहस्यमुपदिदेशेत्युच्यते

स ह पुत्रं श्वेतकेतुं प्रजिघाय, याजयेति ॥ २ ॥

तं हासीनं पप्रच्छ, गौतमस्य पुत्र! अस्ति[1] संवृतं लोके धास्यस्यन्यमहो वाऽध्वा तस्य [ यस्मिन् ? ] लोके धास्यसीति

स होवाच, नाहमेतद्वेद हन्ताचार्यं पृच्छानीति। स ह पप्रच्छ ॥ ४ ॥

इति ह[2] माऽप्राक्षीत्; कथं प्रतिब्रवाणीति ॥ ५ ॥

स होवाच, अहमप्येतन्न वेद । सदस्येव वयं स्वा हवामहे[3] यन्नः परे ददति, एह्युभौ गमिष्याव इति ॥ ६ ॥

1. आस्ते. 2. इतीति मा. 3. हरामहे.

---

**स—याजयेति** । स तु श्वेतकेतुनामानं पुत्रम्, त्वमेव ग प्राहिणोत्=प्रेषितवानित्यर्थः ॥ (२) ॥

**तं—धास्यसीति** । हे गौतमपुत्र! यस्मिन् लोके मां यज्ञाद्यनुष्ठापनेन स्थापयिष्यसि, तस्मिन् लोके रहस्यमुपदेश्यं किञ्चि यस्मिन् लोके मां स्थापयिष्यसि, स्थापयितुमिच्छसि, तस्याध्वा व किमित्यर्थः ॥ (३) ॥

**स—पप्रच्छ** । स्पष्टोऽर्थः ॥

**इति ह—प्रतिब्रवाणीति** । **इतीत्येतत्** उक्तार्थप्रकारवचनम् मां पृष्टवान्; कथमस्योत्तरं ददामीति ॥ ( ४-५ ) ॥

**स ह—गमिष्याव इति**। अहमपि न जाने । गुरुं रहसि ग अर्थान् पृष्ट्वा ( अपृष्ट्वा? ) सदस्येव स्वाध्यायमधीत्य **परे** यजमानाय द्रव्यं होतव्यमिति प्रयच्छन्ति, तत् जुहुमः । अस्माकं रहस्यार्थपर्यन्तज्ञ त्वमप्यागच्छ । आवाभ्यां गत्वा स प्रष्टव्य इत्यर्थः ॥ (६) ॥

---

**अन्यमहोवाऽध्वा** इत्यत्र अहो इत्येतत् आहो इत्येतदर्थकम् । संवृतं आहो न; अध्वा वा कश्चिदस्ति, आहो नेत्यर्थः । यद्वा **अहो** इत्याश्चर्ये । तत्र रहस्यमस्ति; अहो अत्याश्चर्यं तत् । तत किं ज्ञायते.

ह समित्पाणिश्चित्रं गार्ग्यायणिं प्रतिचक्रमे, उपायानीति ॥ ७ ॥

होवाच[1]--ब्रह्मार्घ्योऽसि गौतम! यो[2] न मानमुपागाः। एहि[3] ज्ञापयिष्यामीति ॥ ८ ॥

होवाच—ये वै के चास्माल्लोकात् प्रयन्ति, चन्द्रमसमेव ते

.. ब्रह्मार्होऽसि. 2. यो मामुपागाः. 3. एहि ज्ञापयिष्यामि.

---

--उपायानीति । समिद्भारहस्तस्सन् चित्रनाम्नः क्षत्रियस्य समीपे, उपगच्छामीति प्रववृते ॥ (७) ॥

—ज्ञापयिष्यामीति । यस्त्वमभिमानं नोपागाः=त्यक्ताभिमान एव ऽहमित्यागतोऽसि, स त्वं ब्रह्मार्घ्योसि । ब्रह्मत्वेन=ब्राह्मणत्वेन अर्घ्योऽसि । ब्राह्मणस्त्वं क्षत्रियेण मया उपनीय शिष्यभावं प्रापयितुमयोग्यः । ऽयाहि, त्वां ब्रह्म विज्ञापयिष्यामि इति ॥ (८) ॥

ह—गच्छन्तीति । ये केचन इष्टापूर्तादिकारिणः विद्वांसश्च, ते सर्वे गच्छन्तीत्यर्थः । इयांस्तु विशेषः—इष्टादिकारिणस्तु धूमरात्र्यपरपक्ष-पितृलोकाकाशक्रमेण चन्द्रमसमायान्ति । विद्वांसस्तु अर्चिर्दिनपूर्वपक्षोद-रवायुलोकादित्यक्रमेण चन्द्रमसमुपयान्तीति ।

[illegible]च्च वाक्यं तृतीयाध्याये वैराग्यपादे चिन्तितम् । तत्र हि—"अनिष्टादि- च श्रुतम्" । 'ये वै के चास्माल्लोकात् प्रयन्ति चन्द्रमसमेव ते सर्वे अविशेषश्रवणात् इष्टादिकारिणामिव अनिष्टादिकारिणामपि चन्द्रप्राप्तिरस्त्ये- र्हि सुकृतकारिणां दुष्कृतकारिणाञ्च चन्द्रप्राप्तिसत्त्वे, को विशेष इत्यत्राह ानुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात्" । तुशब्दः शङ्कां व्यावर्तयति । यमशासने सति इतरेषाम् अनिष्टादिकारिणां यमयातनाः अनुभूय चन्द्रा-

---

त्र लोके धास्यसि तत्र रहस्यं जानासि किमिति पृच्छानयं राजा, धास्यसीति :, 'त्वं स्थापयितुं तत्रेच्छसि । अहं तु न तत्र स्थास्यामी'ति सूचयतीव । तदुर्थं ।
[illegible]

र्वे गच्छन्ति ॥ ९ ॥

---

ोहावरोहौ । 'अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते
अनिष्टादिकारिणां यमवश्यतादर्शनात् । "स्मरन्ति च" । 'सर्वे चैते व
ामस्य भगवन् किल' इति यमवश्यतास्मरणात् । "अपि सप्त" । पापकृतां
ौरवादीन् सप्त नरकानपि स्मरन्ति । ननु सप्तसु लोकेषु गच्छतां कथं यमस
त्राह—"तत्रापि तद्व्यापारादविरोधः" । तेष्वपि सप्तसु यमाज्ञयैव गमनाद
ातः अनिष्टादिकारिणामपि यमलोकं प्राप्य स्वकर्मानुरूपं यातनाश्चानुभ
न्द्रारोहावरोहौ स्तः ।

इति प्राप्ते उच्यते—"विद्याकर्मणोरिति तु प्रकृतत्वात्" ।
ङ्कानिवृत्त्यर्थः । देवयानपितृयाणे हि फलभूते विद्याकर्मणोरित्यवसीयते
थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसंभवन्ति,' 'अ
मे इष्टापूर्ते दत्तमित्युपासते, ते धूममभिसंभवन्ति' इति विद्याकर्मणी
वयानपितृयाणे आम्नायेते । अतो विद्याकर्मविधुरेष्वनिष्टादिकारिषु
तृयाणासंभवात् न चन्द्रप्राप्तिः । 'ये वै केचास्माल्लोकात् प्रयन्ती' ति
ादिकारिसर्वविषयं नेतव्यम् ।

---

ेदेह । तत्र राज्ञा स्पष्टमुत्तरं दत्तम्, 'ये वै के चास्माल्लोकात् प्रयन्ति चन्द्रमसं
छन्ति' इति । इष्टापूर्तादिकारिणां मध्ये केचिद् गच्छन्ति, मादृशा न गच्छ
ऽपीष्टादिकारिणो गच्छन्त्येवेत्यर्थः । अत्र पूर्वं यागस्य प्रस्तुतत्वात्, तस्य लोकविशेषला
स्मिन् लोके धास्यसी' त्यवगमितत्वात् लोकार्थमिष्टादिकारिणो ये, त एव सर्वे
रणवशाद् गृह्यन्ते । न तु इष्टादिकारिव्यतिरिक्तानामप्यविशेषाद् ग्रहणम् । कतिपये
ाग्रहणशङ्कापरिहारार्थतया सर्वपदसार्थक्यात् । अर्चिरादिमार्गगामिनामिव अन्येषाम
िव्यतिरिक्तानां चन्द्रमण्डलारोहावरोहाभावाच्च । अयमर्थः अनिष्टादिकार्यधिकरणेऽपि
ाच श्रीभाष्यम्, "सर्वे गच्छन्तीत्येतदपि वचनम्, य इष्टादिकारिणः ते सर्वे इति प
। । एवञ्चेहोपनिषद्भाष्ये, ये केचन इष्टापूर्तादिकारिणो विद्वांसश्च ते सर्वे
छन्तीति विदुषामपि सर्वपदेन ग्रहणेनार्थवर्णनम्, प्रकृतस्य यष्टुश्चित्रस्य
द्रूपेष्टादिकारिण इव सर्वपदेन ग्रहणमस्तीत्याशयेनेति द्रष्टव्यम् । इष्टादिकारिभिन्नस्य
पदग्राह्यत्वे श्रीभाष्याभिमते तु 'विद्याकर्मणोरिति तु, प्रकृतत्वात्' इति सूत्रस्य, '
मध्य फलभूता चन्द्रलोकप्राप्तिः नानिष्टादिकारिणो भवती' त्येवार्थो भाषितव्यः स्यादि

न्वनिष्टादिकारिणां चन्द्रप्राप्त्यभावे पञ्चमाहुत्यसंभवात् शरीरारम्भ एव
। तत्राह "न तृतीये तथोपलब्धेः"। 'तानीमानि क्षुद्राण्यसकृदावर्तीनि
भन्ति जायस्व म्रियस्वेत्येतत् तृतीयं स्थान'मिति तृतीयस्थानशब्दितानाम-
रिणां क्षुद्रजन्तूनां न पञ्चमाहुत्यपेक्षा। तथा ह्युपलभ्यते, 'तेनासौ लोको
' इति। तृतीयस्थानेन हि (?) असौ चन्द्रलोको न प्राप्यत इति हि
"स्मर्यतेऽपि च लोके"। केषाञ्चित् पुण्यकर्मणामपि द्रौपदीधृष्टद्युम्न-
पञ्चमाहुत्यनपेक्षयैव देहारम्भो भारतादिषु स्मर्यते। "दर्शनाच्च"।

---

र बोध्यम् — उपरि **तेषां प्राणैः पूर्वपक्ष आप्यायते** इति वाक्ये **तेषामिति**
ामेव ग्रहणम्। न तु तद्भिन्नानां विदुषाम्; तेषामर्चिरादिमार्गे चन्द्रप्राप्ति-
चन्द्रस्य तदा तदधीनवृद्ध्यभावात्। स्वर्गानुभवार्थं गच्छतामेव सोमराजभावस्य
त्। विदुषां तु आतिवाहिकान्तरैरिव चन्द्रेणापि सोपचारं स्वस्थानादतिवहनमात्रम्;
सर्वथा स्थापनादि। एवञ्च तत्पूर्ववाक्येऽपि **ते सर्वे** इति इष्टादिकारिमात्रग्रहणमेव
; तर्हि इष्टादिकारिषु केषांचित् चन्द्रेण विसृज्यमानत्वमर्चिरादिगमनञ्च कथ्यमानं कथं
चेत् — उच्यते। अत्रेष्टादिकारी विद्वान् अविद्वांश्चेति द्विविधः। अविद्वानिव विद्वानपि
मन्डले भोगं कञ्चित् कालमनुबुभूषुरिष्टादिकार्यपि भवति चेत्, स तद्भोगावसाने
ता मोक्षायातिसृज्यत इति। तत्रायं कर्मफलस्यानुभूतत्वात् विद्याफलानुभवायार्चिरादि-
ते। न त्वयमर्चिरादिद्वारा प्राक् चन्द्रमण्डलं प्राप्तः। चन्द्रप्राप्तेर्विद्याफलत्वे हि
ान सा स्यात्। इष्टिफलत्वात्तु धूमादिमार्गेण चन्द्रगमनमेव युक्तम्। तत्र भोगानु-
वार्चिरादिगमनम्। तदेवोच्यते, 'स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छती'
। च तर्हि, 'यथाकर्म यथाविद्यं तमागतं पृच्छती'ति विद्याफलतया चन्द्रगमनवर्णनं
इति वाच्यम् — तस्य वाक्यस्य विद्याफलत्वप्रतिपादने तात्पर्याभावात्, केवलकर्मी
कृतेष्टादिक्रियानुसारेण य आगच्छति तमित्यत्रैव तात्पर्यादित्येका निरूपणसरणिः।
धूमादिमार्गेणेव अर्चिरादिमार्गेणापि चन्द्रगमनसद्भावात् तदेव **यथाकर्म यथा-**
**विवक्षितम्**। एवञ्च **ते सर्वे गच्छन्ती**त्येतत् इष्टादिकारिभिन्नविद्वद्विषयकमपि।
मनमिदं विद्याफलभूतमेव। न चैवमर्चिरादिमार्गेण प्राप्तचन्द्रस्य पुनः, 'अग्निलोक-
त्यादिना आदितो गमनवर्णनं कथं घटत इति वाच्यम् — तस्य वाक्यस्य चन्द्रप्राप्त्य-
दिगतेरादितः प्राप्तिवर्णने तात्पर्याभावात्, केवलमर्चिरादिमार्गसत्तामात्रे तात्पर्यात्।
वायुलोकवरुणलोकादित्यलोकादीनामत्र स्थितः क्रमः अविवक्षितः, तथा चन्द्रलोक-

"तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्ति आण्डजं जीवजम् उ
श्रुत्युपात्ताण्डजजीवजोद्भिज्जलक्षणभूतजाति (त?) मध्ये केषाञ्चिदुद्भिज्जान
पञ्चमाहुत्यनपेक्षा लोके दृष्टा। ननु, 'तेषां खल्वेषां भूतानां त्रीण्येवे
नोपपद्यते। स्वेदजानामत्रानुपात्तत्वात्। तत्राह—"तृतीयशब्दावरोध
जस्य"। संशोकजस्य = स्वेदजस्यापि 'आण्डजं जीवजं उद्भिज्ज
तृतीयेनोद्भिज्जशब्देनावरोधः = संग्रहो विद्यत इत्यर्थः। अतः केवः
चन्द्रप्राप्तिर्न भवतीति स्थितम्। प्रकृतमनुसरामः॥

---

प्राप्त्यनन्तरमग्निलोकगमनवर्णनमप्यविवक्षितमेव। इष्टिविशेषं कृत्वा विद्यामनुतिष्ठन् न
क्रममपि करिष्यमाणं गतिमिव चिन्तयन्नास्त यः, स यथाकर्म यथाविद्यं
अर्चिरादिमार्गप्रवेशमेव प्रथमं प्राप्य चन्द्रं प्राप्नोति। स चातिसृज्यत इति। तृतीया
भस्संवादचिन्तासद्भावात् विद्याकर्मोभयफलतया अर्चिरादिमुखेनैव चन्द्रप्राप्तिरस्तु
गन्तव्यमार्गमध्यगतस्य मार्गान्तरेण गमनकल्पने गौरवाच्च। अथापि ते सर्वे इत्य
स्वारस्यात् इष्टादिकारिव्यतिरिक्तस्य विदुषोऽनिष्टादिकारिण इवाग्रहणमेवेति। इ
**करणसारावलि**श्लोकोऽप्यनुसंधानमर्हति—

> 'पूर्वं धूमादिमार्गे सुकृतिषु कथिता चन्द्रमःप्राप्तिरन्या
> सायुज्यं न्यासविद्याप्रकरणपठितं चान्द्रमन्याद्दयुक्तम्।
> अन्याऽत्रार्चिर्मुखानामतिवहनकृतामन्त्रमस्याप्तिरिन्दोः
> इत्थं सुस्था व्यवस्था प्रणिहितहृदयैरेवमन्यच्च सूह्यम्॥ (५०८)

इति। अत्र चतुर्थपादान्ते प्रणिहितहृदयैरित्यादिकं नूनं प्रकृतकौषीतक्युक्तचन्द्रम
प्रायेणैवेति ज्ञायते। पूर्वदर्शितत्रिविधचन्द्रप्राप्तिप्रकारवत् अयं चतुर्थोऽपि प्रकारः इ
विद्याफलभूतः, यः खलु न्यासविद्याप्रकरणपठितवत् न दक्षिणायनमृतमात्रविषयकः, f
दशः संवादपूर्वमतिसर्गसंपादकश्चेति। अत्र अर्चिरादिमार्गेण चन्द्रं गत्वा संवादो वि
श्रीभाष्यतोऽपि ज्ञायते। तथा ह्यास्त्युपक्रमाधिकरणे, "उपलभ्यते हि देवयानेन पः
विदुषः, 'तं प्रतिब्रूयात्—' इति चन्द्रमसा संवादवचनेन शरीरसद्भावः" इ
गच्छत इत्यस्य, गमिष्यतः स्थूलदेहादुत्क्रान्तस्येत्यर्थवर्णनं रुचिरम्। अत इह
क्रमेण चन्द्रमःप्राप्तिवर्णनं सुस्थमिति। (९)

षां प्राणैः पूर्वपक्ष आप्यायते। तानपरपक्षेण प्रजनयति॥ १०॥
तद्वै स्वर्गस्य लोकस्य द्वारं यश्चन्द्रमाः ॥ ११ ॥
यः[1] प्रत्याह, तमतिसृजते। य एनं न प्रत्याह, तमिह वृष्टिर्भूत्वा
। इह कीटो वा पतङ्गो वा शकुनिर्वा शार्दूलो वा सिंहो वा मत्स्यो
न्[2] वा पुरुषो वाऽन्यो वैतेषु स्थानेषु प्रत्याजायते ॥ १२ ॥

तत् 2. परश्वा.

---

षां — प्रजनयति। तेषाम् इष्टादिकारिणां प्राणैः इन्द्रियैः मनोहस्ता-यदानहोमादिभिः पूर्वपक्षे चन्द्रः आप्यायते संवर्ध्यते। "ओ प्यायी ते हि धातुः। 'अग्नौ हुतश्च दत्तश्च सर्वं सोमगतं भवेत्' इति स्मरणात्। देकारिणः अपरपक्षेण पञ्चदशभिर्दिनैः प्रजनयति ग्राहयति। ाः कलाः आशयतीत्यर्थः। कलाभिस्तर्पणं करोतीति यावत्। 'पुरोवातो गाः त्यत्र 'प्रजनयती' त्यस्य गर्भं ग्राहयतीत्यर्थपरत्वदर्शनादिहापि प्रजनय-ह्यतीत्यर्थ उपपद्यते। अपरपक्षेनेति पाठे णत्वाभावश्छन्दसः॥ (१०) ॥

तद्वै — यश्चन्द्रमाः। — स्वर्गस्य लोकस्य भगवल्लोकस्य द्वारं ाय इत्यर्थः ॥ (११) ॥

यः प्रत्याह तमतिसृजते। य एनं न — प्रत्याजायते। चन्द्रः यः सदुत्तरं प्रयच्छति, तमतिसृजते भगवल्लोकगमनाय तमनुजानाति। ुक्तुमशक्तः, तम् अविद्वांसम्, 'यावत्संपातमुषित्वा अथैतमेवाध्वानं ो यथैतमाकाशमाकाशाद्वायुम्। वायुर्भूत्वा धूमो भवति। धूमो भूत्वा ा। अभ्रं भूत्वा मेघो भवति। मेघो भूत्वा प्रवर्षति। त इह व्रीहियवा पतयस्तिलमाषा इति जायन्ते। तद्य इह रमणीयचरणा अभ्याशो ह णीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा। य ारणा अभ्याशो ह यत् ते कपूयां योनिमापद्येरन् श्वयोनिं वा सूकर-चण्डालयोनिं वा' इतिश्रुत्यर्थोऽत्रानुसन्धेयः। परस्वान् पशुविशेषः। ेषु जायते ॥ (१२) ॥

यथाकर्म यथाविद्यं तमागतं पृच्छति, कोऽसि
ब्रूयात् ॥ १३ ॥

विचक्षणादृतवो रेत आभृतं पञ्चदशात् प्रसूत
स्तस्मात्[1] ॥ १४ ॥

1. तन्मा.

**यथाकर्म — कोसीति** । इष्टादिकर्मानुसारेण वा ब्रह्म आगतं पुमांसं पृच्छति **कोसीति** । **तं प्रतिब्रूयात्** । तं चक्ष प्रतिब्रूयात्, तमतिसृजत इत्युत्तरेणान्वयः ॥ (१३) ॥

प्रतिवचनप्रकारमाह **विचक्षणात् — तस्मात्** । मासा करत्वात् चन्द्रस्य ऋतुशब्देन संबोधनम् । एकस्मिन् औपचारिको दिवसपूर्वपक्षोत्तरायणादिलक्षणकालाभिमानिदेवतासाहित्याभिप्रायेण बहुवचनप्रयोगः । हे **ऋतवः** ! कालप्रवर्तका इत्यर्थः । **पित्र्या** पित्र्यं निषेकादि । तद्वान् । छान्दसो मतौ दीर्घः । निषेकादिः तस्मात् **प्रसतात्** प्रसूतम् उत्पन्नम् । 'सुपां सुलुक्' इत्यादिन पञ्चदशम्=पञ्च दशा अवस्थाः यस्य तत् पञ्चदशम् । श्रद्धासोमवृष्ट्य पञ्चकयुक्तम् **आभृतं** शोणितेन संभृतं रेतोऽस्मि । रेतश्शरीरकोऽहम् पञ्चाग्निविद्याप्रकारोपन्यासात् स्वस्य प्रकृतिविविक्तात्मस्वरूपमुपन्यस्तं भ

1. ननु 'यक्ष्यमाण आहणि यज्ञे' इत्युपक्रमबलात् चन्द्रलोकप्राप्तेय कथमर्चिरादिना तत्प्राप्तिरिति चेत्—उपरि **यथाकर्म यथाविद्यं तमागत**मि मागमनमिति वर्णनात् तस्य चागमनस्य अर्चिरादिमार्गेणैव युक्तत्वात् उपक्रमबलेन फलस्य यागसाध्यत्वेऽपि तदर्थमागमनं न यष्ट्रन्तराणामिव धूमादिमार्गेण, किन्तु फलभूतमोक्षार्थोपनतार्चिरादिमार्गेणैवेत्यवसीयत इति । अतएवोपक्रमेऽपि अधः प्रकृतस्य विदुषो यष्टुः यष्ट्रन्तरगम्यादध्वनो विलक्षणोऽध्वा चन्द्रलोकफलात् प्रागे सुवचम् । न च आतिवाहिकान्तरैरिव चन्द्रेणापि सोपचारं सगौरवं प्रत्युद्गम्य कथं तेन, 'कोऽसी'ति पृच्छ्यत इति वाच्यम् — अमुमुक्षुवत् अर्वाचीनावान्तरफ तादशायां कोऽसीति पृच्छ्यमानत्वे बाधकाभावात् । अमुमुक्षुतुल्यदशामुपेक्ष्य कतयाऽनुकूलत्वाच्च । **समागतं पृच्छतीति** । आगत्यानुभूतफलं तं पृच्छतीत्यर्थः दित्यत्र य इति शेषः । अस्य प्रतिसंबन्धि **तमतिसृजति** इति वक्ष्यमाणतत्पदम्

से कर्तरि मेरयध्वम् । पुंसा कर्त्रा मातरि मा [2]निषि-
॥ १५ ॥

[3]जायमुपजायमानो द्वादशत्रयोदशोपमासः ॥ १६ ॥
दशत्रयोदशेन पित्राऽऽसं तद्विदेऽहं प्रति तद्विदेऽहम् ॥ १७ ॥

तेर्यैरयध्वम् . 2. सिषिक्त. 3. जायमान उपजायमानः.

से — मा निषिक्तम् (क्त?) । हे ऋतवः! यूयमितः परं निषेककर्तरि तया अवस्थानाय मेरयध्वम् मा प्रेषयत। प्रेषणं मा कुरुतेत्यर्थः। [1]उत्तरत्र अत्राप्यनुषङ्गः । पुंसा निषेककर्त्रा मम शरीरपरिग्रहाय मातरि मा क्त?) निषेकं मा कुरुत। छान्दसः शपो लुक् ॥ (१५) ॥

जायम् — मासः। सोऽहं जायं जनित्वा — आभीक्ष्ण्ये णमुल् — नित्वा जनित्वा उपजायमानः गर्भात् निर्गच्छन् द्वादशः त्रयोदशो अन्तिममासो यस्य सः द्वादशत्रयोदशोपमासः—यद्यपि मनुष्याणां मासाः, अथापि योनिविशेषेषु द्वादशत्रयोदशमासपर्यन्तस्थितिरस्तीति — द्वादश वा त्रयोदश वा मासान् गर्भे उषित्वेत्यर्थः ॥ (१६) ॥

दश — तद्विदेऽहम्। अहं द्वादशेन वा त्रयोदशेन वा मासेन पित्रा- ासम्। पितृशब्दो मातुरप्युपलक्षकः। तद्विदे प्रति तद्विदे। अत्र पूर्वोक्तरेतःपरामर्शी । तद्विदे रेतस्सिचे। तद्विदे तद्विदे प्रति = प्रति- मित्यर्थः। चतुर्थी तादर्थ्यार्था। तेषां पितॄणां शेषभूत एवास- (१७) ॥

तरत्र मा इत्यस्येति। निषेधार्थकमाशब्दस्यैव मामित्यर्थेऽपि शब्दस्यापेक्षितत्वात् मेतिपदं मामित्यर्थकमिहानुषञ्जनीयम्। तत्रापि निषेधार्थकमाशब्दोऽयमनुषञ्जनीय न तस्मादिति पदस्थाने तन्मा इति पाठे तु तत्रत्यो माशब्दो मामित्यर्थक ज्ञेयम् ।

तन्मा ऋतवो मर्त्यव आभरध्वम् ॥ १८ ॥

तेन सत्येन तपसर्तुरस्म्यार्तवोऽस्मि [1]कोऽस्मि त्वमस्मीति

तमतिसृजते ॥ २० ॥

स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स

1. कोसि.

---

**तन्मा ऋतवो मर्त्यव आभरध्वम्** । — हे ऋतव इति संबोधनम् । **तत्** तस्मात् कारणात् **मर्त्यवे** मृत्यवे जननमरणलक्षण मा आभरध्वम् इतः परं मा समर्पयत ॥ (१८) ॥

तत्र हेतुमाह **तेन सत्येन** — **त्वमस्मीति** । 'तस्माद्वयासमेषां तिरिक्तमाहु' रिति **श्रुतेः** तच्छरणवरणलक्षणेन तपसा प्रसन्नेन तेन **सत्येन** त्मना अनुगृहीतस्सन् **ऋतुरस्मि** मासर्तुसंवत्सरयुगात्मककालरूपोऽहमस्मि । **वोऽस्मि** तत्तत्कालवर्तिपदार्थरूपोऽप्यहमस्मि । **कोऽस्मि** चतुर्मुखोऽप्यहम **त्वमस्मि** त्वमप्यहमेवास्मि । अत्र **अहंशब्दः**, 'अहं मनुरभवं सूर्य वामदेववाक्यवत्, 'तं मामायुरमृतमित्युपास्स्वे' ति इन्द्रवाक्यवच्च स्व परमात्मपरः ॥ साक्षात्कृतसर्वैकात्म्योऽहमस्मीत्यर्थः ॥ (१९) ॥

**तमतिसृजते** । एवं यः प्रतिब्रूयात्, तं ब्रह्मवित्त्वेन ब्रह्मलोकग ज्ञात्वा गमनाय अनुजानातीत्यर्थः ॥ (२०) ॥

एवं ब्रह्मविच्चन्द्रमस्संवादप्रकारं प्रदर्श्य आदित आरभ्य अर्चिरादिग मुपदिशति **स एतं — आगच्छति** । **सः** ब्रह्मवित् देहवियोगकाल एव दुष्कृते विधूय देवयानमार्गमापद्य अवलम्ब्य अग्निलोकमागच्छति । ' षमभिसंभवन्ती ' ति अर्चिश्शब्दितस्याग्नेः देवयानमार्गप्रथमपर्वत्वश्रवणात् अग्निलोकप्राप्तिरुपपन्ना । **स वायुलोकम्** । यद्यप्यत्राग्निलोकानन्तरं वा श्रूयते, तथापि श्रुत्यन्तरे, 'अर्चिषोऽहरह्न आपूर्यमाणपक्षमा पूर्यमाणपक्षा

---

ब्रह्मविदा चन्द्रप्राप्तेः प्रागेव देवयानगताग्निलोकादेः प्राप्तत्वात् प्रश्नप्रतिवचनानन्त यानोपक्रमायोगात् अग्निलोकादिकीर्तनस्यान्यमाशयं दर्शयति **आदित आरभ्यार्चिरा**

हणलोकं स आदित्यलोकं स इन्द्रलोकं स प्रजापतिलोकं स

ानुदङ् आदित्य एति मासेभ्यो देवलोक' मिति देवलोक [शब्द ?] निर्दिष्टस्य
कस्य उदगयनादूर्ध्वं श्रवणात् उदगयनादूर्ध्वमेव वायुलोको निवेश्यः । तत्राप्युद-
ूर्ध्वं छान्दोग्ये, 'मासेभ्यः संवत्सर' मिति श्रवणात्, अधिककालानां न्यून-
ूर्ध्वं निवेशस्य, 'अह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षण्मासानुदङ्ङादित्य
त्यत्र दृष्टत्वात् उदगयनापेक्षया अधिककालस्य संवत्सरस्य तदूर्ध्वनिवेशः सिद्धः ।

स वायुलोकं स वरुणलोकं स आदित्यलोकं स इन्द्रलोकं स
ापतिलोकमितीदं वाक्यं अर्चिरादिपादे चिन्तितम् । 'संवत्सरादादित्यमादि-
न्द्रमस' मिति छान्दोग्ये, 'यदा वै पुरुषोऽस्माल्लोकात् प्रैति स वायुलोक-
च्छति । स तत्र विजिहीते, यथा रथचक्रस्य खम् । तेन स ऊर्ध्वमाक्रमते ।
देत्यमागच्छति । तस्मै स तत्र विजिहीते यथा डम्बरस्य खम् । तेन स ऊर्ध्व-
ते । स चन्द्रमसमागच्छती' ति बृहदारण्यके च श्रुतत्वात् संवत्सरादूर्ध्वं चन्द्र-
प्राक् आदित्यस्य निवेशः सिद्धः । तत्र च वरुणेन्द्रप्रजापतीनामपि पठितानां
वत्त्वाय क्वचिन्निवेशो कर्तव्ये, वायुलोकं वरुणलोकमिति पाठक्रमानुसारेण
ूर्ध्वं वरुणो निवेशयितव्यः । इन्द्रप्रजापती अपि तदनन्तरं निवेशयितव्यौ ।
आदित्यलोकम्, इन्द्रलोकं प्रजापतिलोकमिति पाठक्रमादादित्यादूर्ध्वं
् प्रागेव निवेशोऽस्त्विति वाच्यम् — आदित्याच्चन्द्रमस' मिति आदित्यादूर्ध्व
य श्रवणेन तत्क्रमबाधप्रसङ्गात् । न च चन्द्रादूर्ध्वं तयोर्निवेशोऽस्त्विति
् — 'चन्द्रमसो विद्युत' मिति श्रुतिक्रमबाधप्रसङ्गात् । ननु 'देवलोकादा
मिति देवलोकशब्दितवायोरादित्यस्य च क्रमस्य श्रुतत्वात् तत्रेन्द्रप्रजापत्योर्निवेशे
भङ्गः स्यादिति चेन्न — वाय्वादित्ययोरन्तराले वरुणस्य निवेशनीयतया
वाय्वादित्ययोरानन्तर्यस्य भग्नतया तत्रैवेन्द्रप्रजापत्योरपि निवेशः । अतश्च
द्रप्रजापतीनां त्रयाणामपि वाय्वादित्ययोरन्तराल एव निवेशोऽस्त्विति प्राप्ते —

मुमुक्षुरयं चन्द्रलोकफलानन्तरमेव देवयानं प्रति आयाति । पूर्वं तु मार्गान्तरेण चन्द्रं प्राप्तः
देवयाने यावत् उपरितनलोकस्थितेन गन्तव्यम्, तावतो कर्मैव एव तं प्रति अप्रक्ता ' इति

ोकम् ॥ २१ ॥

उच्यते — "तडितोऽधि वरुणः संबन्धात्"। तडित ऊर्ध्वं वरुणस्य
:। कुतः ? संबन्धात्। विद्युद्वरुणयोः द्वयोरपि मेघोदरवर्तित्वरूपसंबन्धसत्त्वात्
ऊर्ध्वं वरुणस्य निवेशः। ततः परस्तात् इन्द्रप्रजापत्योर्निवेशः। तथा हि सति,
ोकादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युत' मिति निबद्धोऽपि क्रमो न
भवति। न चैवं विद्युत ऊर्ध्वं वरुणेन्द्रप्रजापतीनां निवेशे तेषामेव ब्रह्म-
त्रेन, 'तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयती' ति वैद्युतपुरुषस्य गमयितृत्वं
हृद्ध्येतेति वाच्यम् — वरुणेन्द्रप्रजापतीनाम [त्व ?] गमयितृत्वेऽपि वैद्युतपुरुष-
ग्राहकतया गमयितृत्वसंभवादिति स्थितम्। प्रकृतमनुसरामः ॥ (२१) ॥

---

यम्। अग्निलोकादिक्रमप्यनेन प्रागात्मेवेति ज्ञापयितुमेवं वाक्यमिति भावः। तथाच
ीति वर्तमानकालो न विवक्षित इति। अत्र **एत**मिति देवयानविशेषणात्, 'अग्निलोक-
त स वायुलोकं — स ब्रह्मलोकमिति श्रुतिप्रसिद्धमेतं देवयानं पन्थानं स आपद्य'
ऽपि स्यात्। तदा एतदुपरि, 'वर्तत' इति शेषो वा, वाक्यस्यास्य **तमित्थं विद्-**
ोति वक्ष्यमाणेनैकवाक्यता वा भवितुमर्हति। अत्रोपनिषदि यथायथमन्वयकल्पनं
उभयाविरोधात्" इति सूत्रेण दर्शितमेव। अर्चिरादिमार्गे कतिपयमात्रनिर्देशोऽयमन्यो-
। तथाच अग्निलोकानन्तरं वायुलोकात् प्राक् दिवसज्योत्स्नापक्षोत्तरायणवत्सराणां
वायोरनन्तरं वरुणात् प्राक् आदित्यचन्द्रवैद्युतानां ग्रहणम्। एवञ्च वरुणलोकानन्तर-
ोकपाठोऽत्र कृतो नैव क्रमसाधक.। स पूर्वमाक्रष्टव्यः, प्रमाणान्तरानुसारात्। अत्रैवम्,
ेत्यलोकमिति पाठः किं सर्वकोशेषु, उतान्यथाऽपि पाठ इति विचारो वर्तितो **भाव-
कायाम्**। वरुणाधिकरणे तु **श्रीभाष्ये** अत्र श्रुतानां निवेशक्रमयाथात्म्यं यथापाठं
यग्रहणेनेत्थं शोधितमस्ति, "अत्राग्निलोकशब्दस्यार्चिःपर्यायत्वेन प्राथम्यमविगीतम्।
वत्सरादूर्ध्वं **निवेश उक्तः**। आदित्यस्याप्यत्र प्राप्तपाठक्रमबाधेन, 'देवलोकादादित्य'
ासनेयकोक्तश्रुतिक्रमात् देवलोकशब्दाभिहितात् वायोरुपरि निवेशः सिद्धः। इदानीं
ापतिषु चिन्ता" इति।

---

त् सिद्धम् — उपासकस्य चन्द्रलोकात् प्रागेव देवयानमार्गे प्रविष्टतया नेदं चन्द्रकृताति-
: **देवयानप्रथमप्रवेशबोधकमिति, नापि यथावस्थितातिवाहिकक्रममनुरुध्य प्रवृत्तमिति च।**

[1]तस्यारो ह्रदो मुहूर्ता [2]यष्टिहाः ॥ २२ ॥

[3]विरजा नदी ॥ २३ ॥ [4]तिल्यो वृक्षः ॥ २४ ॥

सालज्यं संस्थानं ॥ २५ अपराजितमायतनम् ॥ २६ ॥

इन्द्रप्रजापती द्वारगोपौ ॥ २७ ॥ विभु[5]प्रमितम् ॥ २८ ॥

1. तस्य ह्वा एतस्य ब्रह्मलोकस्यारो. 2. येष्टिहाः. 3. विजरा. 4. इ विभु प्रमितम् ।

तस्यारो ह्रदो मुहूर्ता यष्टिहाः । तस्य ब्रह्मलोकस्य समीपे अरसंज्ञ । छान्दोग्ये, 'अरश्च ण्यश्चार्णवौ ब्रह्मलोके ऐरम्मदीयं सरः' इति सरस्त्व त् । ततः परस्तादविदूरे मुहूर्तसंज्ञकाः यष्टिहाः । यष्टिभिः अब्रह्मविदो गन ति यष्टिहाः ॥ २२ ॥

विजरा नदी । विजरेतिसंज्ञावती नदी । विरजा नदीत्यपि पाठोऽस्ति जोविरोधित्वात् विजरा विरजेत्युच्यते ॥ २३ ॥

तिल्यो वृक्षः । ततोऽविदूरे तिल्यसंज्ञिको वृक्षः । छान्दोग्ये, 'तदश्वः वनः' इति सोमसवनसंज्ञकोऽश्वत्थो वृक्ष उक्तः ॥ २४ ॥

सालज्यं संस्थानम् । सालज्यनामकं संस्थानं=स्थानीयम् । 'स्थानं ो ऽन्यत्तु यन्मूलनगरादृहि' रित्यमरः । सालेषु प्राकारेषु ज्या युद्धसा तत् सालज्यम् ॥ २५ ॥

अपराजितमायतनम् । 'अपराजिता पूः ब्रह्मण' इति श्रवणात् अपः ज्ञकमायतनं पुरमित्यर्थः । अब्रह्मविद्भिर्न जीयतइत्यपराजितम् ॥ २६ ॥

इन्द्रप्रजापती द्वारगोपौ । इन्द्रप्रजापतिसंज्ञकौ पट्टणद्वारपालकौ ॥ २७

विभुप्रमितम् । अत्र मण्टपमिति शेषः । विभुत्वेन अतिविस्तृतत्वेन प्रमि यमण्टपमित्यर्थः । 'प्रभुविमितं हिरण्मय' मिति छान्दोग्योक्तेः ॥ २८ ॥

उपासकस्योपासनफलं ब्रह्मलोकप्राप्तिपर्यन्तमेतावतोक्तम्. अथ ब्रह्मपर्यङ्कारोहणा श्यते, यदनन्तरमेवास्य परिपूर्णब्रह्मानुभवः । तदर्थमत्र स्थितान् विशेषान् निर्दिश गष्टिना ।

विचक्षणा आसन्दी ॥ २९ ॥ अमितौजाः पर्यङ्क

प्रिया च मानसी प्रतिरूपा च चाक्षुषी पुष्पाण्य[1]पचयत

यतो वै च जगत्यम्बाश्चाम्बायवश्चा[2]प्सरसोऽम्बया न

त्थंविदागच्छति ॥ ३२ ॥

तं ब्रह्माह — अभिधावत मम यशसा विरजां (वि

नदीं प्रापत् । न वाऽयं [3]जिगीष्यतीति (जरयिष्यतीति) ॥

1. पुष्पाण्यादायावयतौ. 2 अम्बावयवाश्च. (जगान्यम्बाश्चाम्बायवश्च)

---

विचक्षणा आसन्दी। विचक्षणसंज्ञिका असन्दी धर्मादिपीठ

अमितौजाः पर्यङ्कः। अमितौजा नाम योगपर्यङ्कः ॥ ३०

प्रिया च — अपचयतः ?। मनोधिष्ठात्री नाम्ना प्रिया च

नाम्ना प्रतिरूपा च पुष्पाणि अपचयतः (?) कुसुमानि देव्यौ ॥ ३१

तमित्थंविदागच्छति। तादृशब्रह्मलोकमेतादृशस्वरूपविदाग

तं ब्रह्माह — जिगीष्य (?) तीति। यूयं तं ब्रह्मविदमागत

वत अभिगच्छत = प्रत्युत्थानं कुरुत। मम यशसा ममानुग्रहेणायं ब्रह्म

नदीं विरजानदीसमीपं प्राप्तवान्। विरजानदी [ समीपदेश ? ] संब

विरजामेष्यतीति परमात्मा अप्सरसः प्रतिवदतीत्यर्थः ॥ ३२ ॥

---

अपचयत इति। चिञ् चयने। चुरादिः। ञित्करणसामर्थ्यात् णिजि

यतो वै इत्यादिभागस्य भाष्यं न दृश्यते। तदर्थश्च प्रियादिवत् यत्र स

अन्याश्च स्त्रियः सन्ति, तथा तदंशभूताः अम्बया मुख्यभूतया नद्यः प्रमोदव

अप्सरसश्च सन्तीति।

तमित्यादि। अत्र नदीं प्रापदिति प्रयोगात् मुक्तस्य विरजानदीप्राप्त्यन

अप्सरसां प्रेरणमिति ज्ञायते। अप्सरोभिः क्रियमाणोऽलङ्कारश्च मुक्तस्याप्राकृत

प्राकृतभूतसूक्ष्मे। एवं ब्रह्मालङ्कारेणालङ्कृतो ब्रह्मैवाभिप्रैतीत्युक्तम्; न

आगच्छत्ययं हृदमिति। अतः तं ब्रह्माहेत्यतः प्रागेव स आगच्छत्ययं

तां मनसैवात्येति इत्यन्तो भागो योज्यः, अर्थक्रमानुसारात्। यस्तु तदुपरि

दुष्कृते धूनुते इत्यादिः विदुष्कृतो ब्रह्म विद्वान् ब्रह्मैवाभिप्रैतीति भागः,

न्वितः; सुकृतदुष्कृतधूननादेः विरजानद्यतिक्रमणपश्चाद्भावित्वाभावात्; स्थूलदेहवि

**तं पञ्च शतान्यप्सरसां प्रतिधावन्ति, शतं मालाहस्ताः, शतमञ्ज**
**:, शतं चूर्णहस्ताः, शतं वासोहस्ताः, शतं[1] फणहस्ताः, तं ब्रह्मालङ्क**
**ङ्कुर्वन्ति । स ब्रह्मालङ्कारेणालंकृतो ब्रह्म विद्वान् ब्रह्मैवाभिप्रैति ॥ ३४**

**स आगच्छत्यरं[2] ह्रदम् । तन्मनसाऽत्येति । तमृत्वा संप्रतिवि**
**न्ति ॥ ३५ ॥**

1. फणा. 2. आगच्छत्यारं.

---

**तं पञ्च शतानि—अभिप्रैति । फणः** भूषणम् । **ब्रह्मैवाभिप्रैति** । ब्रह्मदर्शनोत्सु
वति; नाप्सरस्संभाषणवासोभूषणादिषु सादर इत्यर्थः । शिष्टं स्पष्टम् ॥ ३४ ।

स आगच्छति — **मज्जन्ति** । **तमृत्वा** तं ह्रदं प्राप्य **संप्रति** इदानीमा
ज्ञानिनः **मज्जन्ति** स्नान्तीत्यर्थः ॥ ३५ ॥

---

**देवयानं पन्थानमापद्येति** प्रथमश्रुतवाक्यात् प्राक् स घटनीय इपि साम्परायाधि
"छन्दत उभयाविरोधात्" इति सूत्र एव स्थितम् । **स आगच्छति तिल्यं वृक्ष**
ादनन्तरश्रुतवाक्यार्थस्तावत् ब्रह्मालङ्कारेणालङ्कारणानन्तरमेव भवतु । अस्तु वा तिल्यवृक्ष
न्तरमेव अप्सरसां प्रत्युद्गतानां प्राप्तिः । अत्र छान्दोग्योक्तयोरैरम्मदीयसरस्सोमसवनाख्या
रपि यथायथं घटनं युक्तम् । सोऽश्वत्थ एवायं तिल्य इत्यपि विमृश्यम् । सर्वैमि
वेभाव्यैव **श्रीमति रहस्यत्रयसारे**, गतिविशेषाधिकारे, 'विरजापारं प्रापय्य अप्राकृत
ादाय ऐरम्मदीयं सरः संगमय्य सोमसवनाख्यमश्वत्थमुपगमय्य मालाञ्जनादिहस्त
: प्रत्युद्गमय्य ब्रह्मालङ्कारेणालङ्कार्य ब्रह्मगन्धरसतेजांसि प्रवेश्य' इति क्रमः श्रीदेशिक
र्शित इति तदवधानेनेहार्थक्रमविन्यासो भाव्यः । **विरजां नदीं प्राप्**दित्यस्य प्रकृत
रीत्या विरजानदीसमीपं प्राप्तवानिति समीपदेशप्राप्तिरूपार्थविवक्षया **स आगच्छति**
ं **नदी**मित्यादिवक्ष्यमाणवाक्यसामञ्जस्यसंपादनेऽपि अत्राप्सरःक्रियमाणालङ्कारादिवर्ण
ाकृतशरीरे घटते इति ध्येयम् ।

**संप्रतिविदो मज्जन्तीति** । **सम्प्रतिशब्दस्य सम्यगित्यर्थः** श्रुतिप्रसिद्धः छान्दोग्ये
दिविद्यासु दृष्टश्च । अतो यथावस्थितपरावरतत्त्ववेदिन इति संप्रतिविद इत्यस्यार्थः स्यात्
वत् कोऽप्यर्थः । के ते मज्जनकर्तारः । न हि नित्यमुक्तानां मज्जने पावनमपेक्षितम् ;
रजादि नेदिष्ठं विहायात्र मज्जने विशेषगमकं किञ्चिदिति चेत् — सन्त्वेते संप्रतिविदः
न्दनादयः माहात्म्यबलात् केनापि मार्गेण प्रकृतिमण्डलमतिक्रम्य तत्संनिहितेऽत्रारे
तदा तदा समागत्य मज्जनकर्तारः । ततः परं तु परमपदे न ते गन्तुं प्रभवन्ति, यत्र
प्रष्ठिहा अमानवानानीतप्रतिषेद्धारो जाग्रति ।

स आगच्छति मुहूर्तान् [1] यष्टिहान् तेऽस्मादपद्रवन्ति ॥ इ

स आगच्छति विरजां नदीम् । तां मनसैवात्येति । त
दुष्कृते धूनुते ।

1. येष्टिहान् .

---

स आगच्छति मूहूर्तान् — अपद्रवन्ति । तमनिरुन्धा
गच्छन्तीत्यर्थः ॥ ३६ ॥

तत् सुकृतदुष्कृते धूनुते । तत् तदैवेत्यर्थः । अयञ्च तच्छ
ब्दहितविरजानद्यतिक्रमणकालवाची । अपि तु, 'ये वै के चास्माल्लोकात् ।
वाक्यनिर्दिष्टप्रयाणकालवाची । इदञ्च वाक्यं गुणोपसंहारपादे चिन्तितम् ·

कौषीतकिनामुपनिषदि, 'विरजां नदीं मनसा अत्येति त
दुष्कृते धूनुते' इति विरजानद्यतिक्रमणहेतुतया तदनन्तरभाविसु
धूननश्रवणात्, 'अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखा
धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवानी'ति, 'तस्य पुत्रा द
सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' इति च श्रुत्या देहवियोगसमकाल
दुष्कृतहानसंक्रमणयोः श्रवणात् कर्मैकदेशस्य देहवियोगकाले नाशः, शेषस्य
तिक्रमणानन्तरं नाश इति प्राप्ते उच्यते—"सांपराये तर्तव्याभावात् तथा
सांपराये=देहापक्रमणकाल एव सुकृतदुष्कृतविनाशः । ततः ऊर्ध्वं तत्साध्यस्य
प्राप्तव्यस्य सुखदुःखानुभवरूपफलस्याभावात् । तथा ह्यन्ये शाखिनः ब्रह्मवि
परित्यागानन्तरं ब्रह्मप्राप्तिव्यतिरेकेण कर्मफलानुभवाभावमधीयते, 'त
चिरम्, यावन्न विमोक्ष्येऽथ संपत्स्ये' इति । "छन्दत उभयाविरोधात्"
भाव्याद्देहवियोगकाल एव कर्मनाश इति निश्चिते तयोरविरोधाय, 'वि
मनसा अत्येति तत् सुकृदुष्कृते धूनुते' इत्यस्य वाक्यस्य तच्छब्दस्य छन्द
मन्वयोऽङ्गीकर्तव्यः । "गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः" । सुकृ

---

तत् सुकृतदुष्कृते धूनुत इत्यादिकं, स एतं देवयानमितिवाक्यात् प्रा
मिति प्रागेवोक्तम् । अस्यात्र पाठस्तु विरजातिक्रमणान्तरभावि ब्रह्मालङ्कारार्हमस्य
कर्माधीनम्, किंतु अप्राकृतमिति ज्ञापनार्थः ।

**तस्य प्रिया ज्ञातयः सुकृतमुपयन्ति; अप्रिया दुष्कृतम् ॥ ३७**

देहवियोगकाले हानिः, शेषस्याध्वनि हानिरित्यभ्युपगम एव देवयानग
वित्त्वम् । इतरथा हि देहवियोगकाल एव सर्वकर्मक्षये सूक्ष्मशरीरस्या
केवलस्याऽऽत्मनो देवयानासंभवेन देवयानश्रुतेरर्थशून्यत्वमेव स्यादित्यर्थः
ह—" उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् " । देहोत्क्रान्तिकाल एव सर्वक
पपन्नः । क्षीणकर्मणोऽपि विदुषो विद्यामाहात्म्यात् सूक्ष्मदेहानुवृत्तिसंभवे
गमनसंभवात् । यथा लोके सस्यादिसमृद्ध्यर्थमारब्धेऽपि तटाकादिवे
समृद्धीच्छायां तटाकादिनिर्माणहेतुभूतायां नष्टायामपि, पानीयपानाद्यर्थत
दिः स्थाप्यते, एवं कर्महेतुकसूक्ष्मदेहो नष्टेऽपि कर्मणि विद्याफलाय स्थाप्य
। ननु देहवियोगकाल एव कर्मनाशे ब्रह्मविदां वसिष्ठावान्तरतपःप्रभृती
ादिनिमित्तसुखदुःखानुभवो न स्यादित्यत्राह—" यावदधिकारमवस्थितिराधि
णाम् " । आधिकारिकाणां वसिष्ठादीनां यावदधिकारं कर्मावतिष्ठते
य भोगैकनाश्यत्वादिति स्थितिः (तम्?) । प्रकृतमनुसरामः ।

**तस्य—दुष्कृतम्** । ब्रह्मविदः इष्टानिष्टफलदित्सालक्षणपरमात्मप्रीत्यप्रीति
तदुष्कृतयोश्चतस्रोऽवस्थाः श्रुताः — विनाशः अश्लेषः धूननम् उपायनञ्चेति
पूर्वाघविषयः । कर्मफलदित्साप्रतिबन्धलक्षणोऽश्लेष उत्तराघविषयः । तै
द्ययमुपासकः प्रक्रान्तमुपासनं समापयेत्, पूर्वोत्तरयोः कर्मणोः फलं न दास्या
भगवत्संकल्परूपौ उत्तरपूर्वाघाश्लेषविनाशौ दर्शनसामानाकारज्ञानारम्भ ए
गम उत्तरपूर्वाघयोरश्लेषविनाशौ " — इति सूत्रोक्तन्यायेन भवतः । अन्तिम

सूक्ष्मदेहानुवृत्तीति । ननु सस्याद्यर्थतया समारब्धस्य तटाकस्य पानीयाद्यर्थत
स्थापनवत् किमर्थमारब्धः सूक्ष्मदेहो विद्यामाहात्म्यात् स्थाप्यते ? न च वेदान्तिम
इव सकलसृष्टिकालिकशरीरानुवृत्तं सूक्ष्मशरीरं किञ्चिदस्ति, तदभावस्याधिकरण
ौ स्पष्टमुक्तेः । यथा,

कल्पादौ भूतसूक्ष्मप्रभृतिभिरुदितं वर्ष्म कल्पान्तनाश्यं
प्रत्येकं प्राणिभेदे नियतमनियतस्थूलदेहानुयायि ।
लिङ्गाख्यं भस्त्रिकान्तःपवनवदवस्थायि सांख्यैः प्रगीतम्
सूक्ष्मांशः पूर्वमूर्तेरुपरितनतनोर्बीजमत्रेष्यते तत् ॥ (४८६)

[तत्] यथा रथेन [1]धावन् रथचक्रे पर्यवेक्षते, एवमहो
वेक्षते । एवं सुकृतदुष्कृते, सर्वाणि च द्वंद्वानि ॥ ३८ ॥

स एष विसुकृतो विदुष्कृतो ब्रह्म विद्वान् ब्रह्मैवाभिप्रैति

स आगच्छति तिल्यं वृक्षम् ; तं ब्रह्मगन्धः प्रविशति । स अ
सालज्यं संस्थानम् ; तं ब्रह्मरसः प्रविशति । स आगच्छति अ
मायतनम् ; तं ब्रह्मतेजः प्रविशति । स आगच्छतीन्द्रप्रजापती द्व
तावस्मादपद्रवतः । स आगच्छति विभुप्रमितम् ; तं ब्रह्मयशः प्रविश

1. धावयन्.

---

प्रत्ययपर्यन्तोपासननिवृत्त्यनन्तरम्, विनष्टाश्लिष्टयोरेव कर्मणोः, फलं नैव द
संकल्परूपं विधूननं देहवियोगकाले भवति; तस्मिन्नेव समये एतदीयप्रिय
एतदीयसुकृतदुष्कृतानुरूपेष्टानिष्टफलदित्सालक्षणमुपायनञ्च भवति ॥ ३७ ।

**यथा — द्वन्द्वानि ।** यथा रथेन धावन् पुरुषः स्वयं निर्व्यापार
व्याप्रियमाणरथचक्रादिकं साक्षितया पश्यन् गमनक्रियाजनितशरीरायासादि
हृष्टो भवति । एवं प्रवर्तमानकालचक्रं सुकृतदुष्कृततत्साध्यद्वंद्वपरम्परां स्वान
पश्यन् निर्दुःखसुखमास्ते ॥ ३८ ॥

**स एषः — अभिप्रैति ।** स्पष्टोऽर्थः ॥ ३९ ॥

**स आगच्छति —** । यथा प्रभाते अनुकलं आदित्यादिसामीप्या
प्रकाशाधिक्यम्, एवं देशविशेषविशिष्टब्रह्मसान्निध्यातिशयानुकलसमेधमान
वस्थाविशेषाः ब्रह्मगन्धब्रह्मरसादिशब्दैरभिलप्यन्ते । ब्रह्मणः सर्वगन्धत्वादेः,
गन्धरसर्वरसः ' इति प्रतिपन्नत्वात् यथाश्रुतार्थग्रहणेऽपि न दोषः । उ
तस्मै मार्गं प्रयच्छत इत्यर्थः ॥ ४० ॥

---

इति इति चेत् — उच्यते । कर्मफलानुभवार्थं कल्पितं यत् चरमं स्थूलशरी
प्रस्थानात् पश्चाद् भस्मादिभावमापत्स्यमानम्, तस्य कश्चिदंशः पूर्वं स्थूलशरीरे फ
तनतयोपयुक्तः संप्रति गत्याद्यौपयिकतया विद्यया स्थाप्यते स्थूलदेहेन सह भस्मताद्यन
अयञ्च चरमशरीरांशः न कस्यचिद्देहस्य बीजभूतः, उपरि प्राकृतदेहप्रसक्त्यभावात् ।
सूक्ष्मांशो न भाविफलानुभवोपयोगीति ।

**एवमहोरात्रे** इति । रथेन गच्छतः रथचक्राधीनभ्रमणानाश्रयत्ववत् अहोरा
व्यापारानालीढत्वमस्येति भावः ।

स आगच्छति विचक्षणामासन्दीम्; बृहद्रथन्तरे सामनी पादौ । श्यैतनौधसे चापरौ पादौ । वैरूपवैराजे शाक्वररैवते तिरश्ची सा प्रज्ञा । प्रज्ञया हि विपश्यति ॥ ४१ ॥

स आगच्छत्यमितौजसं पर्यङ्कम्; स प्राणः ॥ ४२ ॥

तस्य भूतं च भविष्यच्च पूर्वौ पादौ । श्रीश्च इरा चापरौ ॥ ४

बृहद्रथन्तरे अनूच्ये ॥ ४४ ॥ भद्रयज्ञायज्ञीये शीर्षण्ये[1] ॥ ४

ऋचश्च सामानि च प्राचीनाततम् ॥ ४६ ॥

यजूंषि तिरश्चीनानि ॥ ४७ ॥ सोमांशव उपस्तरणम् ॥ ४

उद्गीथ उपश्रीः ॥ ४९ ॥ श्रीरुपबर्हणम् ॥ ५० ॥

1. शीर्षण्यम्.

---

सा प्रज्ञा प्रज्ञाधिष्ठात्री देवता । तत्संबन्धादयं सर्वं पश्यतीत्यर्थः ॥ ४१ ॥

प्राणः प्राणाभिमानीत्यर्थः । एवमुत्तरत्रापि द्रष्टव्यम् ॥ ४२ ॥

तस्य पर्यङ्कस्य चतुरोऽपि पादानाह तस्य — अपरौ ।

भूतभविष्यत्कालैश्वर्यान्नाभिमानिदेवताश्चत्वारः पादाः ॥ ४३ ॥

बृहद्रथन्तरे अनूच्ये । बृहद्रथन्तराख्ये सामनी अनूचीनदारुणी इत्यर्थः ॥ ४४ ॥

भद्रयज्ञायज्ञीये शीर्षण्ये । भद्रयज्ञायज्ञीयाख्ये सामनी तिरश्चीनदारुणी ॥ ४५ ॥

प्राचीनाततं पर्यङ्काातता दीर्घाः तान्तवरज्जुविशेषाः ॥ ४६ ॥

तिरश्चीनानि तिर्यक्ततरज्जुविशेषाः ॥ ४७ ॥

सोमांशव उपस्तरणम् । चन्द्रकिरणा एवास्तरणम् ॥ ४८ ॥

उद्गीथ उपश्रीः । श्रीसमीपे वर्तमानमास्तरणमुद्गीथः ॥ ४९ ॥

उपबर्हणं पादोपधानम् ॥ ५० ॥

तस्मिन् ब्रह्मास्ते । तमित्थंवित् पादेनैवाग्र आरो
कोऽसीति । तं प्रतिब्रूयात् ॥ ५१ ॥ ऋतुरस्म्यार्त
आकाशाद्योनेः संभूतो[1] भयायैतत्संवत्सरस्य ते
भूतस्यात्मा[2] त्वमात्माऽसि । यस्त्वमसि सोऽहमस्मीति ।
[आत्मासीति । ] ५४ ॥

[1]. भार्यायै रेतः संवत्सरस्य. 2. भूतस्य भूतस्यात्मभूतस्य.

---

**तस्मिन् — प्रतिब्रूयात्** । स्पष्टोऽर्थः ॥ ५१ ॥

**ऋतुः — अस्मि** । अयञ्च मन्त्रखण्डः प्राग्व्याकृतः ।

**आकाशाद्योनेः — अस्मीति** । 'अथैतमेवाध्वानं पु
माकाशम् आकाशाद्वायुं वायुर्भूत्वा धूमो भवती' ति श्रुत्युक्तरीत्य
क्रमेणावरुह्य "योनेश्शरीर" मिति सूत्रोक्तरीत्या योनेस्संभूतोऽस्
एतत् भवनभयं (भवनं?) भयहेतुः । **संवत्सरस्य** संवत्
रेतोभूतस्य **भूतस्य भूतस्य** सर्वभूतस्य **त्वमात्मा** पौनःपु
वृष्ट्यन्नरेतोरूपशरीरयुक्तस्य सर्वस्यापि जीवजातस्य त्वमात्मा । अतः
ब्रह्मात्मकत्वञ्च स्वस्योपन्यस्तं भवति । त्वदात्मकोऽहमियन्तं क
जन्मसाहस्रीं संसारपद्वीं व्रजन् । मोहश्रमं प्रयातोऽसौ वासना
न्यायेन संसारे पतितोऽस्मीत्यर्थः ५३ ॥

मम कथमात्मत्वमित्यत्राह — **आत्मासि** व्यापकोऽसीत्य
दात्मत्वमुपपद्यत इति भावः ॥ ५४ ॥

---

तं **प्रतिब्रूयादिति** । एवं प्रतिब्रुवतः ---

"अनयाऽहं वशीभूतः कालमेतं न बुद्धवान् ।
उच्चमध्यमनीचान्तां तामहं कथमावसे ॥
अपेत्याहमिमां हित्वा संश्रयिष्ये निरामयम् ।
अनेन साम्यं यास्यामि नानयाऽहमचेतसा ॥
क्षमं मम सहानेन ह्येकत्वं नानया सह ।"

इति श्रीमद्रहस्यत्रयसारोद्धृतवचनार्थो मनसि विपरिवर्तेत इति मन्तव्यम् ।

[माह कोऽहमस्मीति ॥ ५५ सत्यमिति ब्रूयात् ॥ ५६ ॥

कि तत् यत् सत्यमिति ॥ ५७ ॥

[दन्यत् देवेभ्यश्च प्राणेभ्यश्च, तत् सत् । अथ यत् देवाश्च तत् त्यम्[1]। तदेतया वाचाऽभिव्याह्रियते[2] सत्यमिति । एता- । [सर्वमिदम् ।] सर्वमस्मीत्येवैनं तदाह ॥ ५८ ॥

देतत् श्लोकेनाप्युक्तम् —

जूदरः सामशिरा असावृङ्मूर्तिरव्ययः ।

ब्रह्मेति हि विज्ञेयः ऋषिर्ब्रह्ममयो महान् ॥ इति ।

माह—केन [मे] पौंस्नानि नामान्याप्नोषीति ।[3]प्राणेनेति ब्रूयात् । नामानीति । वाचेति । केन नपुंसकनामानीति । मनसेति ॥ ५९ ॥

त् सत्यम्. 2. अभिव्यवह्रियते. 3. आप्नोतीति.

माह — । यस्त्वमसि सोऽहमस्मीत्युक्तम् । अहं वा क इति र्थः ॥ ५५ ॥

तरमाह—सत्यमिति ॥ ५६ ॥

ः पृच्छति किं तत् यत् सत्यमिति ॥ ५७ ॥

दन्यत् – तदाह । सदित्यनेन देवप्राणव्यतिरिक्तमुच्यते । त्यमित्यनेन अत· सत्यमित्युक्त्या सर्वं संगृहीतं भवति । ततश्च सत्यमस्मीत्युक्ते क्तं स्यादित्यर्थः । ततश्च सर्वेषामात्मैव मदात्मेत्यर्थः ॥ ५८ ॥

द्रेन्द्रियमनःप्राणज्ञानव्यतिरेकं प्रश्नोत्तरव्याजेन स्पष्टयति तमाह केन मे—। ोनि गुणत्रयोन्मेषविशेषरूपाणि न तु आत्मस्वरूपगतानि । ततश्च कमनोवाक्प्राणनिष्ठान्येव नपुंसकत्वस्त्रीत्वपुंस्त्वानि । अतः तत्संबन्धादात्मनि इति भावः । प्राणादीनां तृतीयानिर्देशेन करणत्वप्रतीतेः स्वस्य कर्तृत्व- ानोवाक्प्राणव्यतिरेकः सिद्धः । एवमुत्तरत्रापि द्रष्टव्यम् ॥ ५९ ॥

केन गन्धानिति । घ्राणेनेति ॥ ६० ॥

केन रूपाणीति । चक्षुषेति । केन शब्दानिति । श्रोत्रेणे[1] रसानिति । जिह्वयेति । केन कर्माणीति हस्ताभ्यामिति । केन इति । शरीरेणेति ॥ ६१ ॥

केनाऽऽनन्दं रतिं प्रजातिमिति । उपस्थेनेति ॥ ६२ ॥

केनेत्या इति । पादाभ्यामिति ॥ ६३ ॥

केन धियो विज्ञातव्यं कामानिति ॥ ६४ ॥

प्रज्ञयेति [प्र] ब्रूयात् ॥ ६५ ॥

तमाह—आपो वै खलु [2]मे ह्यसावयं ते लोक इति ॥ ६६

सा या ब्रह्मणो जितिः [3]या व्यष्टिः, तां [4]जितिं जयति त व्यश्नुते, य एवं वेद य एवं वेद ॥ ६७ ॥

इति कौषीतक्युपनिषदि प्रथमोऽध्यायः ।

1. केनान्नरसानिति. 2. नीयन्ते 3. ब्रह्मणश्चितिः । 4. चितिं.

---

घ्राणेनेति । घ्राणेन गन्धान् जानामीति ब्रूयादित्यर्थः । एव यथायोग्यमन्वयः तत्तदिन्द्रियव्यतिरेकश्च बोध्यः ॥ ६० ॥

शरीरेणेति । 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत इ वैषयिकसुखदुःखयोः शरीरहेतुकत्वात् शरीरस्य च करणतया निर्देशः ॥

प्रजातिः प्रजननम् ॥ ६२ ॥ इत्याः गमनानीत्यर्थः ॥ ६३

ज्ञातव्यं कामान् ज्ञानविषयान् इच्छाविषयांश्चेत्यर्थः । ज्ञाने केनाप्नोषीति पर्यवसितोऽर्थः ॥ ६४ ॥

प्रज्ञया मनसेत्यर्थः ॥ ६५ ॥

तमाह—लोकोऽसौ अमृतस्य (?) आपो भुज्यन्ते । तवाप्यसौ भोग्य इत्यर्थः ॥ ६६ ॥

सा या—य एवं वेद । अत्र वेदशब्दः उपासनपरः । उक्तपर्य निष्ठो यः, स जितिं जयं व्यष्टिं योगञ्च लभते इत्यर्थः ।

यत्त्वत्र परैः—‘ पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैती ’ ति
परमसाम्यापत्तौ निरञ्जनस्य गमनासंभवात् परमसाम्यापत्तेः देशान्तरप्राप्त्यन
देवयानस्य पथो नार्थवत्त्वम् । आत्मैकत्वदर्शिनामाप्तकामानामिहैव दग्धा
बीजानाम् आरब्धदेहकर्माशयक्षपणव्यतिरेकेणापेक्षितव्याभावात् । पर्यङ्का
तु पर्यङ्कारोहणब्रह्मगन्धप्रवेशादीनां विशिष्टदेशान्तरप्राप्तिसापेक्षत्वात् तत्तैः
अपेक्षितः । न हि ग्रामप्राप्तावपेक्षितः पन्था आरोग्यप्राप्तावपेक्षितः इति, “
वत्त्वमुभयथाऽन्यथा हि विरोधः”, “ उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत
सूत्राभ्यां प्रतिपादितमिति । तथा, ‘ एवमेवास्य परिद्रष्टुः इमाष्षोडशकलाः पु
पुरुषं प्राप्यास्तं गच्छन्ती’ति श्रुतेः ब्रह्मविदः प्राणानां ब्रह्मण्येव लयः । ‘गत
पञ्चदश प्रतिष्ठा ’ इति कलानां पृथिव्यादिस्वप्रकृतौ लयप्रतिपादनं तु
दृष्ट्यभिप्रायमिति कलाप्रळयाधिकरणे स्थितम् । सोऽपि कलाप्रळयो निरवः
भिद्येते तासां नामरूपे पुरुषे, ‘ स एषोऽकलोऽमृतो भवती ’ ति, “ ः
वचना ” दित्यत्र प्रतिपादितम् । अतो न मुक्तस्यार्चिरादिमार्गेण गमनमित्युः

तन्न — तथासति, “ अनियमः सर्वेषामविरोधः ” इत्यधिक
उपकोसलविद्यायां पञ्चाग्निविद्यायाञ्चार्चिरादिगतेराम्नानात् तद्विद्यानिष्ठान
रादिगतिः; नान्येषामिति पूर्वपक्षं कृत्वा, ‘तद्य इत्थं विदुर्ये चेमेऽरण्ये
इत्युपासते ’ इति श्रद्धातपःशब्दलक्षितब्रह्मविद्यान्तरनिष्ठानामप्यर्चिरादिगतिः
‘ शुक्लकृष्णे गती ह्येते जगतश्शाश्वते मते । एकया यात्यनावृत्तिमन्यया
पुनः’इति अनुमानशब्दितात् स्मरणाच्च सर्वविद्यासाधारण्यमाश्रयणीयम्; उ
विद्यायां पञ्चाग्निविद्यायाञ्च द्विराम्नानस्योभयत्रानुचिन्तनार्थत्वेनाप्युपपत्तेरिति
दिगतेः सर्वविद्यासाधारण्यम् , “ अनियमः सर्वेषामविरोधश्शब्दानुमान
इत्यधिकरणे प्रतिपादितमिति परैरप्युक्तत्वात् तद्विरोधः । न च सव
विद्यासाधारण्यमेवास्मिन्नधिकरणे प्रतिपादितम्; न तु निर्गुणविद्यासा
वाच्यम् । निर्गुणविद्याया एवाप्रामाणिकत्वात् । ‘ स वा एष महानज आ
विज्ञानमयः प्राणेषु य एषोन्तर्हृदय आकाशस्तस्मिन् छेते ’ इति बृहदारण्यः
यगतायाः निर्गुणविद्यात्वेन पराभिमतायाः दहरविद्यायाः छान्दोग्यगतसगुण

हृदयायतनत्वसेतुत्वलोकासंभेदहेतुत्वादिसामान्येन, "कामादीतरत्र
दिभ्यः" इत्यधिकरणे सूत्रकृतैव समर्थितत्वात् । परैरपि तथा व्याख्य
निर्गुणायामपि विद्यायां ब्रह्मस्तुत्यर्थमेव सगुणविद्यासंबन्धिगुणोपसंह
वाच्यम्— निर्गुणस्य परस्य ब्रह्मणो गुणवत्त्वेन अवरब्रह्मत्वेन प्रति
निन्दात्वेन स्तुतित्वासंभवात् । अत एव, "व्यतिहारो विंशिषन्ति ही
'तद्योऽहं सोऽसौ योऽसौ सोऽहं त्वं वा अहमसि भगवो देवते
भगवो देवते' इत्यत्र संसारिण ईश्वरत्वचिन्तने, 'ब्रह्मदृष्टिरुत्कर्षात्'
ऽनुगृहीतो भवति । ईश्वरस्य संसार्यात्मत्वचिन्तने निकर्षः प्रसज्येत ।
मतिर्न कर्तव्येति पूर्वपक्षं कृत्वा, 'आम्नानबलात् द्विरूपाऽपि मति
नन्वेवमुत्कृष्टस्यापि निकर्षप्रसङ्ग इत्युक्तम् । तत् किमिदानीं सगुणे ब्र
तस्य वस्तुतो निर्गुणस्य निकृष्टता भवति । ननु कस्मैचित् फलाय नि
त्तया ध्यानमात्रं क्रियते । न तावता तस्य निकृष्टता भवतीति चे
व्यतिहारानुचिन्तनमात्रमुपदिश्यते फलाय; न तु निकृष्टता भवत्युक्
निर्गुणस्य सगुणत्वे निकर्षप्रसक्तिमभ्युपेत्य, वस्तुतो निकर्षो नास्तीति
वाचस्पत्ययोर्व्याहतत्वेन निन्दावहस्य गुणकीर्तनस्य स्तुत्यर्थत्वासंभवात् ।
हि स्तुतिर्विधेयरुच्युत्पादनेन सप्रयोजना । न चात्र निर्गुणस्य तज्ज्ञानस्
त्वमस्ति । न वा गुणवत्त्वेन स्तुतेर्निर्गुणप्रतिपत्त्युपयोगोऽस्ति । किञ्च नि
तवशित्वादिगुणानां न छान्दोग्यगतसगुणविद्यायामाध्यानायोपसंहारसंभव
वशित्वादयः श्रूयन्ते, तत्रापि तेषां ध्येयत्वेना[न ?]भिधानात् अन्यत्र ग
ध्येयत्वं संभवती'ति तैरेवोक्तत्वात् । स्तुत्यर्थत्वमपि न संभवति ; सत्यक
मर्थ्यादेव सर्वेश्वरत्वसिद्ध्या स्तुतेः सिद्धत्वेन सत्यकामत्वान्तर्भूतवशित्वकीर्त
संभवात् । कठवल्लीषु पराभिमतनिर्गुणब्रह्मप्रकरणे, 'शतञ्चैका च हृदयस्य
मूर्धानमभिनिस्सृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भ
उत्क्रान्तिगत्योः प्रतिपादनात् । निर्गुणविद्यात्वेन पराभिमतायां भूमविद्याय
एकधा भवति त्रिधा भवती' ति अनेकशरीरपरिग्रहश्रवणेन निर्विशेषब्रह्म
प्रतिपादनात् । न चास्य वाक्यस्य सगुणविद्यासु उत्कर्षः कल्पनीय इति

पश्यः पश्यति सर्वमाप्नोति सर्वशः' इति प्राक्प्रस्तुतस्यैव, 'स एकधा
ं तच्छब्देन परामर्शेन तथोत्कर्षकल्पने प्रमाणाभावात्। तथा निर्गुण-
पराभिमतप्रजापतिविद्यायाम्, 'एष संप्रसादो ऽस्माच्छरीरात् समुत्थाय
ारुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' इति शरीरादुत्क्रान्तेः श्रवणात्। न च
समुत्थानं शरीरविविक्तात्मसाक्षात्कार इति वाच्यम् — 'अशरीरो वायुरभ्रं
नयित्नुः अशरीराणि यथैतान्यमुष्मादाकाशात् समुत्थाय परं ज्योतिरुपसंपद्य
ाणाभिनिष्पद्यन्ते' इति दृष्टान्तानुगुण्येनैव दार्ष्टान्तिकेऽप्यर्थस्य वर्णनीय-
रविविक्तात्मसाक्षात्कारस्यापदार्थत्वादवाक्यार्थत्वात्। तथा निर्गुणविद्यात्वेनाभि-
याम्, 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' इति प्रारब्धा-
ासंपत्तिमुक्त्वा तदुत्तरखण्डे, 'यदाऽस्य वाङ्मनसि संपद्यते मनः प्राणे
से तेजः परस्यां देवतायाम्' इति ब्रह्मसंपत्त्यर्थतया उत्क्रान्तेः प्रतिपादि-
तथा वाजसनेयके षष्ठे तदभिमतनिर्गुणविद्यायामेव, "अणुः पन्था विततः
स्पृष्टोऽनुवित्तो मयैव। तेन धीरा उपयन्ति ब्रह्मविदः स्वर्गं लोकमित
ुक्ताः' इति गतिप्रतिपादनाच्च। "समाना चासृत्युपक्रमादमृतत्वं चानु-
ते विद्वदविदुषोरुत्क्रान्तिसाम्यस्य सूत्रकृता कण्ठत एव प्रतिपादितत्वाच्च
ातिः सगुणविद्याविषयेत्येतन्न प्रामाणिकानां हृदयमधिरोहति। "कार्यं
गत्युपपत्तेः" इति नित्यपरब्रह्मविद एवार्चिरादिगतिरिति बादरिमतस्य,
ानिर्मुख्यत्वा" दिति परब्रह्मोपासकानामर्चिरादिगतिरिति जैमिनिमतापेक्षया
स्य सिद्धान्तसूत्रत्वायोगात्। "चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णा-
सुकृतदुष्कृते एवेति तु बादरिः," "उत्क्रमिष्यत एवम्भावादित्यौडुलोमिः",
ेरिति काशकृत्स्नः", "स्वामिनः फलश्रुतेरित्यात्रेयः", "आर्त्विज्य-
मिस्तस्मै हि परिक्रीयते" इत्यादिषु सर्वत्र पाश्चात्यस्यैव सूत्रकृदभिमतत्व-
'कार्यं बादरिरस्य गत्युपपत्ते" रिति बादरिमतस्य सिद्धान्तसूत्रत्वाभ्युप-
ात्वात्। निर्विशेषब्रह्मभावस्यैव मुक्तिरूपत्वे, "संकल्पादेव तच्छ्रुतेः",
बादरिराह ह्येवम्", "भावं जैमिनिर्विकल्पामननात्," "द्वादशाह-
बादरायणोतः" इत्यादीनाम्, "अनावृत्तिश्शब्दात" इत्यन्ता-

नामर्थशून्यतैव स्यात्। न च, "संकल्पादेव तच्छ्रुते" रिति उपरि सगुणविद्याफलप्रपञ्चः" इति कल्पतरुकारेणोक्तत्वात् सर्वं स भूतावान्तरमुक्तिविषयमिति वाच्यम् — यदि हि मुक्तिद्वैविध्यं सूत्रकृद तर्हि, 'य आत्मा अपहतपाप्मे' त्यादिमुक्तौ ब्रह्मरूपाविर्भाववाक्य परम्, 'एवं वा अरेऽयमात्मा अनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एवे शेषप्रपञ्चबोधात्मकत्वेन स्वेन रूपेण निष्पत्तिप्रतिपादकं वाक्यं तु मिति व्यवस्थायाः सुवचतया व्यावहारिकपारमार्थिकत्वाभ्यां व्यवस्था त्वदभिमतस्य, "एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः" संगतिप्रसङ्गात्। तथा, 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" इ प्रतिपादकं वाक्यं परममुक्तिपरम्; 'स एकधा भवति त्रिधा भवती' प्रतिपादकं वाक्यमवान्तरमुक्तिपर' मिति व्यवस्थाया वक्तुं सुशकत च्छायां सशरीरत्वम्, अन्यदा अशरीरत्वमिति व्यवस्थाप्रतिपादकत्वे "द्वादशाहवदुभयविधं बादरायणोऽतः" इति सूत्रस्यासंगतिप्रसङ्गात् चानन्याधिपतिः" इति सूत्रे, "अत एव = सत्यसङ्कल्पत्वात् चश स्वराड्भवती' ति श्रुतेश्चानन्याधिपतिर्मुक्तो भवति; नास्यान्योऽधिप इदमपि सगुणोपासनया हिरण्यगर्भं प्राप्तस्य" इति यत् परैरुक्तम् — संगतम् — तस्य हिरण्यगर्भेश्वररूपाधिपतिसत्त्वेनानन्याधिपतित्वस्य त्वादित्यलमतिचर्चया। प्रकृतमनुसरामः॥ ६७॥

इति कौषीतक्युपनिषत्प्रथमाध्यायप्रकाशिका।

अथ द्वितीयोऽध्यायः

प्राणो ब्रह्मेति ह स्माह कौषीतकिः । तस्य ह वा एतस्य प्राणस्य
। मनो दूतं चक्षुर्गोप्तृ श्रोत्रं संश्रावयितृ वाक् परिवेष्ट्री । स यो ह वा
। प्राणस्य ब्रह्मणो मनो दूतं वेद, दूतवान् भवति । यश्चक्षुर्गोप्तृ
मान् भवति । यः श्रोत्रं संश्रावयितृ, संश्रावयितृमान् भवति
चं परिवेष्ट्रीम्, परिवेष्ट्रीमान् भवति । तस्मै वा एतस्मै प्राणाय
एताः सर्वा देवता अयाचमानाय बलिं हरन्ति । एवं हैवास्मै
ग्र भूतान्ययाचमानायैव बलिं हरन्ति, य एवं वेद । तस्योपनिषत्
चेदिति । तद् यथा ग्रामं भिक्षित्वाऽलब्ध्वोपविशेत्, नाहमतो
श्नीयामिति । त एवैनमुपमन्त्रयन्ते, ये पुरस्तात् प्रत्याचक्षीरन् । ए
ऽयाचतो भवति । अन्नादास्त्वेवैनमुपमन्त्रयन्ते, ददाम त इति ॥ १

प्राणो ब्रह्मेति ह स्माह पैङ्ग्यः । तस्य ह वा एतस्य प्राणस्य
ो वाक् परस्तात् चक्षुरारुन्धे ; चक्षुः परस्ताच्छ्रोत्रमारुन्धे ;, श्रो
न्मन आरुन्धे; मनः परस्तात् प्राण आरुन्धे; तस्मै वा एतस्
स्य ब्रह्मण एताः सर्वा देवता अयाचमानाय बलिं हरन्ति । ए

द्वितीयाध्यायपरिष्कारः

प्राणप्राशस्त्यमत्र द्वितीयेऽध्याये प्रतिपाद्यते । वाक्प्राणमनश्चक्षुःश्रोत्राणां पञ्चानामुपा
णतया प्राधान्येन परिग्रहः केनाद्युपनिषत्सु प्रसिद्ध इति बहुत्रास्माभिर्दर्शितमस्ति
कौषीतक्युपनिषदि तत्परिग्रहेण तत्र प्राणस्य प्राधान्यमन्यत्रेव प्रतिपाद्यते । तद्ग्रहणा
ाक्यानि कानिचिदुपासनान्युपदिश्यन्ते । तत्र प्राणवत् बलिहरणेन आराध्यत्वसिद्धिफलकं प्र
ष्टरूपमुपासनं तत्तन्मुनिमतं द्विप्रकारमुच्यते **प्राणो ब्रह्मेतीति** । प्राणो राजस्थानापन्न
दि च तत्परिजनस्थानापन्नमिति ब्रह्मत्वेन दृश्यस्य प्राणस्य मनआदिदूतत्वादिना द्रष्टव्य
ष्ट्री परिवेषणकर्त्री । **बलिं हरन्तीति** । छान्दोग्यादौ (५) 'यदहं वसिष्ठास्मि
ष्ठोऽसी' त्येवं वागादिभिः स्वस्वगतगुणार्पणं प्राणे क्रियमाणं द्रष्टव्यम् । (१)

कौषीतकिकृता ब्रह्मदृष्टिरुक्ता । पैङ्ग्यकृता सा तत्फलिका प्रदर्श्यते । **वाक्परस्ता**
**ौ विभक्तिव्यत्ययो द्रष्टव्यः** । वाचमतिशेते चक्षुः ; वाचोक्तेऽर्थे चक्षुषा दृष्ट
दार्ढ्यात् ; वाचः कर्मेन्द्रियत्वात् अस्य ज्ञानेन्द्रियत्वाच्च । चक्षुरतिशेते श्रोत्रम् । 'चक्षु
म्, श्रोत्रं दैव' मित्युक्तरीत्या आमुष्मिकस्य सर्वस्य श्रोत्रग्राह्यवेदैकवेद्यत्वात् । **मन**
ाहि ततोऽधिकम् । इन्द्रियाणां प्राणाधीनस्थितिप्रवृत्तिकत्वात् प्राणः श्रेष्ठः । (२)

हैवास्मै सर्वाणि भूतान्ययाचमानायैव बलिं हरन्ति, य एवं
निषत्, न याचेदिति । तद् यथा ग्रामं भिक्षित्वा
नाहमतो दत्तमश्नीयामिति, त एवैनमुपमन्त्रयन्ते, ये
क्षीरन् । एष धर्मोऽयाचतो भवति, अन्नादास्त्वेवैनमुपमन्त्र
इति। ॥ २ ॥

अथात एकधनावरोधनम् :, यदेकधनमभिध्यायात
वाऽमावास्यायां वा शुद्धपक्षे वा पुण्ये नक्षत्रे एतेषामेका
मुपसमाधाय परिसमूह्य परिस्तीर्य पर्युक्ष्य दक्षिणं जान्वा
हुतीर्जुहोति, 'वाङ्नाम देवताऽवरोधनी सा मेऽमुष्मा
तस्यै स्वाहा', 'चक्षुर्नाम देवताऽवरोधनी सा मेऽमुष्मा
तस्यै स्वाहा', 'श्रोत्रं नाम देवताऽवरोधनी सा मेऽमुष्मा
तस्यै स्वाहा', 'मनो नाम देवताऽवरोधनी सा मेऽमुष्मा
तस्यै स्वाहा,' 'प्रज्ञा नाम देवताऽवरोधनी सा मेऽमुष्मादिदमव
स्वाहा' इति । अथ धूमगन्धं प्रजिघ्राय आज्यलेपेना
वाचंयमोऽभिप्रव्रज्यार्थं ब्रूयात्, दूतं वा प्रहिणुयात्, लभते

अथातो दैवः स्मरः — यस्य प्रियो बुभूषेत्, यस्यै
यासां वा, एतेषामेवैकस्मिन् पर्वण्येतयैवाऽऽवृता एता आज्

प्राणादिदेवतोद्देश्यकहोमाद्यनुष्ठानेन रिक्तस्य धनिकधनप्राप्तिसौलभ्य
**एकधनावरोधन**मिति । एकस्य = कस्यचिदन्यस्य यत् धनम्, तस्यावरो
संग्रहः । अत्र प्रागुक्तेन वागादिना सह प्रज्ञाऽपि काचिद् देवतात्वेनोक्ता । ए
**पर्वणि** इति । उक्तानां मध्ये कस्मिंश्चित् काले इत्यर्थः **अर्थं ब्रूयात्** इति । स
स्वयं वा साक्षात् धनिकसविधे ब्रूयात् दूतं वा प्रेषयेदिति ।

प्राणादिदेवतोद्देश्यक होमबलेन परेषां स्वस्मिन् प्रीतिपूर्वकस्मरणसिद्धि
**दैवः स्मर** इति । परैः स्वस्मिन् स्वयं प्रीत्यकरणेऽपि प्राणादिदेवकल्पिता
अयं दैवः स्मरः । स्मरः कामो वा काममूलकस्मरणं वा । **आवृ**

मयि जुहोम्यसौ स्वाहा,' 'चक्षुस्ते मयि जुहोम्यसौ स्वाहा,' 'श्रोत्रं
जुहोम्यसौ स्वाहा,' 'मनस्ते मयि जुहोम्यसौ स्वाहा,' 'प्रज्ञां ते
म्यसौ स्वाहा' इति । अथ धूमगन्धं प्रजिघ्रायाज्यलेपेनाङ्गान्य-
वाचंयमोऽभिप्रव्रज्य संस्पर्शं जिगमिषेत्, अपि वाताद्वा तिष्ठेत्
ग:; प्रियो हैव भवति, स्मरन्ति हैवास्य । ॥ ४ ॥

थातः संयमनं प्रातर्दनमान्तरमग्निहोत्रमित्याचक्षते — यावद्वै
षते, न तावत् प्राणितुं शक्नोति । प्राणं तदा वाचि जुहोति ।
ष: प्राणिति, न तवद्भाषितुं शक्नोति । वाचं तदा प्राणे जुहोति ।
ते अमृते अहूती जाग्रच्च स्वपंश्च संततं जुहोति । अथ या अन्या
न्तवत्यः, ताः कर्ममय्यो हि भवन्ति । तद्ध स्मैतत् पूर्वे
ग्निहोत्रं न जुहवाञ्चक्रुः । ॥ ५ ॥

कथं ब्रह्मेति ह स्माह शुष्कभृङ्गारः । तत् ऋगित्युपासीत ।
स्मै भूतानि श्रैष्ठ्यायाभ्यर्च्यन्ते । तत् यजुरित्युपासीत ।

---

ते इति । ते इति वशीकार्यः पर उच्यते । (४)

प्राणादिपञ्चकमध्ये प्राणस्य वाचश्च परस्परस्मिन् होमभावनया अग्निहोत्रसंपत्तिः
ग्निहोत्रदेवतयोर्मध्येऽपि सूर्यस्याग्नौ रात्रौ, अग्नेः सूर्ये च दिवा प्रवेशः प्रसिद्धः ।
तर्दनमिति । प्रतर्दनाख्येन राज्ञा कृतं ध्यानमित्यर्थः । जागरकाले व्याहरमाणः प्राणं
व्याहर्तुं पारयति । यदा न व्याहरणप्रसक्तिः, तदैव प्राणो यथावदुच्छ्वासनिः—
ते तदातदा एकस्यान्यत्र हुतत्वम् । स्वापकाले वागादीनां प्राणे विलयश्च प्रसिद्धः ।
प्राहुतयं इति । बाह्यानां सायं प्रातश्च कदाचिदेव भावात्, नक्तंदिवं संततत्वा-
त्त्वं स्पष्टम् । अतिशयितफलत्वाच्चेदमान्तरमग्निहोत्रं श्रेयः । तद्धेति । बाह्याग्नि-
तेशयितत्वादित्यर्थः । ऐतरेयेनेऽपि श्रूयते एवम् । (५)

देपञ्चके प्रशस्ततया प्रसिद्धो मुख्यप्राणः शस्त्रेषु अप्रगीतमन्त्रसाध्यगुणिनिष्ठ-
षेषु प्रशस्तं यदुक्थाख्यं शस्त्रम् तद्रूपेण ऐतरेयादौ श्रुतः । अतः प्राणमेवोक्थमिति
ह्मदृष्टिः श्रैष्ठ्यादिफलिका प्रतिपाद्यते उक्थमिति । शुष्कभृङ्गार इति कश्चिदृषिः ।

सर्वाणि हास्मै भूतानि श्रैष्ठ्याय युज्यन्ते। तत् सामेत्युपासी
हास्मै भूतानि श्रैष्ठ्याय संनमन्ते। तत् श्रीरित्युपासीत
इत्युपासीत, तत् तेज इत्युपासीत। तद् यथैतत् श्रीमत्तमं
तेजस्वितममिति शस्त्रेषु भवति, एवं हैव स सर्वेषु भूते
यशस्वितमस्तेजस्वितमो भवति, य एवं वेद। तदेतदैष्टि
मात्मानमध्वर्युः संस्करोति; तस्मिन् यजुर्मयं प्रवयति; य
होता; ऋङ्मये साममयमुद्गाता। स एष त्रय्यै विद्याया आ
एवैतदिन्द्रस्यात्मा भवति य एवं वेद।॥ ६॥

अथातः सर्वजितः कौषीतकेस्त्रीण्युपासनानि भवन्ति।
कौषीतकिरुद्यन्तमादित्यमुपतिष्ठते—यज्ञोपवीतं कृत्वोदकमनी
च्योदपात्रम्, 'वर्गोसि पाप्मानं मे वृङ्ग्धि' इति। एतयैव
सन्तम्, 'उद्वर्गोऽसि पाप्मानं मे उद्वृङ्ग्धि' इति। एतयै
यन्तम्, 'संवर्गोऽसि पाप्मानं मे संवृङ्ग्धि' इति। तद्
पापमकरोत्, सं तद् वृङ्क्ते। तथो एवैवं विद्वान् एतयैवाऽऽ
मुपतिष्ठते, यदहोरात्राभ्यां पापं करोति, सं तद् वृङ्क्ते॥

---

अभ्यर्च्यन्ते, युज्यन्ते, संनमन्ते, इति विभिन्नधातुप्रयोगः ऋग्यजुस्स
मप्रदर्शनाय। तद् यथैतदिति। प्रसिद्धे हि स्तोत्रशस्त्रे सोमयागाङ्गभूते।
गुणिनिष्ठगुणाभिधानं स्तोत्रम्, अप्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानं
नैकविधेषु यथा एतत् उक्थं श्रीमत्तमत्वादिमत्, तथा अयमुपासकः सर्वे
त्वादिमान् भवतीत्यर्थः। अध्वर्योर्होतुरुद्गातुश्च क्रमात् यजुर्वेदर्ग्वेद सामवेदसंब
यजुर्मयाद्युक्तिः। प्रवयति प्रकर्षेण संतनोति। (६)

'आदित्यो ह वै बाह्यः प्राण उदयति एष ह्येनं चाक्षुषं प्राणम
प्रश्नोपनिषदुक्तरीत्या प्राणादित्यैक्यात् आदित्यविषयकमुपासनमुच्यते अथातः
आदित्योपस्थानादीनां वक्ष्यमाणानां सर्वेषामन्ततः प्राणरक्षणार्थत्वाद्वा प्राणाध्या
ध्येयम्। तत्र वर्गोद्वर्गसंवर्गमन्त्रैः क्रमेण प्रातर्मध्ये सायमादित्योपस्थानम
फलकम्। तद्विषयकं कौषीतक्यनुष्ठानं दर्शयति सर्वजिदिति। सं तद्
क्तिरिति शेषः। अतः शिष्टानुष्ठानात् सर्वैरिदमनुष्ठेयमित्याह तथेति (७)

अथ मासिमास्यमावास्यायां वृत्तायां पश्चाच्चन्द्रमसं दृश्यमानमुप-
िवाऽऽवृता हरिततृणे वा [चं] प्रत्यस्यति, 'यन्मे सुसीमं हृदयं
न्द्रमसि श्रितम्। मन्येऽहं मां तद्विद्वांसं माऽहं पुत्र्यमघं रुद'मिति।
त् पूर्वा प्रजा प्रैति । इति नु जातपुत्रस्य॥ अथाजातपुत्रस्य—
यस्व समेतु ते,' 'सं ते पयांसि समु यन्तु वाजा,' 'यमादित्या
पाययन्ती' त्येतास्तिस्र ऋचो जपित्वा, 'माऽस्माकं प्राणेन
पशुभिराप्याययिष्ठाः, योऽस्मान् द्वेष्टि, यञ्च वयं द्विष्मः, तस्य
प्रजया पशुभिराप्यायस्वे' ति। 'ऐन्द्रीमावृतमावर्ते आदित्यस्या-
ी' इति दक्षिणं बाहुमन्वावर्तते ॥ ८ ॥

---

प्यायस्वेति प्रतीकत्रयगृहीतमृक्त्रयं तावत्—आप्यायस्व समेतु ते विश्वतः सोम
भवा वाजस्य संगथे॥ सं ते पयांसि समु यन्तु वाजाः संवृष्ण्यान्यभिमातिषाहः।
नो अमृताय सोम दिवि श्रवांस्युत्तमानि धिष्व॥ यमादित्या अंशुमाप्याययन्ति यमक्षित-
पिबन्ति। तेन नो राजा वरुणो बृहस्पतिराप्याययन्तु भुवनस्य गोपाः॥ इति।

आपोमयः प्राणः' इति प्राणस्याम्मयत्वं श्रुतम्। सोमस्य च तत् प्रसिद्धम्। तथा
मेः प्राणस्याऽऽमन्त्रणश्च दृष्टम्, 'बृहन् पाण्डरवासः सोमराजन्' इति। प्राणादि-
ात् सोमस्यादित्याप्याय्यमानत्वाच्च प्राणसोमैक्यं भवितुमर्हति। अतः सोमोपासन-
तत्र जातपुत्रस्य स्वमरणात् प्राक् पुत्रामरणफलकं प्रथमम्, अजातपुत्रस्य स्वाप्यायन-
ीयम्। **पश्चा**दिति प्रतीच्यामित्यर्थः। इदञ्च शुक्लपक्षे द्वितीयायां चन्द्रकलादर्शनम्।
त्वेऽपि तादात्विककलादर्शनं स्मृत्याचारसिद्धम्। **एतयैवावृतेति**। पूर्वोक्तरीत्येत्यर्थः।
कर्यान्तरमुपस्थानाङ्गमाह **हरिततृणे** इति। उदपात्रे तृणद्वयप्रक्षसनं कृत्वा
त्यर्थः। 'हरिततृणे वाचं प्रत्यस्यती' ति पाठे तु हरिततृणे स्थितस्सन् वक्ष्यमाणमन्त्र-
मुच्चारयेदित्यर्थः। **न ह्यस्मात् पूर्वा प्रजा प्रैतीति**। एतत्प्रजा एतन्मरणात् प्राक्
इत्यर्थः। पूर्वं प्रैतीति प्रयोक्तव्ये पूर्वा प्रैतीति कर्तृविशेषणतया पूर्वादिपदप्रयोगोऽपि
। **इतिन्विं**त्यादि। जातपुत्रपुरुषकर्तृकोपस्थानप्रकारोऽयम्। अथाजातपुत्रपुरुषकर्तृक-
च्यत इत्यर्थः। **ऐन्द्रीमि**त्यादि। इन्द्रवत् आदित्यवच्च आवर्तमानोऽस्मि स्थिर

अथ पौर्णमास्यां पुरस्ताच्चन्द्रमसं दृश्यमानमुपति
'सोमो राजाऽसि विचक्षणः पञ्चमुखोऽसि । प्रजापतिर्ब्राह्मणस्त
तेन मुखेन राज्ञोऽत्सि ; तेन मुखेन मामन्नादं कुरु । राजा त
तेन मुखेन विशोऽत्सि ; तेन मुखेन मामन्नादं कुरु । श्येनस्त
तेन मुखेन पक्षिणोऽत्सि ; तेन मुखेन मामन्नादं कुरु ।
मुखम् ; तेनेमं लोकमत्सि ; तेन मुखेन मामन्नादं कुरु ।
मुखम् ; तेन मुखेन सर्वाणि भूतान्यत्सि ; तेन मुखेन मा
माऽस्माकं प्राणेन प्रजया पशुभिरपक्षेष्ठाः । योऽस्मान् द्वे
द्विष्मः, तस्य प्राणेन प्रजया पशुभिरपक्षीयस्वे 'ति । दैवं
आदित्यस्यावृतमन्वावर्त इति दक्षिणं बाहुमन्वावर्तते । ॥ ९

अथ संवेश्यन् जायायै हृदयमभिमृशेत्, 'यत् ते
श्रितमन्तः प्रजापतौ । तेनामृतत्वस्येशाने मा त्वं पुत्र्यमघं नि
न ह्यस्मात् पूर्वा प्रजा प्रैतीति । ॥ १० ॥

अथ प्रोष्याऽऽयन् पुत्रस्य मूर्धानमभिजिघ्रेत्, '
संभवसि हृदयादधिजायसे । आत्मा वै पुत्रनामासि स जीव
मिति ; नामास्य दधाति । 'अश्मा भव परशुर्भव हिरण्यम
तेजो (वेदो) वै पुत्रनामासि स जीव शरदः शत' मिति
गृह्णाति । अथैनं परिगृह्णाति, 'ये प्रजापतिः प्रजाः पर्यगृह्ण
तेन त्वा परिगृह्णाम्यसा'विति । अथास्य दक्षिणे कर्णे जपति, '
मघवन्नृजीषि' न्निति । 'इन्द्र श्रेष्ठानि द्रविणानि धेही'

---

शुक्लपक्षप्रथमदृष्टचन्द्रकलोपस्थानमुक्तम् । तत्र पूर्णिमायां पूर्णचन्द्रोपस्थानमन
अथ पौर्णमास्यामिति । पञ्चमुखोऽसीति । सोमस्य, ब्राह्मणराजश्येनाग्नि
स्वमुखश्चेति पञ्च मुखानि । (९)

एवं सर्वजितः कौषीतकेरुपासनत्रयमुक्तम् । अथ जायामरणात् प्रागपत्यामरण
अथ संवेश्यन्निति । संवेश्यन् संवेक्ष्यन् = संगंस्यमानः । (१०)

नामास्य दधातीति । 'जीव शरदः शत'मित्येतदनन्तरं पुत्रनामो
प्रोषितागतकर्तृकं पुत्रघ्राणादिकमाह अथेति । (११)

छेत्था मा व्यथिष्ठाः शतं शरद आयुषो जीवस्व पुत्र ते नाम्ना मूर्धान
जिघ्रामी' ति त्रिरस्य मूर्धानमभिजिघ्रेत् । 'गवां त्वा हिङ्कारेणाभि
रोमी' ति त्रिरस्य मूर्धानमभिहिङ्कुर्यात् ॥ ११ ॥

अथातो दैवः परिमरः — एतद्वै ब्रह्म दीप्यते यदग्निर्ज्वलति ; अथैत
यते, यन्न ज्वलति । तस्यादित्यमेव तेजो गच्छति ; वायुं प्राणः
ब्रह्म दीप्यते, यदादित्यो दृश्यते ; अथैतन्म्रियते, यन्न दृश्यते
चन्द्रमसमेव तेजो गच्छति ; वायुं प्राणः । एतद्वै ब्रह्म दीप्यते
न्द्रमा दृश्यते ; अथैतन्म्रियते, यन्न दृश्यते । तस्य विद्युतमेव तेजो
च्छति ; वायुं प्राणः । एतद्वै ब्रह्म दीप्यते, यद् विद्युद् विद्योतते
तन्म्रियते, यन्न विद्योतते । तस्या दिश एव (वायुमेव) तेजो गच्छति
प्राणः । ता वा एताः सर्वा देवता वायुमेव प्रविश्य वायौ मृत्वा
र्छन्ते ; तस्मादेव पुनरुदीरत इत्यधिदैवतम् । अथाध्यात्मम् — ॥ १२

एतद्वै ब्रह्म दीप्यते, यद्वाचा वदति । अथैतन्म्रियते, यन्न वदति
चक्षुरेव तेजो गच्छति ; प्राणं प्राणः । एतद्वै ब्रह्म दीप्यते, यच्चक्षुषा
ति । अथैतन्म्रियते, यन्न पश्यति । तस्य श्रोत्रमेव तेजो गच्छति
प्राणः । एतद्वै ब्रह्म दीप्यते, यच्छ्रोत्रेण शृणोति । अथैतन्म्रियते, य
ति । तस्य मन एव तेजो गच्छति ; प्राणं प्राणः । एतद्वै ब्र
यते, यन्मनसा ध्यायति । अथैतन्म्रियते, यन्न ध्यायति ; तस्य प्राणमे
गच्छति ; प्राणं प्राणः । ता वा एताः सर्वा देवताः प्राणमेव प्रविश
मृत्वा न मूर्च्छन्ते ; तस्मादेव पुनरुदीरते । तद् यदिह वा ए

---

आधिदैविकाध्यात्मिकप्राणविषयिणीं परिमरभावनां परितो द्वेषिमरणफलामाह अथा
इति । भृगुवल्ल्याम्, 'ब्रह्मणः परिमरः' इत्यत्राप्येवम्भूतोऽर्थः परिष्कारे द्रष्टव्यः
प्राण इति । ज्वलनाद्यभावरूपमरणात् पूर्वमग्न्यादीनां ज्वलनाद्युपयोगितया स्थितः प्रा
ानन्तरं वायौ लीन इत्यर्थः । वायुदेवता अग्न्यादौ कृतं प्राणनव्यापारं तदा त्यजतीत्यु
। उदीरते = उद्गच्छन्ति । ईर गतौ । बहुवचनम् । एवमधिदैवतमग्न्यादित्यचन्द्र
तां विलय उक्तः । वाग्वधीनत्वात् तद्व्यापारस्य । अथाध्यात्मं वाक्चक्षुश्श्रोत्रमनसां प्राणे

विद्वांसमुभौ पर्वतौ अभिप्रवर्तेयातां दक्षिणश्चोत्तरश्च तुस्तूर्षमाणौ, स्तृन्वीयाताम्। अथ य एनं द्विषन्ति, यांश्च स्वयं द्वेष्टि, परिम्रियन्ते ॥ १३ ॥

अथातो निःश्रेयसादानम् – एता ह वै देवता अहंश्रेयसे विव अस्माच्छरीरादुच्चक्रमुः। तद्धाप्राणत् शुष्कं दारुभूतं शिश्ये। अथैन प्रविवेश। तद् वाचा वदत् शिश्य एव। अथैनच्चक्षुः प्रविवेश। तद् वदत् चक्षुषा पश्यत् शिश्य एव। अथैतच्छ्रोत्रं प्रविवेश। तद्वाचा चक्षुषा पश्यच्छ्रोत्रेण शृण्वत् शिश्य एव। अथैनन्मनः प्रविवेश। तद्वाच चक्षुषा पश्यच्छ्रोत्रेण शृण्वन्मनसा ध्यायच्छिश्य एव। अथैनत् प्राणः वेश। तत् तत एव समुत्तस्थौ। ता वा एताः सर्वा देवताः प्राणे निः विदित्वा प्राणमेव प्रज्ञात्मानमभिसंभूय सहैवैतैः सर्वैरस्माच्छरीरादुत्क्रा स वायुप्रतिष्ठ (विष्ट) आकाशात्मा स्वरेति। स तद्गच्छति, यत्रैते तत् प्राप्य यदमृता देवाः तदमृतो भवति; य एवं वेद ॥ १४ ॥

---

उच्यते अथाध्यात्ममिति। वाचा वक्तुमशक्यमपि पश्यति; द्रष्टुमशक्यमपि शृणोति, श्रवणमप्यन्तश्चिन्तयतीत्याशयेन वागादितेजसां चक्षुरादिषु लयकथनम्। प्राणं प्राण तत्तदिन्द्रियप्रेरणव्यापारः प्राणकृतः तदा पृथङ् न तिष्ठतीति यावत्। (१३)

छान्दोग्यबृहदारण्यकादिप्रसिद्धः प्राणप्राधान्यवाद इहापि क्रियते। एतद्विज्ञा देववदमृतत्वम्। "सर्वाभेदान्यत्रेमे" इति सूत्रे अन्यत्रेति इदं कौषीतकिप्रक गृहीत्वा छन्दोग्यबृहदारण्यकश्रुतविद्यैक्यं विचार्य स्थापितम्। परन्तु भावप्रका शारीरकशास्त्रार्थदीपिकादौ परानुरोधेनेव वाक्यमिदं कौषीतकीदशमाध्यायगतत्वेन मस्ति। तन्नूनं कौषीतकिब्राह्मणपूर्वभागमेलनेन स्यात्। निःश्रेयसादानम् प्राणादिदे मध्ये प्राणदेवतया श्रैष्ठ्यस्वीकरणम्। उपवर्ण्यत इति शेषः। अहंश्रेयसे स्वस्येतरापेक्षयो मुद्दिश्य। तद्धाप्राणदिति। तत् शरीरं सर्वासां निष्क्रान्तत्वात् निष्प्राणं शिश्ये इति। एवेति। मुख्यप्राणस्य पुष्कलप्रवेशाभावात् वागादिप्रवेशाधीन व्याहारादिकर्तृत्वेऽपि नोत्थान नासीदित्यर्थः। न च सर्वथा मुख्यप्राणसंबन्धाभावे वागादिव्यापारा एव कथमिति शङ्क्य सर्वथा प्राणसंबन्धाभावे शवत्वप्रसङ्गात् पुष्कलतत्प्रवेशाभावस्यैवेष्टत्वात्। प्रज्ञात्मानम् स ज्ञारूपव्यापारनिर्वाहकम्; यद्वा प्रज्ञजीवरूपनिर्वाहकविशिष्टम्। एतैः सर्वैः दर्शनादिव्यापारैः आकाशात्मानः इति, धूमादिमार्गे आकाशस्य निविष्टत्वात्; अवकाशाभावे गमना दपेक्षत्वाद्वा। १४

अथातः पितापुत्रीयम्, संप्रदानमिति चाचक्षते। पिता पुत्रं
ाह्वयति । नवैस्तृणैरगारं संस्तीर्याग्निमुपसमाधायोदकुम्भं स
पनिधायाहतेन वाससा संप्रच्छन्नः पिता शेते। एत्य पुत्र उपरिष्टा
पद्यत इन्द्रियैरिन्द्रियाणि संस्पृश्य। अपिवाऽस्याभिमुखत एवासीत
ा आसीनायाभिमुखायैव संप्रदध्यात्। अथास्मै संप्रयच्छति, 'वाचं
यि दधानी' ति पिता; 'वाचं ते मयि दधे' इति पुत्रः।
मे त्वयि दधानी' ति पिता; 'प्राणं ते मयि दध' इति पुत्रः।
ं त्वयि दधानी' ति पिता; 'चक्षुस्ते मयि दध' इति पुत्रः।
मे त्वयि दधानी' ति पिता; 'श्रोत्रं ते मयि दध' इति पुत्रः।
णि मे त्वयि दधानी'ति पिता। 'कर्माणि ते मयि दध' इति पुत्रः।
ःखे मे त्वयि दधानी' ति पिता। 'सुखदुःखे ते मयि दध'
त्रः 'आनन्दं रतिं प्रजातिं मे त्वयि दधानी' ति पिता। 'आनन्दं
जातिं ते मयि दध' इति पुत्रः। 'इत्यां मे त्वयि दधानी' ति
'इत्यां ते मयि दधे' इति पुत्रः। 'मनो मे त्वयि दधानी' ति
'मनस्ते मयि दध' इति पुत्रः। 'प्रज्ञां मे त्वयि दधानी' ति
'प्रज्ञां ते मयि दध' इति पुत्रः। यद्यु वा उपाभिगदः स्यात्,
नैव ब्रूयात्—'प्राणान् मे त्वयि दधानी' ति पिता; 'प्राणांस्ते
धे' इति पुत्रः। अथ दक्षिणावृदुपनिष्क्रामति। तं पिताऽनुमन्त्रयते,
ब्रह्मवर्चसं कीर्तिस्त्वा जुषता' मिति। अथेतरः सव्यमन्वंसमभ्य-
पाणिनाऽन्तर्धाय वस्त्रान्तेन वा प्रच्छाद्य, 'स्वर्गान् लोकान्
प्नुही' ति। स यद्यगदः स्यात्, पुत्रस्यैश्वर्ये पिता वसेत्, परि

---

अथातः संप्रत्ति' रिति बृहदारण्यकोक्तं संप्रत्तिकर्म प्रस्तौति अथातः पितापुत्रीय
त्येति। पितृसमीपमागत्येत्यर्थः। उपरिष्टादभिनिष्पद्यते। शयानेन पित्रोत्तान-
दर्शनानुकूलं समीपेऽवनतस्तिष्ठतीत्यर्थः। पक्षान्तरमाह अपिवेति। उपाभिगदः स्यात्
परिव्याप्तरोगतया प्रत्येकग्रहणेन वक्तुमसमर्थः स्यात्। दक्षिणावृत् दक्षिणमावर्तमानः।
नेति यावत्। इतरः पुत्रः। अगदः स्यात् निवृत्तगदश्चेत्। पुत्रस्यैश्वर्ये पुत्राधीनः

वा व्रजेत् । यद्यु वै प्रेयात्, तथैवैनं समापयेत्, यथा समापी भवति ॥ १५ ॥

इति कौषीतकिब्राह्मणोपनिषदि द्वितीयोऽध्यायः ।

---

३

अथ तृतीयोऽध्यायः

प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम युद्धेन पौरुषेण च (१) । तं हेन्द्र उवाच, प्रतर्दन ! वरं ददानीति

---

**प्रतर्दनो—पौरुषेण च** । दिवोदासस्यापत्यं दैवोदासिः । नाम्ना युद्धसाधनबलेन शौर्येण च युक्तः इन्द्रस्य प्रियं स्थानं स्वर्गं उपगतः इत्यर्थः ।

**तं — ददानीति** स्पष्टोऽर्थः ॥ २ ॥

---

**परि वा व्रजेत्** संन्यासं वा कुर्यादित्यर्थः । अगदत्वपक्षे वक्तव्यमुक्त्वा पक्षान्तरे माह **यद्यु वा** इत्यादिना । अस्य संप्रदानस्यापि मुख्यप्राणतदधीनस्थितिप्रवृत्तिकेन्द्रियप्राणविषयकत्वादिहैतदुक्तिः ।

प्राची पर्यङ्कविद्येव प्रातर्दन्यादिवत् तथा ।
परविद्या न काऽपीह द्वितीयेऽध्याय ईक्ष्यते ॥
तथापि सूत्रभाष्यादौ ब्रह्मदृष्टिग्रहात् तथा ।
अत्र निःश्रेयसादानस्योक्तस्यानूक्तिदर्शनात् ॥
चतुरध्यायरूपेण गणनात् सकलैरिह ।
अभाषितोऽपि व्याख्याय घटितो मध्यपात्ययम् ॥

इति कौषीतक्युपनिषद्द्वितीयाध्यायपरिष्कारः

(३)

प्राणेन्द्रशरीरकपरमात्मोपासनरूपा प्रतर्दनविद्या प्रस्तूयते । अस्याः फलं चिरकालस्वर्गस्थितिपूर्वकमोक्षप्राप्तिरिति सप्तदशे वाक्ये वक्ष्यति । **युद्धेन च पौरुषेण** चकारबलात् एकरूपस्तृतीयार्थो वाच्य इति गम्यते । तत्र युद्धरूपप्रयोजनायेत्यर्थविवक्षया अन्नेन वसतीत्यत्रेव क्रियते, तदा पौरुषरूपप्रयोजनायेति **पौरुषेणे**त्यनेन विवक्षा, तदन्वयश्च न समञ्जसः । अतः सहयोगे तृतीयामेव स्वीकृत्य **युद्धेने**त्यस्य युद्धसाधनबललक्षणा स्वीकृता । तत्र देवासुरयुद्धस्य प्रसक्तत्वात् स्वस्य च पौरुषवत्त्वादयं प्रार्थितो जगामेति न दोषः । युद्धेन पुरुषकारेण च कारणेनेति अद्वैतिटीका ॥ १ ॥

होवाच प्रतर्दनः, त्वमेव [मे वरं] वृणीष्व, यं त्वं मनुष्याय तमं मन्यसे इति। (३) तं हेन्द्र उवाच, न वै वरं परस्मै वृणीते (न मवरस्मै वृणीते) (न वै परोऽपरस्मै वृणीते ?) त्वमेव वृणीष्वेति ॥ ४ ॥

'अवरो वै तर्हि किल मे' इति होवाच प्रतर्दनः ॥ ५ ॥

अथो खल्विन्द्रः सत्यादेव * नेयाय ॥ ६ ॥

सत्यं हीन्द्रः ॥ ७ ॥

* सत्यादेवते यायेति भाष्ये पा०.

---

**स — मन्यसे**। सर्वज्ञस्त्वं यं वरं मनुष्याय मे हिततमं मन्यसे, वृणीष्व; नाहमज्ञः स्वहिततमं वरं वेद्मीति ॥ ३ ॥

**तं — वृणीष्वेति**। न ह्यन्योऽन्यार्थं वरं वृणीते। अतः त्वदभिलषितं वरं मत्तो वृणीष्वेत्यर्थः ॥ ४ ॥

**अवरो — प्रतर्दनः**। यदि हि त्वयाऽपि न व्रियते, तर्हि मम हिततमस्य परिज्ञानात् वराभाव एव प्राप्त इति प्रतर्दन इन्द्रमुवाचेत्यर्थः ॥ ५ ॥

**अथो — नेयाय**। एवमुक्त इन्द्रः, ते वरं ददामीति सत्याद्वाक्यात् ॥ ६ ॥

तत्र हेतुमाह **सत्यं हीन्द्रः**। इन्द्रस्य सत्यप्रधानत्वादित्यर्थः। ततश्च वरं ति मदुक्तं वाक्यमसत्यं मा भूदित्यमन्यतेत्यर्थः।

केचित्तु—**सत्या देवतेयाय सत्यं हीन्द्र** इति पाठे, तं हेन्द्र उवाचेति वचनप्रकारमेवाह—**सत्या देवतेयाय सत्यं हीन्द्र** इति। **सत्या देवता** श्या परमात्मरूपा देवता **त्वामियाय** त्वामविष्टवती। सत्यवाक्यपरमात्मा-द्धि, 'त्वमेव वरं वृणीष्वे' ति वाक्यं सं (त्वं?) प्रयुक्तवानिति भावः। नः सत्यवाक्यत्वप्रसिद्धिं दर्शयति **सत्यं हीन्द्र** इति। **इन्द्रः** परमात्मे-इति वदन्ति ॥ ७ ॥

**स होवाच मामेव विजानीहि। एतदेवाहं मनुष्याय मन्ये, यन्मां विजानीयात्[1] ॥ ८॥ त्रिशीर्षाणं त्वाष्ट्रमहनम्।**

**[2] अरुन्मुखान् यतीन् सालावृकेभ्यः प्रायच्छम् ॥ १० ॥**

1. विजानीयाम्. 2. अवाङ्मुखान्.

---

**स होवाच—विजानीयाम्**। यदि ते हिततममुपदेष्टव्यम्, तां पासनमेव **हिततमं** मोक्षसाधनमिति मन्मतम्। अत इतरत् परित्यज्य मा त्यर्थः। अतः(त्र?) प्रसिद्धजीवभावस्येन्द्रस्य हिततमत्वलक्षणमोक्षसाधनत पासनकर्मत्वासंभवात् **मा**मिति शब्दः स्वात्मभूतं परमात्मानमभिदधाति। [ 'य आत्मनि तिष्ठन्', 'अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा' इति श्रु 'स्वस्याप्यात्मभूतः परमात्मा; अहम्बुद्धिशब्दाश्च परमात्मपर्यन्ताः' इति जानत स्वात्मभूते परमात्मनि **मा**मिति शब्दप्रयोगे नानुपपत्तिः।

ननु स्वायत्ते शब्दप्रयोगे असन्दिग्धं परमात्मवाचकमेव पदं प्रयुज्यताम न्यायलभ्यपरमात्मपर्यवसानेन मामिति शब्देनेति चेत्—स्यादेवम्, यदि परमात्म मात्रोपासनं विधित्सितं स्यात्। अपि तु स्वशरीरकतया। अतो मामिति उपपद्यते ॥ ८ ॥

तत्कनुन्यायेन स्वोपासकस्य पापाश्लेषं वक्तुं स्वस्य पापाश्लेषं द **त्रिशीर्षाणम् — अहनम्**। त्रिशिरस्कं त्वष्टृपुत्रं विश्वरूपं हतवानस्मि ॥ ९

**अरुन्मुखान् – प्रायच्छम्**। रौतीति **रुत्** वेदः। रुत् मुखे न विद्यते **अरुन्मुखाः**। वेदान्तविमुखान् यतीन् वनश्वविशेषेभ्यः खादनाय प्रायच्छम् ॥

---

**अतो मामिति निर्देश उपपद्यत** इति। मदन्तर्यामिणमिति स्पष्टनिर्देशोस्तु इ स्वात्मप्रकारकपरमात्मविशेष्यकोपासनस्य विवक्षितस्य तत्रालाभात्। न च, 'स म वेद्या'दिति वक्ष्यमाणपरमात्मोपासनैकदेशभूतं मामिति स्वात्मोपासनमात्रमेवात्रेन्द्रेणोच्य वाच्यम्—तन्मात्रोपासनस्य हिततमत्वायोगात् ॥ ८ ॥

**त्रिशीर्षाणं त्वाष्ट्रमहनमिति**। विश्वरूपो वै त्वाष्ट्रः पुरोहितो देवानामासीत् स्व ऽसुराणाम्। तस्य पुरोहितस्य ब्राह्मणस्य वधे ब्रह्महत्यया भाव्यम्। तदश्लेषो विद्याबलात्

**रौतीति**। वक्ति मानान्तरागोचरपरमार्थादिकमिति रौतीत्यस्यार्थः। **किमिति** साधूनां मारणमित्यत्र अरुन्मुखत्वादिति हेतुवर्णनमिदम्। पापप्रयोजकाकारस्तु यतित्वमेव ॥

**बह्वीः सन्धा अतिक्रम्य दिवि प्राह्लादीनतृणहम्, अन्तरिक्षे
मान्; पृथिव्यां कालकञ्जान्[1] ॥ ११ ॥**

**तस्य मे तत्र न लोम चामीयत[3] ॥ १२ ॥**

**स यो मां [4]विजानीयात्, नास्य केन च कर्मणा लोको मीयते; न
धेन, न पितृवधेन, न स्तेयेन, न भ्रूणहत्यया; नास्य पापं चक्रुषो
नीलं वेति ॥ १३ ॥**

1. कालकाश्यान् 2. न लोमचनामीयत 3. पापञ्चनचक्रुषोमुखं नीलं वेत्तीति ।

---

**बह्वीः—अतृणहम्** = न हनिष्यामिति कृता बह्वीः प्रतिज्ञा अतिक्रम्य
वर्तमानान् प्रह्लादपुत्रान् अतृणहम्। 'तृण (तृदिर्?) हिंसाया' मिति हि
। अन्तरिक्षे **पौलोमान्** पुलोमसुतान्, पृथिव्यां कालकञ्जाख्यासुरांश्च
तवानस्मि ॥ ११ ॥

**तस्य—अमीयत** । एवं हिंसितवतो मे लोमापि नाहिंस्यत; ब्रह्मविद्या
ादित्यर्थः ॥ १२ ॥

**स यो मां — नीलं वेति** । य एतादृशमदात्मानं परमात्मानमुपास्ते, त
पि कर्मणा मातृवधपितृवधस्तेयभ्रूणहत्यादिलक्षणेन परलोकप्राप्तिर्न विरुद्ध्यते
ापं कृतवतोऽपि, 'मया ईदृशं पापं कृत' मिति निर्वेदजनितमुखवैवर्ण्यम
त्यर्थः । **चक्रुष** इति तु कसन्तात् षष्ठी ॥ १३ ॥

---

**स यो मा**मिति वाक्यं त्वाष्ट्रहननादिकर्तृत्व समानाधिकरण—पापाश्लिष्टत्वशालीन्द्रशरीर
त्मोपासनपरम्। ननु **न मातृवधेने**त्याद्युक्तमघं किं विद्यापूर्वभावि, उतोत्तरभावि । नाद्य
ानन्तपापप्रणाशकत्वाद् विद्यायाः कतिपयपापमात्रनिर्देशेऽनौचित्यात्। उत्तराघविषयत्व
स्वारस्याच्च । नान्त्यः; प्रामादिकमात्रोत्तराघाश्लेषस्यैव श्रीभाष्ये भाषितत्वेन तद्विरोधादि
+ अत्र भाष्ये पापाश्लेषपदप्रयोगेणोत्तराघविषयत्वस्य सूचितत्वात् । परविद्यायाः प्रामादि
श्लेषहेतुत्वमुत्सर्गः । क्वचित्तु वचनबलात् बुद्धिपूर्वपापाश्लेषकरत्वमपि । यथा पञ्चाग्निवि
य पातकिसंसर्गस्य दोषानापादकत्वं (५. १०.) **छान्दोग्ये**, 'य एतानेवं पञ्चाग्नीन् वे
ह तैरप्याचरन् पाप्मना लिप्यते' इति—तथेह मातृवधादिसर्वदोषाश्लेषोऽपीति ॥ १३

**स होवाच, 'प्राणोऽस्मि प्रज्ञात्मा; तं मामायुरमृतमित्युपास्स्**
**आयुः प्राणः । प्राणो वा आयुः; प्राण उवा [1] अमृतम् ।**
**स्मिन् शरीरे प्राणो वसति, तावदायुः । प्राणेन ह्येवामुष्मिन् ल**
**तत्वमाप्नोति ॥ १५ ॥**

1. वा चामृतम् ।

---

एवं चेतनविशेषरूपस्वविशिष्टपरमात्मोपासनमुक्त्वा अचेतनविशेष
विशिष्टोपासनमाह **स होवाच — उपास्स्व** । प्रज्ञारूप आत्मा **प्रज्ञात्मा**
जीवशरीरक इत्यर्थः । जीवशरीरकोऽहम् । **प्राणोऽस्मि** प्राणशरीरकोऽ
तादृशं प्राणशरीरकं माम् आयुरमृतमित्युपास्स्व ॥ १४ ॥

कथं प्राणशरीरकस्यायुष्ट्वामृतत्वे इत्याशङ्क्याह **आयुः — आ**
शरीरे प्राणस्थितेरुच्छ्वासादिलक्षणायुस्साधनत्वादायुः प्राणः । लोकान्तरे चिरस्
रूपामृतत्वप्राप्तेः प्राणाधीनोपायानुष्ठानसाध्यत्वात् प्राणस्यामृतत्वम् । अत
ष्ट्वामृतत्वे प्राणस्योपपद्येते । तद्द्वारा परमात्मनश्चोपपत्तेः आयुष्ट्वामृतत्वाभ्यां प्राणश
ब्रह्मण उपासनमुपपद्यते । यद्वा व्यासार्योक्तरीत्या **तं मामायुरिति** वाक्ये
जीवविशिष्टतोच्यते । **आयुरिति** प्राणविशिष्टता । 'आयुः प्राण' इति ह्यन
श्रवणात् । **आयुरमृतमिति** स्वेन रूपेणावस्थितिः । [अतः] एवञ्च अस्मिन्नेव
स्वेन रूपेण, चिदचिद्विशिष्टतया च त्रिविधोपासनं विधीयते । अतो नोपास
विधिकृतवाक्यभेद इति द्रष्टव्यम् ॥ १५ ॥

---

आयुष्ट्वामृतत्वयोः प्राणद्वारैवोपास्ये समन्वयस्यात्र स्पष्टमवगमात् तथैव व्याख्याय व
र्णितमप्याह यद्वेति । अस्मिन् पक्षे, 'प्राणेन ह्यमुष्मिन् लोके ऽमृतत्वमाप्नोती' ति व
**अमृतमित्युपास्स्वे**त्युक्तामृतत्वोपपादनपरं नेष्टम् । किंतु **आयुः प्राण** इत्युक्तायुष्ट्वोपपाद
थैव प्राणे आयुष्ट्वामृतत्वयोः कथनपरं ग्राह्यम् । मुख्यप्राणस्य स्वपरिकरभूतेन्द्रियैः सह ऐश्
हिकामुष्मिकसर्वपुरुषार्थप्रतिलम्भनायामुत्राप्यनुवर्तमानत्वात् प्राणेनामृतत्वमाप्नोतीत्युच्यते ।
ाणस्यानुवृत्तेः जीवस्यैव तत्र भोग्यभोक्तृरूपेण स्थितेः **प्रज्ञात्मे**त्युक्तप्रज्ञारूपजीव
ज्ञया सत्यं संकल्पमेतीत्युक्तम् । **वाक्यभेद** इति । 'मामेव विजानीही
चिद्विशिष्टोपासनविधिः; इह प्राणविशिष्टोपासनविधिरिति उपासनानां पृथक्पृथग्विधिनेत्यर्थः

प्रज्ञया सत्यं [1]संकल्पमेति ॥ १६ ॥

स यो मामायुरमृतमित्युपास्ते सर्वमायुरस्मिन् लोक [2]एति। ग्मृतत्त्वमक्षितिं स्वर्गे लोके ॥ १७ ॥

तद्धैक आहुः एकभूयं वै प्राणा गच्छन्तीति ॥ १८ ॥

. सत्यसंकल्पम्. 2. एवाप्नोति.

प्रज्ञात्मत्वविशिष्टोपासनस्य फलमाह **प्रज्ञया — एति**। अपहतपाप्मत्वादि-वैशिष्ट [त्व ?] लक्षणं ब्र (ब्रा ?) ह्मरूपमित्यर्थः ॥ १६ ॥

आयुरमृतत्वगुणविशिष्टप्राणोपासनस्य फलमाह — **स यो — लोके**। **अक्षितिं** ।वस्थायित्वम्। ततश्च मधुविद्यायाः वस्वादिपदप्राप्तिपूर्वकब्रह्मप्राप्तिवत् अस्या अपि ारायुष्ट्वपूर्वकचिरकालस्वर्गप्राप्तिपूर्वकब्रह्मप्राप्तिः फलमित्युक्तं भवति ॥ १७ ॥

उपास्यमानस्य प्राणस्य प्राणान्तरापेक्षया श्रैष्ठ्यं वक्तुं पूर्वपक्षमाह **तद्धैके —** 'ति। मुख्यप्राणश्चेतराणि चेन्द्रियाणि एकैकस्मिन् कार्ये कर्तव्ये परस्परसाह्य-भावं यान्ति। अतो मुख्यप्राणस्य प्राणान्तरसाम्यमेवेति केचिदाहुरित्यर्थः ॥ १८

---

पन् सर्वेन्द्रियकार्यादर्शनात् पृथक्पृथगिन्द्रियाणां स्वस्वकार्ये असामर्थ्यावधारणात् । कार्ये क्रियमाणे अन्येन्द्रियाणि तत्र सहकारीणि भवन्ति, न पृथक् कार्ये क्षमन्त कार्यस्य सर्वाधीनत्वात् प्राणानां समबलत्वमेवेति केषाञ्चित् पक्षं स्वयमिन्द्र उपवर्ण्य, देति तदिन्द्र ऊरीकृत्यैवोपरि मुख्यप्राणस्य प्राबल्यं प्रकारान्तरेणाचष्ट। सोऽयमूरी-हेन्द्रियकार्यकाले इन्द्रियान्तरकार्याभावमात्रे, उत तत्तदिन्द्रियस्य स्वकार्ये अन्येन्द्रिय-ऽपीति विमृश्यमेतत्। व्यर्थं तावत् चक्षुरादिकं प्रति श्रोत्रादीनां सहकारित्वकल्पनम्। न्द्रियसहकारित्वात्, चक्षुःकार्यकाले मनः तस्यैव सहकारि भवतीति मनोरूपसहकारि-ोत्रादिकं स्वकार्ये असमर्थमिति सर्वदर्शनसरण्यैवोपपत्तेः। वक्ष्यते चेहापि, 'प्रज्ञया ा,' 'न हि प्रज्ञापेता वाङ् नाम किञ्चन प्रज्ञापयेत्' इत्येवं मनसः सहकारित्वम्। प्राणस्य कार्ये इन्द्रियरूपप्राणानां सहकारित्वमसंभवि; तत्कार्योच्छ्वासनिश्वासादिना ाव चक्षुरादिकार्यदर्शनेन तत्कार्ये एतदुपक्षयाभावात्। एवं चक्षुराद्यभावे प्राणन-ास्य वक्ष्यमाणत्वात् मुख्यप्राणव्यापारः प्राणान्तरनिरपेक्ष एव। एवं बधिरादेरपि ीक्षतेः श्रोत्रादेः चक्षुरादेसहकारित्वं दुर्वचमेव। अतः, 'चक्षुः पश्यत् सर्वं श्यन्ती' त्यादिवाक्यस्य नेन्द्रियान्तरसहकारित्वे तात्पर्यम्। किंतु एककार्यकाले ृतत्वमात्रे। सर्वथा मुख्यप्राणस्येतरसाम्यमितो न सिद्ध्यति चेति। अत एव ात्यवतारिकायां भाषितम्। अतो नैष केषाञ्चित् [illegible] ॥ १८ ॥

न हि कश्चन शक्नुयात् सकृद्वाचा नाम प्रज्ञापयितुम्, रूपम्, श्रोत्रेण [श्रोतु] शब्दम्, मनसा ध्यान (तु) मिति ॥ १९

एकभूयं वै प्राणा [भूत्वा] एकैकं सर्वाण्ये[ है प्रज्ञापयन्ति ॥ २० ॥

वाचं वदन्तीं (तीं) सर्वे प्राणा अनुवदन्ति ॥ २१ ॥

चक्षुः पश्यत् सर्वे प्राणा अनुपश्यन्ति । श्रोत्रं शृण्वत् सर्वे अनुशृण्वन्ति । मनो ध्यायत् सर्वे प्राणा अनुध्यायन्ति । प्राणं सर्वे प्राणा अनुप्राणन्तीति । एवमुहै [वै] तदिति हेन्द्र उवाच ॥ २२

अस्ति त्वेव[1] प्राणानां निश्रेयसम्[2] ॥ २३ ॥

जीवति वागपेतः; मूकान् हि[3] पश्यामः ॥ २४ ॥

1. अस्तित्वे च शां.　2. निःश्रेयसादानम्　3. हि पश्याम इत्येतस्था 'विपश्याम' इति ।

---

तत्रोपपत्तिरुच्यते **न हि—ध्यातुमिति** । न हीन्द्रियजातं युगपत् कार्यं जनयितुमीष्ट इत्यर्थः ॥ १९ ॥

फलितमाह **एकभूयं—प्रज्ञापयन्ति** । तस्मात् सर्वे प्राणा एक एकैकं [भूत्वा ?] सर्वाण्येतानि नामरूपशब्दादीनि प्रज्ञापयन्ति ॥ २० ॥

तदेव प्रपञ्चयति **वाचं—अनुवदन्ति** । सहायतया तिष्ठन्तीत्यर्थः मुत्तरत्रापि ॥ २१ + २२)

अथापि मुख्यप्राणस्य विशेषं दर्शयति **अस्ति त्वेव—** । प्राणानां मुख्यप्राणस्य श्रैष्ठ्यमस्तीत्यर्थः ॥ २३ ॥

तदेव प्रपञ्चयति **जीवति—** । वागिन्द्रियराहित्येऽपि शरीरधारण मूकानां दर्शनात् । एवमुत्तरत्रापि द्रष्टव्यम् ॥ २४ ॥

---

एतद्विद्यान्ते, 'स म आत्मेति विद्यात्' इति अस्मच्छब्दप्रयोगात् कृत्स्नाऽपि इन्द्रोक्तिरूपैवेति स्पष्टम् । एवञ्च सति इह मध्ये इति हेन्द्र उवाचेति श्रुतिः मुख्यप्राणश्रैष्ठ्यं वक्ष्यन् इन्द्रोऽपीदं साम्यमीषदङ्गीचकार हेत्वाश्चर्यप्रकटनाय । (२२)

जीवति चक्षुरपेतः; अन्धान् हि पश्यामः। जीवति श्रोत्रापेतः
ान् हि पश्यामः। जीवति बहुच्छिन्नः, जीवति उरश्छिन्नः इ
हि पश्यामः ॥ २५ ॥

अथ खलु प्राण एव प्रज्ञात्मेदं शरीरं परिगृह्योत्थापयति ॥ २६

तस्मादेतदेवोक्थ (त्थ) मुपासीत ॥ २७ ॥

यो वै प्राणः सा प्रज्ञा। या वै प्रज्ञा, स प्राणः। सह ह्येतावस्मि
े वसतः; सहोत्क्रामतः ॥ २८ ॥

---

जीवति बाहुच्छिन्नो जीवत्युरश्छिन्न इत्येवं हि पश्यामः
रस्को जीवति, छिन्नबाहुर्जीवतीत्येवं ह्यनुभूयते ॥ २५ ॥

**अथ खलु—उत्थापयति।** अथखलुशब्दः प्रसिद्धौ। मुख्यप्राण ए
ा। प्रज्ञाशब्दोऽत्र जीवपरः। स आत्मा सहायो यस्य स प्रज्ञात्मा
सहायको मुख्यप्राण एव मृतप्रायं शयानं शरीरं परितो गृहीत्वा उत्थापयति ॥ २६

**तस्मात् — उपासीत।** तस्मादितरेन्द्रियाणि परित्यज्य मुख्यप्राणमेवं
यितृत्वगुणविशिष्टमुपासीत ॥ २७ ॥

**यो वै—सहोत्क्रामतः।** अत्रापि प्रज्ञाशब्देन जीव उच्यते। जीवप्राण
न् शरीरे सह वसतः; सहोत्क्रामतः। ततो हेतोः जीव एव प्राणः; प्राण
:; उभावप्येककार्यकरावित्यर्थः। अतः परमात्मनः प्राणशरीरकत्वेन जी
कत्वेन चानुसन्धानं युक्तमिति भावः ॥ २८ ॥

---

**अथ खल्वि**त्यादि। एवं वागाद्यभावकालेऽपि शरीरस्य सम्यक् व्यापृतत्वदर्शनात् प्रा
प्रसक्तिकाले शरीरपातस्यैव दर्शनाच्च प्राण एव शरीरं परिगृह्योत्थापयति। तां
न्तरेष्वपि प्रसिद्धं वागादिभिरभ्युपेतश्चेति **खलु**शब्देन सूच्यते। नन्विन्द्रियान्तराभाव
ाणाभावकाले जीवसत्तामात्रेण शरीरस्य व्यापृतत्वसंभवात् प्राणोऽपि न प्रधानमि
ुन्मेषाय प्राणजीवयोः पृथग्भावाभावं वक्तुं प्राणस्य प्रज्ञात्माभेदारोपणम्। (२६)

एतद्विवरणमेव **यो वै प्राण** इत्यादिना। यादृशः प्राणः, तादृशो जीव इति परमा
विव्रियते **सह ह्येतावि**ति। जीवस्य वासवत्त्वे प्राणोऽपि वासवान्। एकस्योत्क्रमवत्त्वेऽ
क्रमवान्। अतः प्राणमात्राभावकालो दुर्वच इति भावः। न केवलमेतत्, प्राणजीवयोरुभयो
येन्द्रियैकीभावास्पदत्वस्याविशिष्टत्वादपि साम्यमिति। (२८)

तस्यैषैव दृष्टिः एतद्विजानाति (एतद्विज्ञानम्) ॥ २९ ॥

यत्रैतत्पुरुषः सुप्तः स्वप्नं न कथ[1]ञ्चन पश्यति अथास्मिन् प्राण

1. कञ्चन.

---

**तस्यैषैव—विजानाति ।** **तस्य** मुख्यप्राणस्य ज्ञातृरूप आत्मा दर्शनसाधनम् । जडस्य प्राणस्य ज्ञातृरूपजीवसाहित्यादेवोत्थापनादिकार्यकरत्व भावः ॥ २९ ॥

**यत्र—भवति । यत्र** यदा **एतत्पुरुषः** एष पुरुषः सुप्तस्सन् न स्वप्नं पश्यति, **अथ** तदेत्यर्थः—**अस्मिन् प्राणे** प्राणशरीरके परमात्मनि

---

एवं प्रधानजीवाभिन्नतया निरीक्ष्ये प्राणे कथं नोत्कर्ष इति व्युत्पादयितुम् **तस्यैषैव** रित्याद्यारम्भः । **एतद्विजानाती**त्यस्य, यदेतत् जीवतत्त्वं विज्ञानकर्तृ एतदेव तस्य दृष्टिः द ाधकमित्यर्थोऽभिमतः । अत्र वागाद्यप्ययकालेऽपि प्राणस्यानप्ययेन स्थितिविषये इदं वक्ष्य कं निदर्शनमिति **तस्यैषैव दृष्टि**रिति वाक्येनोच्यते । तदेव पुनर्विव्रियते **एतद् विज्ञ** ाति । **विजानाती**त्येतत्स्थाने **विज्ञान**मिति पाठस्यैव संप्रति दर्शनात् । निदर्शनमि ज्ञानमिति पदप्रयोगस्य न्यायभाष्यादौ दृष्टत्वात् दृष्टिरित्यस्य विज्ञानमिति पर्यायान्त वरणम् । प्राणस्यानप्ययेन स्थितिविषये मूर्छारूपनिदर्शनान्तरं वक्तुं पुनः, **तस्यैषैव सिद्धि** **द्विज्ञान**मिति वाक्यारम्भः । तदुपरि **तस्यैषैव दृष्टि**रिति वाक्यं तु कोशान्तरेषु नोपलभ्य ष्येऽपि तत्पाठस्थितौ न किञ्चद् गमकम् । पूर्णमूलखण्डग्रहणपूर्वं प्रकाशिकायां क्रियमाणाय दृशात् तालकेशात् मूलभागं पृथक्कृत्य व्याख्याभागमात्रं प्रतीकेनापि रहितं पृथङ्निर्द यद्भिः **तस्यैषैव दृष्टि**रित्यंशस्य मूलत्वकल्पनेन अयथायथं मुद्रणं कृतम् । भाष्ये तु **तस्यै** **द्धिरेतद्विज्ञान**मिति मूलवाक्यं व्याख्याय तदिदं पूर्वोक्तस्य **तस्यैषैव दृष्टिरेतद्वि** **ती**ति वाक्यस्य पुनर्वचनपरमिति बोधयितुं प्रवृत्तमिति । सुषुप्तौ मुख्यप्राणमात्रस्योच्छ्वा ासरूपेणावस्थितेः प्रत्यक्षत्वात् मूर्छायामपि सूक्ष्मरूपेण तत्स्थितेरौष्ण्यादिना गृह्यमाणत्व योर्निदर्शनत्वम् । सुषुप्ताविव मूर्छायां प्राणस्य विस्पष्टदर्शनाभावादाक्षेपतः सिद्धिमाभिप्रेत्य दृ नुक्त्वा **सिद्धि**रित्युक्तिः । एतद्रीत्या उत्क्रान्तिकाले मुख्यप्राणे इतरप्राणाप्ययस्य शास्त्रै वात् तत्र (४१) तस्यैषैव दृष्टिरित्याद्यनुक्तिः । एवमर्थवर्णनसंभवेऽपि **विजानाती** नवलम्ब्य भाष्येऽन्यथार्थवर्णनमिति ध्येयम् । **एतद्विजानाती**तिपाठेऽपि, 'तस्यैषा दृष्टिः य स्मिन् शरीरे संस्पर्शेनोष्णिमानं विजानाती'ति (३.१३.) छान्दोग्यवाक्य इवोक्तरीत्याऽर्थवर्ण न्, एतद्विजानातीत्यस्य अनन्तरवाक्यवक्ष्यमाणं विजानातीति यत्, एषैव तस्य दृष्टिरि त्यासंभवात् ।

। ३० ॥

वाक् सर्वैर्नामभिः सहाप्येति ॥ ३१ ॥

सर्वै रूपैः सहाप्येति ॥ ३२ ॥

सर्वैः शब्दैः सहाप्येति । मनः सर्वैर्ध्यानैः सहाप्येति ॥ ३३ ॥

ा प्रतिबुध्यते – यथाऽग्नेः [ज्वलतो] विस्फुलिङ्गा विप्रति-
तस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते; प्राणेभ्यो देवाः;
ः ॥ ३४ ॥

---

धा भवति । एकधाभावप्रकारश्चोत्तराध्याये वक्ष्यते ॥ ३० ॥

— सहाप्येति । परमात्मनैकीभूते जीवे स्वकार्येण नामाभिलपनेन
लीनं भवतीत्यर्थः ॥ ३१ ॥

—अप्येति । अत्र रूपशब्दो रूपज्ञानौपयिकव्यापारपरः । एव-
म् ॥ ३२ ॥

—अप्येति ॥ ध्यानैः ध्यानौपयिकव्यापारैरित्यर्थः । शिष्ट
॥

— लोकाः । प्राणाः जीवाः ; देवाः इन्द्रियाणि; लोकाः
॥

---

े । व्याख्यास्यत इत्यर्थः । (३०)

वा इति । 'देवाः श्रद्धां जुह्वति' त्यादौ देवशब्दस्येन्द्रियेषु प्रयोगप्रसिद्धेः,
। इति इन्द्रियग्रहणायोगात्, अग्निविस्फुलिङ्गसादृश्यस्य परमात्मजीवात्मनोः
त्यनेनोक्तौ सामञ्जस्यात्, भूमविद्यायाम्, 'आत्मतः प्राण आत्मत आशे' ति
दर्शनाच्चैवमर्थो वर्णितः। अन्यथा तु प्राणपदेनेन्द्रियग्रहणम्, देवपदेन
तत्कार्यग्रहणं वा, लोकपदेन इन्द्रियकार्यग्रहणं विषयग्रहणं वेति वक्तव्यम्।
ाशिकायाम्। एकपुरुषप्रतिबोधवर्णनार्थे वाक्ये बहुजीवविप्रतिष्ठानवर्णनं न
अस्तु कोऽप्यर्थः । किमनेन मुख्यप्रमेयबाधनप्रसङ्गरहितेन ॥ ३५ ॥

**तस्यैषैव सिद्धिः ॥ ३५ ॥ एतद्विज्ञानम् ॥ ३६ ॥**

**[ तस्यैषैव दृष्टिः ॥ ] (?)**

**यत्रैतत्पुरुष आर्तो मरिष्यन् आबल्यं न्येति (त्य) मोह तदाहुः उदक्रमीच्चित्तम्; न शृणोति; न पश्यति, न वाचा अथास्मिन् प्राण एवैकधा भवति ॥ ३७ ॥**

**तदैनं वाक् सर्वैर्नामभिः सहाप्येति ॥ ३८ ॥ चक्षुः स सहाप्येति, श्रोत्रं सर्वैः शब्दैः सहाप्येति, मनः सर्वैर्ध्यानैः सहाप्येति**

**स यदा प्रतिबुध्यते ॥ ३९ ॥**

---

**तस्यैषैव सिद्धिः तस्य** एवम्भूतस्य मुख्यप्राणस्य **सिद्धिः** कार्य **एतद्विज्ञानम् एतस्य** जीवस्य यत् विज्ञानम्, तदेव साधकम्। विज्ञानलक्षणमेतदात्मत्वं (त्मतत्त्वं ?) साधकमित्यर्थः। प्राणजीवौ एकतामापन्नौ कार्यसाधकाविति यावत्। **तस्यैषैव दृष्टिः एतद्विजानाती**त्युक्त एवार्थो वाक्येन दार्ढ्यायोक्तः ॥ ३६ ॥

सुप्तौ मुख्यप्राणस्येतरप्राणाप्ययोद्गमनापादानहेतुत्वमुक्त्वा मूर्च्छ तदाह यत्रैतत्— **एकधा भवति**। यदा एष पुरुषः व्याध्यादिना मरिष्यन् **आबल्यम्** — अबलस्य भाव आबल्यम् बलराहित्यं **न्येति** नि गच्छति। **मोहं** मूर्च्छां **न्येति** प्राप्नोति, तदा समीपवर्तिन आहुः, **चि क्रमीत्**। मनः निलीनमित्यर्थः। तत्र हेतुः **न शृणोति न पश्यति** न वदतीति। **अथ** तदा **अस्मिन् प्राणे** प्राणशरीरके परमात्मनि प्रयातीत्यर्थः ॥ ३७+३८ ॥

**स यदा प्रतिबुध्यते**। आयुश्शेषौषधवशादित्यर्थः ॥ ३९ ॥

---

इत्युक्त एवार्थ इति। इति पूर्ववाक्याभ्यामुक्त एवार्थ इत्यर्थः। एकोनत्रिंशवा द्रष्टव्यम्। (३६)

यथाऽग्नेः (ज्वलतो) विस्फुलिङ्गा विप्रतिष्ठेरन्, एवमेवैतस्म
मनः प्राणाः यथायतनं विप्रतिष्ठन्ते, प्राणेभ्यो देवाः, देवेभ्
काः ॥ ४० ॥

स यदाऽस्माच्छरीरादुत्क्रामति —
वागस्मात् सर्वाणि नामान्यभिविसृजते ॥ ४१ ॥
वाचा सर्वाणि नामान्याप्नोति ॥ ४२ ॥
[ स प्राणो वाचा सर्वाणि नामान्याप्नोति ] (?)
[1]प्राणोऽस्मात् सर्वान् गन्धानभिविसृजते । प्राणेन सर्व
धानाप्नोति ॥ ४३ ॥

1. घ्राणशब्दस्थाने सर्वत्र प्राणशब्दः ।

---

उत्क्रान्तावपि मुख्यप्राणस्य सर्वोपजीव्यतामाह यथाग्नेः–लोकाः ॥ ४०

स यदा--अभिविसृजते । स प्राणः यदाऽस्माच्छरीरादुत्क्रामति,
गेन्द्रियमेतच्छरीरप्रयुक्तनामाद्यभिलपनं त्यजति ॥ ४१ ॥

वाचा सर्वाणि नामान्याप्नोति । यत्र प्राणः स्वयं तिष्ठति, तत्रैव
ोपकरणभूतवागिन्द्रियेण सर्वनामाभिलपनरूपं व्यवहारं करोति । एवमुत्तर
ष्टव्यम् ॥ ४२ ॥

घ्राणोऽस्मात् — । घ्राणेन सर्वान् गन्धानाप्नोति । घ्राणजन्यज्ञ
र्वान् गन्धान् विषयीकरोतीत्यर्थः ॥ ४३ ॥

---

वागस्मादिति । पूर्वम् अस्माच्छरीरादिति शरीरस्यैव अस्मादित्युक्त्या इदमप्य
त्रदं तत्परमिलभिसंधाय एतच्छरीरप्रयुक्तेत्युक्तम् । अन्यथा प्राणोऽपि तदर्थः
ाभिविसृजते अभितस्त्यजति ; न स्वव्यापारे क्षमत इत्यर्थः (४१)

चक्षुरस्मात् सर्वाणि रूपाण्यभिविसृजते। चक्षुषा सर्वाणि र
प्नोति। श्रोत्रमस्मात् सर्वान् शब्दानभिविसृजते। श्रोत्रेण सर्वान् श
प्नोति। मनोऽस्मात् सर्वाणि ध्याना (ता)न्यभिविसृजते। मनसा
ध्याना (ता) न्याप्नोति।

सैषा प्राणेन सर्वाप्तिः ॥ ४४ ॥

यो वै प्राणः सा प्रज्ञा। या वै प्रज्ञा स प्राणः। सह ह्येत
शरीरे वसतः; सहोत्क्रामतः ॥ ४५ ॥

[1]अथ खलु यथा प्रज्ञायां सर्वाणि भूतान्येकीभवन्ति, तद् व्य
स्यामः —

वागेवास्या एकमङ्गमुदूढम्, तस्या (स्यै) नाम [2]पुरस्तात्(?)
विहिता भूतमात्रा ॥ ४६ ॥

1. अथ यथाऽस्यै प्रज्ञायै. शां. 2. पुरस्तादित्यत्र सर्वत्र 'परस्तात्' इति पा

चक्षुः—आप्नोति। सैषा प्राणेन सर्वाप्तिः। सर्वेषां विषयाणां प्रा
नेन्द्रियजन्यज्ञानविषयत्वलक्षणा प्राणकर्तृकसर्वाप्तिरित्यर्थः ॥ ४४ ॥

यो वै—उत्क्रामतः। उक्तोऽर्थः ॥ ४५ ॥

प्राणस्य सर्वभूताश्रयत्वमुक्त्वा प्रज्ञाशब्दितस्य जीवस्य सर्वभूताश्रयत्व
ध्यत इत्याह अथ खलु—व्याख्यास्यामः।

वागेव—उदूढम्। अस्याः प्रज्ञायाः वागिन्द्रियमेकमङ्गम् उदूढं परिग
मित्यर्थः। उद्वाहकर्मभूतपत्नीवत् परिगृहीतमित्यर्थः; वस्तुतस्तस्याङ्गाभाव
स्या नाम—भूतमाला। तस्याः वाचः पुरस्तात् ग्राह्यत्वेन विषयत्वेन प्र

एवं मुख्यप्राणे सत्येव सर्वेषां कार्यक्षमत्वात् मुख्यप्राणेनैव सर्वमाप्यत इति प्राणप्राध
पसंहारः सैषा प्राणेन सर्वाप्तिरिति। (४४)

प्राण एव प्रज्ञात्मेति प्राणजीवाभेदनिर्देशस्य सादृश्यनिबन्धनत्वं दर्शयता प्रा
कीभावास्पदत्वमेतावतोपपाद्य प्रज्ञाशब्दवाच्ये जीवेऽपि तदुपपादयितुं यो वै प्राण
वाक्यपुनःपाठः। (४५) अथोपपादनम् अथ खल्वित्यादिना।

उदूढमिति। प्रज्ञाया उदूढानि यानि, तत्र वाक्एकमङ्गमित्यर्थः। परस्तादिति स
तः पाठः; न तु पुरस्तादिति। ग्राह्यग्राहकयोरैक्यभ्रान्त्यपोहनाय परस्तादित्युक्ति

घ्राणमेवास्या एकमङ्गमुदूढम्, तस्य गन्धः पुरस्तात् प्रतिविहि
माला । चक्षुरेवास्या एकमङ्गमुदूढम्, तस्य रूपं पुरस्तात् प्रतिविहि
माला । श्रोत्रमेवास्या एकमङ्गमुदूढम्, तस्य शब्दः पुरस्तात् प्रति
ता भूतमाला । जिह्वैवास्या एकमङ्गमुदूढम्, तस्यान्नरसः पुरस्ता
वेहिता भूतमाला । हस्तावेवास्या एकमङ्गमुदूढम्, तयोः कर्माणि (र्म
ात् प्रतिविहिता भूतमाला । शरीरमेवास्या एकमङ्गमुदूढम्, तस्
दुःखे पुरस्तात् प्रतिविहिता भूतमाला । उपस्थ एवास्या एकमङ्गमुदूढम्
ानन्दो रतिः प्रजातिः पुरस्तात् प्रतिविहिता भूतमाला ॥ ४७ ॥

पादावेवास्या एकमङ्गमुदूढम्, तयोरित्याः (त्या) पुरस्तात् प्रति-
ा भूतमाला ॥ ४८ ॥

प्रज्ञैवास्या एकमङ्गमुदूढम्, तस्यै धियो विज्ञातव्यं कामाः पुरस्तात्
ाहिता भूतमाला ॥ ४९ ॥

---

ा प्रतिद्वंद्वितया प्रतिनियततया विहिता भूतमाला नाम । एवमुत्तरत्रापि
॥ ४६ ॥

**प्रजातिः** प्रजननमित्यर्थः ॥ ४७ ॥ **इत्याः** गमनानीत्यर्थः ॥ ४८ ॥

**प्रज्ञैवास्याः — भूतमात्रा** । अथ (अत ?) प्रथमान्तः **प्रज्ञाशब्दः**
। **अस्या** इति तु प्रज्ञारूपजीवपरः । उत्तरत्र, 'नेत्यां विजिज्ञासीत नेतारं
' इत्यनन्तरम्, 'न मनो विजिज्ञासीते' ति मनश्शब्दप्रयोगात् स्थान-
प्रज्ञाशब्दस्य मन एवार्थः । **धियो विज्ञातव्यम्** मनोजन्यज्ञानविषय-
?) त्यर्थः । **कामाः** काम्यमाना इत्यर्थः ॥ ४९ ॥

---

प्रतिद्वन्द्वितयेत्यन्तम् । उदूढमित्येतत्स्थाने अदूदुहदित्येव श्रुतप्रकाशिकापाठोऽपि ।
[ अपूरयदिति अद्वैतिव्याख्या शाङ्करसूत्रभाष्ये । वाक् प्रज्ञाया एकांशभूतमिति
। एवमग्रेऽपि । (४६)

**प्रज्ञया वाचं समारुह्य वाचा सर्वाणि नामान्याप्नोति ॥ ५०**

**प्रज्ञया घ्राणं (प्राणं) समारुह्य घ्राणेन (प्राणेन) गन्धानाप्नोति ॥ ५१ ॥**

**प्रज्ञया चक्षुः समारुह्य चक्षुषा सर्वाणि रूपाण्याप्नोति ॥ ५**

**प्रज्ञया श्रोत्रं समारुह्य श्रोत्रेण सर्वान् शब्दानाप्नोति । प्रज्ञय समारुह्य सर्वानन्नरसानाप्नोति । प्रज्ञया हस्तौ समारुह्य हस्ताभ्यां कर्माण्याप्नोति । प्रज्ञया शरीरं समारुह्य उपस्थेनानन्दं रतिं प्रजातिम प्रज्ञया पादौ समारुह्य पादाभ्यां सर्वा इत्या आप्नोति । प्रज्ञं समारुह्य प्रज्ञयैव धियो विज्ञातव्यं कामानाप्नोति ॥ ५३ ॥**

---

एवं नामगन्धरूपशब्दरसकर्मसुखदुःखानन्दगतिज्ञातव्याः दश वाग्घ्राणादिविषयत्वेनोक्त्वा प्रज्ञाशब्दितस्य जीवस्य नामादिदशविधभूतमा प्रकारमाह **प्रज्ञया वाचं--** । अत्र **प्रज्ञाशब्दः** अव्यवहितप्रज्ञाशब्दनि परः । ततश्च मनसा वागिन्द्रियमधिष्ठाय तद्द्वारा सर्वाणि नामानि अभिलपन प्राप्नोति ॥ ५० ॥

**प्रज्ञया घ्राणं — आप्नोति** । मनसा घ्राणेन्द्रियमधिष्ठाय तद्द्व गन्धान् आप्नोति ज्ञानेन व्याप्नोति । एवमुत्तरत्रापि द्रष्टव्यम्, मनसा चक्ष मधिष्ठाय तद्द्वारा सर्वाणि रूपाण्याप्नोति ज्ञानेन व्याप्नोतीति ॥ ५१ + ५

---

**प्रज्ञया वाच**मित्यादिवाक्येषु तृतीयान्तं प्रज्ञापदं पूर्ववाक्यप्रकृतमनःपरम् आप्नोतेः कर्ता, न करणम् । (५१)

प्रज्ञयैव **धियं समारुह्ये**त्यत्र धियमिति धर्मभूतज्ञानपरम् । मानसकार्य धर्मभूतज्ञानपरिणामत्वात् तदपेक्षाध्रौव्यात् । **प्रज्ञयैवे**त्यत्रैवकारः पूर्वस्थलेषु समारं विषयप्रापकस्य करणस्य च प्रज्ञावागादिरूपेण भेदवत् इह भेदो नास्ति ; मन एव समारं प्रापकश्चेति ज्ञप्तये । अस्तु वा **धियमिति** मनःपरमेव ; प्राक् तथोक्तेः । (५२)

न हि प्रज्ञापेता वाङ्नाम किञ्चन प्रज्ञापयेत् ॥ ५४ ॥

अन्यत्र मे मनोऽभूदित्याह, नाहमेतन्नाम प्राज्ञासिषमिति ॥ ५५

न हि प्रज्ञापेतो घ्राणो गन्धं कञ्चन प्रज्ञापयेत् । अन्यत्र
ऽभूदित्याह, नाहमेतं गन्धं प्राज्ञासिषमिति । न हि प्रज्ञापेतं च
किञ्चन प्रज्ञापयेत् । अन्यत्र मे मनोऽभूदित्याह, नाहमेतद्रूपं प्राज्ञ
मिति । न हि प्रज्ञापेतं श्रोत्रं शब्दं कञ्चन प्रज्ञापयेत् । अन्यत्र
ऽभूदित्याह, नाहमेतं शब्दं प्राज्ञासिषमिति । न हि प्रज्ञापेता जि
रसं कञ्चन प्रज्ञापयेत् । अन्यत्र मे मनोऽभूदित्याह, नाहमेतमन्न
ासिषमिति । न हि प्रज्ञापेतौ हस्तौ कर्म किञ्चन प्रज्ञापयेताम्
त्र मे मनोऽभूदित्याह, नाऽहमेतत् कर्म प्राज्ञासिषमिति । न
पेतं शरीरं सुखदुःखे[1] किञ्चन प्रज्ञापयेत् । अन्यत्र मे मनोऽभूदित्या
मेतत् सुखदुःखे[1] प्राज्ञासिषमिति । न हि प्रज्ञापेत उपस्थः आन
प्रजातिं कञ्चन प्रज्ञापयेत् । अन्यत्र मे मनोऽभूदित्याह, नाहमे
न्दं रतिं प्रजातिं प्राज्ञासिषमिति । न हि प्रज्ञापेतौ पादावित्यां का
पयेताम् । अन्यत्र मे मनोऽभूदित्याह, नाहमेतामित्यां प्राज्ञासि
ने । न हि प्रज्ञापेता धीः काचन सिद्ध्येत् ॥ ५६ ॥

1. सुखदुःखं.

---

ननु मनोद्वारा नियमनं किमर्थमित्याशङ्क्याह **न हि प्रज्ञापेता**–प्रज्ञापये
हे मनोनधिष्ठितं वागिन्द्रियं नामप्रज्ञापनसमर्थं भवतीत्यर्थः ॥ ५४ ॥

अत्र लोकमेव साक्षित्वेनोदाहरति **अन्यत्र मे** —। लोको हि अन्यत्र
ऽभूदित्युक्त्वा, 'एतन्नाम न प्राज्ञासिष' मिति ह्याह । मनोव्यासङ्गवशात् ज्ञ
कनामाभिलपनलक्षणवागिन्द्रियव्यापारो नाभूदिति हि लोकः प्रत्येतीत्यर्थ
मुत्तरत्रापि द्रष्टव्यम् ॥ ५५+५६ ॥

---

सर्वकरणानां मनोपेक्षां व्यतिरेकमुखेनोपपादयति **न हि प्रज्ञापेतेति** ॥ प्रज्ञापयेदि
न्द्रियाणां प्रज्ञापकत्वं स्वरसम् । कर्मेन्द्रियाणां तु ज्ञानपूर्वकस्य परज्ञानहेतुभूतस्य
हारस्य हेतुत्वात् प्रज्ञापकत्ववाचोयुक्तिः । ५४–५६

**न प्रज्ञातव्यं प्रज्ञायेत ॥ ५७ ॥**

**न वाचं विजिज्ञासीत; वक्तारं विद्यात् ॥ ५८ ॥ न ग**
**ज्ञासीत; घ्रातारं विद्यात्। न रूपं विजिज्ञासीत; रूपं विद्वांसं (**
**विद्यात् ॥ ५९ ॥ न शब्दं विजिज्ञासीत; श्रोतारं विद्यात्।**
**विजिज्ञासीत; अन्नरसविज्ञातारं विद्यात्। न कर्म विजिज्ञासीत**
**विद्यात्। न सुखदुःखे विजिज्ञासीत; सुखदुःखयोर्विज्ञातारं वि**
**नानन्दं न रतिं न प्रजातिं विजिज्ञासीत; आनन्दस्य रतेः प्रज**
**तारं विद्यात्। नेत्यां विजिज्ञासीत; एतारं विद्यात्। न मनो ।**
**सीत; मन्तारं विद्यात्। ता वा एता दशैव भूतमात्राः आ**

---

एवं प्रज्ञाशब्दितस्य जीवस्य भूतमात्राव्याप्तप्रकारकथनमुखेन अ
विवेकं प्रदर्श्य, 'अन्या वाचो विमुञ्चथ' इत्युक्तरीत्या भूतमात्राशब्दिताना
परिहर्तव्यमित्याह **न प्रज्ञातव्यं प्रज्ञायेतेति**। ज्ञात्रात्मव्यतिरिक्तः अ
विषयो न ज्ञातव्य इत्यर्थः ॥ ५७ ॥

तदेव प्रपञ्चयति **न वाचं—विद्यात्**। अत्र **वाक्**छब्दः प्रकरणा
नामपरः। **वक्तारम्** उक्तरीत्या मनोधिष्ठितवागिन्द्रियजन्याभिलपनक्रियया ना
मात्मानमेव विद्यात्। वक्तृजीवशरीरकपरमात्मानं विद्यादिति यावत्। एट्
द्रष्टव्यम् ॥ ५८ ॥ **रूपं विद्वांसं** रूपं पश्यन्तं विद्यादित्यर्थः ॥

**ता वा एताः—सिद्ध्येत्**। नामगन्धरूपशब्दरसकर्मसुखदुःखा
प्रजातीत्याज्ञातव्यलक्षणा दश भूतमात्राश्च, तद्ग्राहिवाग्घ्राणचक्षुश्श्रोत्रजिह्वाहस्तः

---

**न प्रज्ञातव्यं प्रज्ञायेतेति**। पूर्वं, **तस्यै धियो विज्ञातव्य**मिति द्वयोः प्र
तत्र प्रज्ञाविरहे धियो न भवन्तीतिवत् प्रज्ञातव्यमपि न प्रज्ञायेतेत्युच्यत इति युक्तं व्या
अथापि तदा, 'प्रज्ञाविरहे' इत्यध्याहारादिगौरवात् वक्ष्यमाणार्थस्य समुदायतो निर्देश
मिति योजनां वक्ष्यन् अवतारयति **एवं प्रज्ञाशब्दिते**ति। तथा च **न प्रज्ञा**रे
निषेधविधिरूपम्, प्रज्ञातव्यः=विषयो न प्रज्ञातव्य इति भावः। वस्तुतः पूर्ववाक्ये **धि**
**विज्ञातव्य**मित्येतद्विशेषणमेवाभिमतम्। (५७)

**वक्तृजीवशरीरके**ति। यद्यपि वाक्यानीमानि जीवमात्रपराणि; उपरि
**रथस्ये**ति परमात्मपरमिति सुवचम्—अथाप्यस्य केवलस्यानादेयत्वात् विशिष्टविवक्षा।

**त्रा अधिभूतम्। यद्धि(द्धि) भूतमात्राः न स्युः, प्रज्ञामात्राः न दि(द्वा) प्रज्ञामात्रा न स्युः, न भूतमात्राः स्युः। न ह्यन्यतरतो न सिद्ध्येत्; नो एवैतन्नाना ॥ ६० ॥**

**इ् यथा रथस्यारेषु नेमिरर्पिता, नाभावरा अर्पिताः, एवमेवैता प्रज्ञामात्रास्वर्पिताः, प्रज्ञामात्राः प्राणेऽर्पिताः ॥ ६१ ॥**

---

क्षणाः दश प्रज्ञामात्राश्चान्योन्याधाराः। वागादीन्द्रियाणामभावे नामादि-वागादिलक्षणप्रज्ञामात्राधीनसिद्धिकत्वात् नामादिभूतमात्राणाम्; नामादि-भावे तद्व्यवहारफलकप्रज्ञामात्राशब्दितेन्द्रियाद्यनिष्पत्तेः। अतो ग्राह्यग्राह-गात् सर्वलोकयात्रायाः **नो एवैतन्नाना**। **नाना**शब्दो विनार्थकः। ाहकजातं परस्पराविनाभूतमित्यर्थः। न हि ग्राह्येण विनाकृतं ग्राहकं नाकृतं ग्राह्यं कार्यक्षमं भवति। तस्मात् प्रज्ञामात्राशब्दितमपि भूत-त्यर्थः ॥ ६० ॥

**यथा रथस्य—प्राणेऽर्पिताः**। यथा रथस्य **नाभौ** रथचक्रमध्यवर्ति-पि अरशब्दिता अर्पिताः; अत्र नेमिशब्दितं वलयाकारं काष्ठं यथा ेवं प्राणशब्दितपरमात्मनि प्रज्ञामात्राशब्दनिर्दिष्टाश्चेतना अर्पिताः। त्राशब्दितग्राह्यग्राहकजातं सर्वं समर्पितमित्यर्थः।

। प्रज्ञामात्राशब्देन, **यद्धि भूतमात्रा** न स्युः **न प्रज्ञामात्राः स्युः** त्रा **न स्युः न भूतमात्राः स्युरिति** पूर्ववाक्ये प्रज्ञामात्राशब्द-ादीनां दशानामेव ग्रहणमुचितम्। न तु प्रज्ञात्माशया, 'यो वै प्राणः े व्यवहितकेवलप्रज्ञाशब्दनिर्दिष्टजीवपरत्वमिति चेन्न — पूर्ववाक्ये ियभावप्रतिपादनदर्शनात् तत्र प्रज्ञामात्राशब्दस्य वागादिपरत्वेऽपि इह

---

ामात्रा इति। अत्र एकादशेन्द्रियमध्येऽन्तर्गतस्य त्वगिन्द्रियस्य तद्विषयभूतस्य त्यकत्वात् दशेत्युक्तिः। (६०)

नोपासाकाराणां मध्ये मुख्यप्राणस्य निरूपणं प्रथमं कृत्वा अथ जीवं तदन्तर्गतं स्पदं निरूप्य तस्येतरवर्जनेनोपास्यत्वमुपवर्ण्य, तदुपासनमपि तद्विशिष्ट-मेव कार्यमिति स्वाभिमतव्यक्तये संप्रति तदधिकं परमात्मानमपि सदृष्टान्तं तदयथेति। 'मात्राशब्दः [illegible]

**स एष प्राण एव प्रज्ञात्मा (प्राज्ञ आत्मा) आनन्दोऽजरोऽमृतः स न साधुना कर्मणा भूयान्; नो एवासाधुना कर्मणा कनीया एष ह्येवैनं साधु कर्म कारयति तम्, य[1]मेभ्यो लोकेभ्य नीषति[2] ॥ ६४ ॥**

१. यमन्वानुनेषति. पा० २. उन्निनीषते. शां.

प्रज्ञामात्राशब्दनिर्दिष्टस्य भूतमात्राश्रितत्वाप्रतिपादनात् प्राणशब्दितपरमात्म प्रतिपादनात् प्रज्ञामात्राशब्दो जीवपर एव । पूर्ववाक्ये बाधकबलात् मुख्यार्थत्यागेऽपि इह मुख्यार्थत्यागे कारणाभावात् । यथाऽस्मिन ' यावद्ध्यस्मिन् शरीरे प्राणो वसति तावदायुः ', ' अथास्मिन् प्राण एवैक ' एतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते ' इति त्रिष्वपि वाक्येषु परमात्मजीवपरत्वेन भिन्नार्थकत्वम् , एवं, ' प्रज्ञैवास्या एकमङ्गमुदूढमित्यत्र ' न हि प्रज्ञापेता वाङ् नाम किञ्चिन् प्रज्ञापयेत् ', 'दशैव भूतमात्रा अधि वाक्येषु जीवमनइन्द्रियरूपार्थत्रयविषये दृष्टप्रयोगस्य प्रज्ञाशब्दस्य अर्थौ णैवार्थस्य वर्णनीयत्वात् । न चैकवचनान्तप्रज्ञाशब्दनिर्दिष्टस्य जीवस्य प्रज्ञामात्राशब्देन परामर्शो न युक्त इति वाच्यम् — सद्विद्यायाम् , ' स्वमपं त्येकवचनान्तशब्दनिर्दिष्टस्य जीवस्य, ' सति संपद्य न विदु'रिति बहुव निर्देशवदुपपत्तेः । एतत् सर्वं **श्रुतप्रकाशिकायामिन्द्रप्राणाधिकरणे** स्प

**स एष प्राज्ञ आत्मा आनन्दोऽजरोऽमृतः** । प्रज्ञ निरुपाधिकसार्वज्ञ्याश्रयः । निरुपाधिकानन्दत्वाजरत्वामृतत्वाश्रयः ॥ ६२

**स न साधुना—कनीयान्** । पुण्यपापकृतोत्कर्षापकर्षशून्य इत्

**एष ह्येव — उन्निनीषति** । यं पुरुषमेभ्यो लोकेभ्यः ऊर्ध्वं म मिच्छति, तं पुरुषं भगवल्लोकप्राप्तये साधुकर्म कारयति । कर्मणां भग योगित्वञ्च तद्धेतुभूतविद्याविरोधिपापनिरसनद्वारा ॥ ६४ ॥

**स एष प्राण एव प्रज्ञात्मेति** पाठ एव श्रीभाष्य—भाष्यान्तरादृतः । प्राज्ञ आत्मेति । (६२)

**एष ह्येवैनमसाधु कर्म कारयति [1]यमधो निनीषति[2] ॥ ६५ ॥**
**एष लोकपाल एष लोकाधिपतिरेष सर्वेशः[3] ॥ ६६ ॥**
**स म आत्मेति विद्यात् । स म आत्मेति विद्यात् ॥ ६७ ॥**

**इति कौषीतक्युपनिषदि तृतीयोऽध्यायः ॥**

1. यमेभ्यो लोकेभ्योऽनुनुत्सते । 2. निनीषते. शां. 3. सर्वेश्वरः ।

---

**एष ह्येवैनमसाधु — अधोनिनीषति ।** यं पुरुषमेभ्यो लोकेभ्यः अ
येतुमिच्छति, तमसाधु कर्म कारयति । यथा साधुकर्मणां ब्रह्मोपासननिष्पाद
उन्नयनहेतुत्वम्, एवमसाधुकर्मणामप्युपासनप्रतिबन्धद्वारा अधोनयनहेतुत्वम्
त्व **भगवता भाष्यकृता,** "पापस्य ज्ञानोदयविरोधित्वम्, 'एष एवास
कारयति तं यमधो निनीषति' इति श्रुत्याऽवगम्यते" इति । विवृत
सार्यैः, "कर्मणामुन्नयनहेतुत्वमुपासननिष्पादनरूपमिति तद्विपरीतमधोनय
त्ननप्रतिबन्धरूपमिति स्फुटतरमवगम्यते" इति ॥ ६५ ॥

**एष—सर्वेशः । लोकपालः** लोकरक्षकः । अत्र **व्यासार्याः,** "लोका
: लोकस्वामी । **सर्वेशः** सर्वनियन्ता । ननु 'पा रक्षणे' इति धातोः पतिशब्द
कथमत्र शेषिवाचित्वम् ? उच्यते—न हि सर्वत्रावयवशक्तिरेव रूढिशरि
स्ति । गमेर्डो इति व्युत्पत्त्या गोशब्दस्य सकलजङ्गमवाचित्वप्रसङ्गात्; स्थिता
अवाचकत्वप्रसङ्गाच्च । अतः शेषिणि पतिशब्दो रूढः । अन्यथा. 'वृद्धौ
पितरौ साध्वी भार्या सुतः शिशुः । अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीत
पितुः संरक्षके पुत्रे पतिशब्दव्यवहारप्रसङ्गात्" इत्यूचुः ॥ ६६ ॥

**स म आत्मेति विद्यात् ।** पूर्वोक्तगुणविशिष्टः स्वान्तर्यामीति प्र
यः । यद्वा अस्मिन्नेव वाक्ये पूर्वोक्तत्वाष्ट्रहननादिकृतलेपशून्यत्ववक्तृत्वघ्रातृत्वा
कजीवविशिष्टतया आयुष्ट्वेन्द्रियनिःश्रेयसहेतुत्वशरीरोत्थापकत्वादिगुणविशिष्टप्रा

---

एवमुपास्याकारान् सर्वान् क्रमेण प्रदर्श्य तावद्विशिष्टोपासनामेकेन वाक्येन विधत्ते स
मेति विद्यादिति । **मामित्यनेन** पूर्वमस्मदर्थान्तर्यामिपर्यन्तग्रहणम्; अन्यथा समनन्त
नामपि हिततमोपासनकर्मत्वादेरिवानन्वयादिति विशदयितुं **म आत्मेति** विभज्य कथना
त्मभावसंबन्धेनेन्द्रविशिष्टपरमात्मोपासनमेव विधित्सितमिति ध्येयम् ॥

विशिष्टतया आनन्दत्वामृतत्वादिस्वरूपेण च विशिष्टस्य स्वात्मत्वेनोपासनं वि
एवंसति अनेकोपासनविधानकृतवाक्यभेदशङ्काया नावकाश इति द्रष्टव्यम् ।
रध्यायपरिसमाप्त्यर्था ।

इदञ्च वाक्यं **समन्वयाध्याये** प्रथमपादे चिन्तितम्—'प्राणोऽस्मि
तं मामायुरमृतमित्युपास्स्व' इत्यत्र मामितिशब्देन प्राणशब्देन च निर्दिश्यम
एव । इन्द्रप्रयुक्तस्य मामितिशब्दस्य तद्विषयत्वावश्यम्भावात् इति पूर्वपक्षे
उच्यते । "प्राणस्तथाऽनुगमात्" । प्राणः परमात्मा । परमात्मत्वसाधकानन्
मत्त्वेन तस्यास्मिन् प्रकरणे अनुगतत्वात् । 'स एष प्राण एव प्रज्ञात्मा आ
जरोऽमृतः' इति [हि?] श्रूयते । "न वक्तुरात्मोपदेशादिति चेदध्यात्मसंब
ह्यस्मिन्" । त्वाष्ट्रवधादिना प्रज्ञातजीवभावस्येन्द्रस्य वक्तुः, 'मामेव विजानीह
स्वात्मत्वेनोपदिश्यमानः नेन्द्रात् जीवादधिको भवितुमर्हतीति चेन्न—अस्मिन्
परमात्मसंबन्धिनां धर्माणां बहुत्वमुपलभ्यते । हिततमोपासनकर्मत्वम्, साध्वसाधुक
येतृत्वम्, 'भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः' इति अ
वर्गाधारचेतनवर्गाधारत्वमानन्दत्वमजरत्वममृतत्वं लोकाधिपतित्वम् एवमादयो हि
परमात्मसंबन्धिन उपलभ्यन्ते । अतो भूयोधर्मानुग्रहायास्य प्रकरणस्य परमात्म
नेव वक्तव्यम् । तर्हि इन्द्रस्य, 'मामुपास्स्वे' ति निर्देशः कथमुपपद्यत इत्यत्र
'शास्त्रदृष्ट्या तूपदेशो वामदेववत्" । 'य आत्मनि तिष्ठन्नात्मनोऽ
इत्यादिशास्त्रेण परमात्मानं स्वात्मानं दृष्ट्वा शरीरवाचिनाञ्च शब्दानां शरीरिप
ज्ञात्वा, मामुपास्स्वेत्युपदिष्टवान् । यथा हि साक्षात्कृतस्वात्मभूतपरमात्मतत्त्वो वा
अहं मनुरभवं सूर्यश्चे' ति स्वात्मनि मन्वादिभावमुपदिष्टवान्—न हि तत्र म
भावः स्वस्वरूपगतो वामदेवेनोपदिष्टः ; अपितु स्वात्मभूतपरमात्मगतः—तद्व
उपदेश इति भावः । "जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत
द्योगात्" । त्वाष्ट्रवध—वक्तृत्वादिजीवलिङ्गानाम् आयुःप्रभुत्वशरीरोत्थापकत्वे
प्रयत्वादीनां मुख्यप्राणलिङ्गानां चोपन्यासः किमर्थं इति चेत्—इन्द्ररूपजीवशरी
तया प्राणरूपाचेतनशरीरकतया स्वरूपेण चोपासनार्थं चेतनाचेतनधर्माणां
धर्माणाञ्च कीर्तनम् । त्रिविधश्चोपासनं प्रकरणान्तरेष्वप्याश्रितम् , यथा तैत्तिर

४

अथ चतुर्थोऽध्यायः ॥

**गार्ग्यो हवै बालाकिरनूचानः संस्पष्ट आस ॥ १ ॥**

**सोऽवसदुशीनरेषु सत्त्वमत्स्येषु कुरुपाञ्चालेषु काशीविदे**
**हेष्विति ॥ २ ॥**

**स हाजातशत्रुं काश्यमेत्योवाच ॥ ३ ॥, ब्रह्म ते ब्रवाणी**

---

सत्यं ज्ञानमनन्तं ब्रह्मे' ति स्वरूपेण, 'सच्च त्यच्चाभव' दिति भोक्तृभोग्यलक्ष
चेतनाचेतनशरीरकतया चोपासनम् । एवमिहाप्युपासनात्रैविध्यं युज्यत
थितम् ॥ ६७ ॥

इति कौषीतक्युपनिषत्तृतीयाध्यायप्रकाशिका ।

४

**गार्ग्यो** —— **आस** । बलाकस्यापत्यं **बालाकिः** गोत्रतो **गार्ग्यः**,
**अनूचानः** अङ्गाध्यायी । 'अङ्गाध्याय्यनूचानः' इति स्मृतेः । **संस्पष्टः** स
वेद्यया प्रख्यातः—एवम्भूतस्सन् **आस** बभूव ॥ १ ॥

**सो — इति** । **सः** बालाकिः उशीनरेषु सत्त्वप्रचुरमत्स्यदेशेषु कुरुपाञ्चा
काशीविदेहेषु **उवास** (?) उषितवान् । **इति**शब्दः प्रकारवचनः । एवञ्जात
ष्वन्येष्वपीत्यर्थः ॥ २ ॥

**स — उवाच** । अजातशत्रुनामानं काशीराजमभिगत्योवाच ॥ कि
मिति ? ब्रह्म ते ब्रवाणीति ।

---

४

समन्वयाध्याये चतुर्थपञ्चमे 'जगद्वाचित्वा' दिति सूत्रेण एतत्कौषीतकिश्रुतिगतस्य, '
तत् कर्मे' ति कर्मपदस्यार्थनिर्धारणात् तदधिकरणं कौषीतकिबालाक्यजातशत्रुसंवादमेव प्राथ
अधिकृत्य प्रवृत्तम्; न तु बृहदारण्यकगतं तम् । स तु, 'अपि चैवमेके' इति तत्रैव
खण्डेन स्पृष्टः ।

[illegible] अङ्गाध्यायीति । अङ्गिभतस्वाध्यायाध्ययनमर्थसिद्धम् । (१)

तं होवाचाजातशत्रुः, 'सहस्रं दद्म[1] एतस्यां वाचि ; जनक
इति ह वै जना धावन्ती' ति ॥ ४ ॥

स होवाच बालाकिः, 'य एवैष आदित्ये पुरुषः, तमेवाह
इति ॥ ५ ॥ तं होवाचाजातशत्रुः, 'मा मैतस्मिन् [2]संवाद
बृहन् (तु) पाण्डरवासाः अतिष्ठाः सर्वेषां भूतानां मूर्धेति वा अ

1. दद्मस्त एतस्यां 2. समवादिष्ठा. पा० सर्वत्र.

---

तं होवाच—धावन्तीति । एतस्यामेव वाचि निमित्ते गवां
प्रयच्छामि । सर्वेऽपि ब्रह्मविदः, जनक एव ब्रह्म शुश्रूषुः दाता चेति उ
समीपमेव धावन्ति । भवांस्तु मत्समीपमागत्य, ब्रह्म ते ब्रवाणीत्युक्तवान् ।
वाक्येन तोषिता वयं सहस्रं प्रयच्छाम इति भावः ॥ ४ ॥

स – उपास इति । आदित्यमण्डलान्तर्वर्तिनं पुरुषं ब्रह्मेत्यहमुपासे ।
त्वमपि तमेवोपास्स्वेति भावः ॥ ५ ॥

तं ह –। मा मां प्रति एतस्मिन् आदित्यवर्तिपुरुषविषये संवाद
कारय । अज्ञाते हि विषये संवादः कारयितव्यः । अयं तु ज्ञात
कथमित्यत्राह, बृहन् पाण्डरवासाः सर्वेषां भूतानां मूर्धेति वा अह

---

जनको जनक इति द्विः प्रयोगेऽर्थविशेषमभिसंहितं दर्शयति जनक एव
शुश्रूषुः दाता चेति । (४)

अब्रह्मज्ञेन बालाकिना आदित्यपुरुषादयः षोडश क्रमेण ब्रह्मत्वेन कीर्त्यन्ते य
आदित्ये पुरुष इत्यादिना । ब्रह्म ते ब्रवाणीत्युपक्रमात् तमेवाहमुपासे इति सर्वत्र
धनोपगमनं विवक्षितम् । अजातशत्रुस्तु यथावस्थितब्रह्मवेदित्वात् तदनभ्युपगमेन मा मैतस्मिन्
संवादयिष्ठाः इत्याह । तदर्थश्च मद्विदितार्थसंवादानुकूलव्यापारवान् मा भूरिति । आ
रुषादितत्त्वं मया सुज्ञातम् । त्वया च तदन्यथा ज्ञातम् । अतः त्वदीयो वादः मदभिम
वादो न भवति । संवादापेक्षा च अन्यथा गृहीतांशत्यागेन वास्तवांशशिक्षायै भवेत् अपेक्षव
त्वे । अहं तु सम्यग् जानामि ; त्वमेव त्वन्यथा गृहीतवानसि । अतो मम संवादसंपत्तये त्व
ापरितव्यमिति भावः । संवादं मा कारयेति । मदर्थस्य संवादः त्वत्तोऽधिगत
दुक्तये मा यतस्वेत्यर्थः । अज्ञाते हीति । अत्र वक्तव्यं बृहदारण्यकपरिष्कारे द्रष्टव्य
त्र संवादः संमतिः विषयस्य मया अज्ञातत्वे हि त्वदुपदेशमङ्गीकुर्याम् । त्वञ्च मामङ्गीकार
तत्वात्तु विपरीतार्थं त्वदुक्तं न संमन्येयेत्यर्थः । (६)

॥६॥ स यो हैतमेवमुपास्ते, अतिष्ठाः सर्वेषां भूतानां मूर्धा

ोवाच बालाकिः, 'य एवैष चन्द्रमसि पुरुषः, तमेवाहमुपासे'इति।
ातशत्रुः, 'मा मैतस्मिन् संवादयिष्ठाः। सोमो राजा अन्नस्यात्मेति
ुपास इति। स यो हैतमेवमुपास्ते, अन्नस्यात्मा भवति'॥ ७॥
ोवाचाजातशत्रुः, 'य एवैष विद्युति पुरुषः, तमेवाहमुपासे'इति।
ातशत्रुः, 'मा मैतस्मिन् संवादयिष्ठाः। तेजस्यात्मेति वा
ो इति। स यो हैतमेवमुपास्ते, तेजस्या[1]त्मा भवति'॥ ८॥
ोवाच बालाकिः, 'य एवैष स्तनयित्नौ पुरुषः, तमेवाह[2]मुपासे'
ाचाजातशत्रुः, 'मा मैतस्मिन् संवादयिष्ठाः। शब्दस्यात्मेति वा
ा इति। स यो हैतमेवमुपास्ते, शब्दस्यात्मा भवति'॥ ९॥

स आत्मा. 2. अहं ब्रह्मोपासे.

। वैशब्दोऽवधारणे। बृहन् महान्। पाण्डराणि किरणरूपाणि
सः पाण्डरवासाः। आदित्यकिरणानां नानारूपत्वात् पाण्डरवासस्त्वमिति
बृहदारण्यके बालाक्यजातशत्रुसंवादे बृहत्त्वपाण्डरवासस्त्वे चन्द्रधर्मतया
तु आदित्यधर्मतया उक्ते इति विशेषः। अतिष्ठाः सर्वमपि कार्य-
ष्ठतीति अतिष्ठाः। सर्वेषां भूतानां मूर्धा श्रेष्ठः॥ ६॥

ासनस्यानुरूपं फलमाह स यो—भवति।

ोवाच—भवति। अन्नस्य व्रीहियवादिरूपौषधिवर्गस्य। आत्मा।
चन्द्रमसः सर्वरसात्मत्वेन तत्स्वरूपत्वाद्वा, अमावास्यायां चन्द्रस्य
शश्रवणाद्वा चन्द्रस्य अन्नात्मत्वम्॥ ७॥

स्यात्मा तेजस्विस्वरूप इत्यर्थः। तेजस आत्मेति पाठेऽपि स
॥

स्यात्मा। स्तनयित्नुसहितस्य मेघस्य शब्दप्रधानत्वात् शब्दात्मत्वम्।
॥ ९॥

स होवाच बालाकिः, 'य एवैष आकाशे पुरुषः, तमेवाह इति । तं होवाचाजातशत्रुः, 'मा मैतस्मिन् संवादयिष्ठाः । पूर्ण ब्रह्मेति वा अहमेतमुपास इति । स यो हैतमेवमुपास्ते, प्रजया पशुभिः । नो एव स्वयम् । नास्य प्रजा पुरा प्रवर्तते' ॥ १० ॥

स होवाच बालाकिः, 'य एवैष वायौ पुरुषः, तमेवाह इति । तं होवाचाजातशत्रुः, 'मा मैतस्मिन् संवादयिष्ठाः । इन्द्रो वैकु पराजिता सेनेति वा अहमेतमुपास इति । स यो हैतमेवमुप जिष्णुर्हवा अपराजिष्णुरन्यतस्त्यजायी[1] भवति' ॥ ११ ॥

1. अन्यतस्तज्ज्यायान्—पा॰

---

पूर्णत्वविशिष्टोपासनायाः फलम्, **पूर्यते प्रजया पशुभिरिति** । प्रयुक्तनिर्व्यापारत्वलक्षणाप्रवर्तित्वविशिष्टोपासनायाः फलम्, **नो एव स्वयमि** स्वयमपि, तत्पुत्रपौत्रादिकं वा न शास्त्रानुशिष्टशतायुष्ट्वकालात् प्राक् अस्मा प्रवर्तते । नास्य सन्ततावपमृत्युर्भवतीत्यर्थः ॥ १० ॥

**इन्द्रः** ईश्वरः । 'योऽयं पवते एष देवानां गृहाः' इति वायोर्देवलो प्रसिद्धेः लोकत्वेन वैकुण्ठसादृश्याद्वैकुण्ठत्वम् । मरुतां गणत्वप्रसिद्धेः **सेना** । जि जयशीलः । **अपराजिष्णुः** अपराजितः । **अन्यतस्त्यजायी** । अन्यतो अन्यतस्त्याः । शत्रव इति यावत् । तान् जेतुं शीलमस्य । 'सुप्यजातौ' इति णि शेषं स्पष्टम् ॥ ११ ॥

---

**पूर्णमप्रवर्तीति** । छान्दोग्ये गायत्रीविद्यायां (३-१२) मोक्षफलकं पूर्णत्वाद्युप क्तम् । तत्राप्याकाशः प्राक् प्रस्तुतः; ब्रह्मतुल्यतया कीर्तितश्च । (१०)

स होवाच बालाकिः, 'य एवैषोऽग्नौ पुरुषः, तमेवाहमुपा
।। तं होवाचाजातशत्रुः, 'मा मैतस्मिन् संवादयिष्ठाः। विषासहिर्
अहमेतमुपासे इति । स यो हैतमेवमुपास्ते विषासहिर्हैं
ति' ॥ १२ ॥

स होवाच बालाकिः, 'य एवैषोऽप्सु पुरुषः, तमेवाहमुपास' इ
होवाचाजातशत्रुः, 'मा मैतस्मिन् संवादयिष्ठाः। नाम्नस्त्वात्मेति
मेतमुपासे इति। स यो हैतमेवमुपास्ते, नाम्नस्त्वात्मा भवति' ॥ १

इत्यधिदैवतम् । अथाध्यात्मम् ॥ १४ ॥ —

स होवाच बालाकिः, 'य एवैष आदर्शे पुरुषः, तमेवाहमुपा
। तं होवाचाजातशत्रुः, 'मामैतस्मिन् संवादयिष्ठाः। प्रतिरूप इति
मेतमुपास इति। स यो हैतमेवमुपास्ते, प्रतिरूपो हैवास्य प्रजा
ायते; नाप्रतिरूपः' ॥ १५ ॥

१. विषासहिर्वै एष---पा०

**विषासहिः**। सोढुमशक्यः शत्रुभिरित्यर्थः। मर्षयितेति वाऽर्थः॥ १

**नाम्नस्त्वात्मा**। नामाधिष्ठात्री देवतेत्यर्थः। शिष्टं स्पष्टम् ॥ १३ ॥

**इत्यधिदैवतम्**। **अथाध्यात्मम्**। देवतायामुपासनप्रकार उक्त
न्युपासनप्रकार उच्यत इत्यर्थः ॥ १४ ॥

**प्रतिरूपः**। प्रतिबिम्ब इत्यर्थः। अस्य सन्ततावनुरूप एव पुत्रो जायते
नुरूपः। प्रतिबिम्बस्य कार्यकारणसंघातलक्षणात्मशब्दिताभिन्नत्वादध्यात्मान्त
मेति द्रष्टव्यम् ॥ १५ ॥

**प्रतिरूपो हैवास्य प्रजेति**। 'बिम्बादिवोत्थितौ बिम्बौ रामदेहात् तथा परौ' इत्
स्वप्रतिबिम्बवत् स्वप्रजा भवतीत्यर्थः। तत्र शरीरसाम्यमात्रं न विवक्षितम्; किंतु
इत्याशयेन **अनुरूप एव पुत्रो जायते** इत्युक्तम्। (१५)

स होवाच बालाकिः, 'य एवैष प्रतिश्रुत्कायां पुरुषः, 
मुपास' इति । तं होवाचाजातशत्रुः, 'मा मैतस्मिन् संवादयिष्ठाः, द्वि
पगम इति वा अहमेतमुपास इति । स यो हैतमेवमुपास्ते,
[1]द्वितीयाम्; द्वितीयवान् भवति' ॥ १६ ॥

स होवाच बालाकिः, 'य एवैष शब्दः पुरुषमन्वेति, 
मुपासे' इति । तं होवाचाजातशत्रुः, 'मा मैतस्मिन् संवादयिष्ठाः,
रिति वा अहमेतमुपासे इति । स यो हैतमेवमुपास्ते, नो एव
नास्य प्रजा पुरा कालात् संमोहमेति' ॥ १७ ॥

स होवाच बालाकिः, 'य एवैष च्छायायां पुरुषः, तमेवाहः
इति । तं होवाचाजातशत्रुः, 'मा मैतस्मिन् संवादयिष्ठाः । मृत्युरि
अहमेतमुपासे इति । स यो हैतमेवमुपास्ते, नो एव स्वयम्, नास्य
पुरा कालात् प्रमीयते' ॥ १८ ॥

1. द्वितीयम्—पा०

---

**प्रतिश्रुत्कायां** प्रतिध्वनौ । **द्वितीयः** पूर्वशब्दापेक्षया द्वि
**अनपगमः** नापगच्छतीत्यनपगमः । **द्वितीयाम्** आत्मापेक्षया द्वितीयां
**विन्दते** लभत इत्यर्थः । **द्वितीयवान् भवति**। पुत्रेण द्वितीयवांश्च भवती
विन्दते **द्वितीयमिति** पाठे **द्वितीयं** पुत्रं विन्दते । अनपगमत्वोपासनाफल
द्वितीयवान् भवतीति । नित्ययोगे मतुप् । नित्यं पुत्रसहितो भवतीत्यर्थः ॥

**पुरुषमन्वेति** । गुहादौ पुरुषशब्दानुकारिवर्णात्मकः प्रतिशब्द इत्
**असुरिति वा अहमेतमुपास** इति । तादृशशब्दस्य प्राणबलत्लभ्यतया असुरि
इत्यर्थः । **नो – एति** । स्वयं वा तत्सन्ततिर्वा अकाले मूर्च्छां मरणं[
प्राप्नोतीत्यर्थः ॥ १७ ॥

**मृत्युरिति वा** इति । नीलत्वभयङ्करत्वादिमृत्युसादृश्यात् छायापु
मृत्युत्वेनोपासनमिति द्रष्टव्यम् १८ ॥

---

प्रतिश्रुत्कायामिति । प्रतिश्रुत्कापदेन प्रतिश्रुज्जनकदिग्ग्रहणं युक्तम्; श्रुत
समानप्रकरणे दिक्षु इति श्रवणात् । (१६)

स होवाच बालाकिः, 'य एवैष शारीरः पुरुषः, तमेवाहमुपासे'
तं होवाचाजातशत्रुः, 'मा मैतस्मिन् संवादयिष्ठाः। प्रजापतिरिति
अहमेतमुपासे इति । स यो हैतमेवमुपास्ते, प्रजायते प्रजया
'॥ १९ ॥

स होवाच बालाकिः, 'य एवैष प्राज्ञ आत्मा येनैतत्सुप्तः 'स्वप्नाया-
तमेवाहमुपासे' इति । तं होवाचाजातशत्रुः, 'मा मैतस्मिन् संवाद-
। यमो राजेति वा अहमेतमुपासे इति । स यो हैतमेवमुपास्ते,

. स्वप्नया—पा०

शारीरः । शरीरे अहमित्यभिमन्यमानः पुरुषः शारीरः । तस्य पुत्र-
लक्षणप्रजोत्पादकत्वरक्षकत्वादिना प्रजापतित्वम् । प्रजया पशुभिः प्रजा-
प्रजया पशुभिश्च प्रकृष्टो जायत इत्यर्थः । शिष्टं स्पष्टम् ॥ १९ ॥

स होवाच—। प्राज्ञः जाग्रद्दशायां प्रज्ञाशाली अयमात्मा एतत्सुप्तः —
सुप्तं यस्य — एतादृशसुप्तिविशिष्टस्सन् — उपरतबाह्येन्द्रिय इति यावत् —
स्वप्नायाचरति येन मनसा विशिष्टस्सन् स्वप्नाय प्रवर्तते स्वप्नात् (स्वाप्नान्?)
[ पश्यति, तत् मनो ब्रह्मोपास इत्यर्थः । यमः — । सर्वेन्द्रिययमयितृत्वात्

स्वप्नायेत्यत्र स्वप्नयेति पाठान्तरम् । 'आङ्याजयारामुपसंख्यानम्' इति (७-१-३९)
वार्तिकात् स्वप्नेनेत्यत्र स्वप्नयेति अयाच् ।

तन्मनो ब्रह्मोपास इति । ननु तमेवाहमुपासे इति पुल्लिङ्गतच्छब्दश्रवणात् प्राज्ञस्या-
ग्रहणं युक्तम् । पूर्वोत्तरवाक्येषु च य एवैषइति यच्छब्दगृहीतस्यैव तमेवाहमुपास
उपास्यत्वेन ग्रहणात् इहापि तादृशस्य प्राज्ञात्मन एवोपासिकर्मत्वे वर्णनीये मनस उपासन-
कथमिति चेत् — उच्यते । अस्ति विशेषः । तथाहि — सर्वेष्वपि पर्यायेषु पुरुषविशेषणा-
मुक्तम् । तद्वदिह, 'यः पुरुषस्तमेवाहमुपासे' इति न श्रूयते । प्राज्ञस्यात्मन उपासना-
स्यात्, यदि अनुपपत्तिर्न स्यात् । यद्ययं प्राज्ञ आत्मा परमात्मा, तर्हि तस्य ब्रह्मत्वं
कमिति तस्याब्रह्मत्वमजातशत्रुविवक्षितमयुक्तं स्यात् । अथ जीवात्मा, तर्हि, य एवैष
पुरुष इति पूर्वपर्यायान्नातिरिच्यते । किञ्च य एवैष इति यच्छब्दप्रतिसंबन्धी चेत्
तच्छब्दः, तर्हि येनेत्यस्य कः प्रतिसंबन्धी । अतः य एवैष प्राज्ञ आत्मा, स एतत्सुप्त-
न मनसा चरति, तदुपासनमहं करोमीत्युच्यते । तमिति पुल्लिङ्गनिर्वाहः कथमिति
मनसो मनःपदेनैव ग्रहणनियमाभावात्, येन करणविशेषेणेत्यर्थवर्णनसंभवादनुपपत्त्य-

सर्वं हास्मा इदं श्रैष्ठ्याय यम्यते' ॥ २० ॥

स होवाच बालाकिः, 'य एवैष दक्षिणेऽक्षन् पुर
मुपासे' इति । तं होवाचाजातशत्रुः, 'मा मैतस्मिन् संवाद
आत्मा [1]अग्नेरात्मा ज्योतिष आत्मेति वा अहमेतमुपासे इ
हैतमेवमुपास्ते, एतेषां सर्वेषामात्मा भवति'।

स होवाच बालाकिः, 'य एवैष सव्येऽक्षन् पुरुषस्त
इति । तं होवाचाजातशत्रुः, 'मामैतस्मिन् संवादयिष्ठाः ।
विद्युत आत्मा तेजस आत्मेति वा अहमेतमुपासे इति । स
मुपास्ते, एतेषां सर्वेषामात्मा भवति' ॥ २१ ॥

1. अग्निरात्मा ज्योतिष आत्मेति—पा०

मनसो यमत्वम्, श्रैष्ठ्याच्च राजत्वं द्रष्टव्यम् । श्रैष्ठ्याय यम्यते ।
सर्वमपि भूतजातं यम्यते । यतत इति यावत् ॥ २० ॥

स ह — आत्मा भवति । दक्षिणाक्षिप्रतिबिम्बे नामाग्निः
दृष्टौ नामाग्निज्योतिरात्मत्वं भवति । सव्याक्षिप्रतिबिम्बे सत्यविद्युतेः
सत्यविद्युत्तेजआत्मत्वं भवति ॥ २१ ॥

भावात् । ननु प्रज्ञाशब्दस्य मनःपरत्वमत्र पूर्वाध्याये दृष्टम् । अतः प्राज्ञ अ
धिष्ठातृदेवताविशेषो गृह्यताम् । येनेति पदमपि तत्परमेव । प्राज्ञ आत्मेत्यत्र प्रज्ञ
स्यात् । बहुत्र तथाश्रवणात् । तथाच सुप्तः येन देवताविशेषेण स्वप्नाय चरति, ए
यः, तमुपासे इत्यर्थोऽस्तु । एवञ्च स इति पदानध्याहारः, एतेषां पुरुषाणां कर्ता
वाक्ये अस्यापि पुरुषत्वेन कीर्तनौचित्यञ्चेति चेत् — अस्तु कामम् । प्रकृतभाष्यर
परतायां नातीव क्लेश इति । ननु बृहदारण्यके शारीरात्ममात्रं कथितम्; न इ
वामाक्षिपुरुषत्रयम् । अतस्तत्रोक्तस्य शारीरात्मन एव चतुर्धा किञ्चिद्रूपेण वि
मतोऽस्तु । अतो न मनःपरोऽयं प्राज्ञात्मपर्याय इति चेत् – न – अन्यत्रोक्तमेवात्र
निर्बन्धाभावात् । अस्तु वा तमिति पदं येनेति प्रागुक्तमनोविशिष्टवेषेण जीवपरम
ब्रह्मोपास इति भाष्यञ्च पुरुषविशेषणतया मनसोपि विवक्षादर्शकम्, न तु पुरु
वारकमिति । (२०)

ो ह बालाकिस्तूष्णीमास ॥ २२ ॥

होवाचाजातशत्रुः, 'एतावन्नु बालाके' इति ॥ २३ ॥

ावद्धीति होवाच बालाकिः ॥ २४ ॥

होवाचाजातशत्रुः, 'मृषा वै किल मा 'संवादयिष्ठाः ब्रह्म ते ॥ २५ ॥

होवाच, 'यो वै बालाके एतेषां पुरुषाणां कर्ता, यस्य वैतत् वेदितव्य इति ॥ २६ ॥

ादिष्ठाः. पा०

---

**णीमास** । उत्तरापरिस्फूर्तेरिति शेषः ॥ २२ ॥

**ावन्नु बालाक इति** । हे बालाके! एतावदेव खलु ते विदित- २३ ॥

**ावद्धीति** । एतावदेव मे विदितमित्युवाचेत्यर्थः ॥ २४ ॥

। **वै** —। **ब्रह्म ते ब्रवाणीति** मृषोक्त्या मां मृषैव **संवादयिष्ठाः** वानसि । एतावन्तं कालमब्रह्मवाद एव प्रवृत्त इत्यर्थः ॥ २५ ॥

किं तत् वेदितव्यं ब्रह्मेत्यत्राह **स होवाच यो वै — वेदितव्य इति** । रणे । त्वया ब्रह्मत्वेनोपदिष्टानामादित्यादिपुरुषाणां यः कर्ता = ते किं विशिष्याभिधीयते; यस्य प्रत्यक्षादिसन्निधापितं चिदचिद्रूपं समस्तं ार्यम् — क्रियत इति व्युत्पत्त्या **कर्म**शब्दः कार्यवचनः — स एव न तु त्वदुपन्यस्ता आदित्यादय इति भावः ॥ २६ ॥

---

**किलेति** । अज्ञस्त्वं कथमभिज्ञ इव मत्संमतिं प्रतीक्षितवानिति भावः । (२५) **पुरुषाणां** कर्तेत्यनेन सर्वदेवस्रष्टृचतुर्मुखग्रहणं मा भूदिति व्यष्टिसमष्टिभूतसर्व- ग्रहणव्यक्तये **यस्य वैतत् कर्मे**त्युक्तम् । **वा**शब्दः **एतेषां पुरुषाणां** कर्तेति ानादरप्रदर्शनार्थः । बालाक्यधिकरणपूर्वपक्षिपक्षे वाशब्दो न युक्तः; किंतु ाणां कर्तेत्युक्तार्थोपपादकपुण्यापुण्यरूपकर्मसत्त्वपरत्वाद् वाक्यस्य । अत एव तत्र, । च कर्म यस्ये' ति **श्रीभाष्यम्** । **यस्य कर्मे**त्यस्य यत्समवेतकृतिविषयभूत- ाणं सृज्यमानमेतत् सर्वं यस्येत्यन्वये तु जगत् यच्छेषभूतमित्येवं षष्ठ्या अपि स्यात् । पूर्वोक्तोऽर्थः स्वरसः । (२६)

**तत उ ह बालाकिः समित्पाणिः प्रतिचक्राम, उपायानीति ।**

**तं होवाचाजातशत्रुः, 'प्रतिलोमरूपमेव स्यात् यत् ब्राह्मणमुपनयेत् (नयीत) । एहि व्येव त्वा ज्ञापयिष्यामीति ॥ २**

**तं ह पाणावभिपद्य प्रवव्राज ॥ २९ ॥**

**तौ ह सुप्तं पुरुषमीयतुः ॥ ३० ॥**

---

**तत उ ह — उपायानीति** । उशब्दोऽवधारणे । हशब्दः ।
एवमजातशत्रुणोक्तो बालाकिः गताभिमानो, 'नीचादप्युत्तमां विद्याम्,' 'उ ब्राह्मणस्याब्राह्मणात् विद्योपयोगः' इति शास्त्रमनुसृत्य क्षत्रियादप्यजातश मुपादित्सुः, 'नानुपसन्नाय ब्रह्मोपदेष्टव्यम्' इति शास्त्रं जानन् समिद्भारहस्त स्सन्, उपगच्छामीति प्रववृते ॥ २७ ॥

**प्रतिलोम — ज्ञापयिष्यामीति** । 'क्षत्रियो ब्राह्मणमुपनयेत' इ तत् विपरीतरूपमेव स्यात् । अतः एहि त्वामुपनयनमन्तरेणैव ब्रह्म विज्ञा प्येव ॥ २८ ॥

**तं ह — प्रवव्राज** । तं बालाकिं पाणौ गृहीत्वा निर्गत इत्यर्थः ।

**तौ ह सुप्तं पुरुषमीयतुः** । तौ बालाक्यजातशत्रू राजभवने सुप्तं पुरुषं प्राप्तवन्तावित्यर्थः । **बालाक्यधिकरणभाष्ये**, 'तौ ह सुप्तं पुरुषमा इत्युदाहृतं वाक्यं बृहदारण्यकगतम्; नैतच्छाखागतम् । अत एव तत्र "तौ ह सुप्तं पुरुषमीयतुः इति श्रुतिः" इत्युक्तम् ॥ ३० ॥

---

**प्रतिलोमरूपमिति** । पण्डितरूपवेदनीयमित्यादाविव अतिशये रूपप्प्रत्ययः प्रतिलोममित्यर्थः । (२८)

**प्रवव्राजेति** संन्यासे प्रसिद्धमपीह तावदविवक्षया प्रयुक्तम् । (२९)

ननु बालाक्यधिकरणस्य कौषीतकिश्रुतिविषयकतायाः प्रागेवोक्तत्वात् तत्र च भाष्यकृता आजग्मतुरित्येव पठितत्वात् कथम् ईयतुरिति पठित्वा व्याख्यायत **बालाक्यधिकरणभाष्ये** इति । (३०)

हाजातशत्रुरामन्त्रयाञ्चक्रे, 'बृहन् (त्) पाण्डरवासः सोम-
॥ ३१ ॥

उ ह तूष्णीमेव शिश्ये ॥ ३२ ॥

त उ हैनं यष्ट्या चिक्षेप ॥ ३३ ॥

तत एव समुत्तस्थौ ॥ ३४ ॥

---

हन् पाण्डरवासः सोमराजन्। 'प्राणो वाव ज्येष्ठः श्रेष्ठश्चे' ति
ागुणेन प्राणस्य बृहत्त्वात् बृहन्नित्यामन्त्रणम्। पाण्डरवासस्त्वं च प्राण-
कें मे वासः' इति प्राणेन पृष्टे, 'आपो वासः' इति अपां प्राणवास-
तासाञ्चापाम्, 'यच्छुक्लम्, तदपाम्' इति शुक्लवर्णाश्रयत्वात् पाण्डरत्वं
सान्नब्राह्मणे, 'अथैतस्य प्राणस्याऽऽपः शरीरं ज्योतीरूपमसौ चन्द्रः'
। चन्द्रसंबन्धप्रतीतेः लक्षणया सोमेति प्राणस्य संबोधनम्। 'प्राणो वै
ते श्रवणात् राजन्नित्यामन्त्र्यत इति व्यासार्यैरुक्तम् ॥ ३१ ॥

उ ह तूष्णीमेव शिश्ये। अनुत्थित एव यथापूर्वमशयिष्टेत्यर्थः ॥ ३२ ॥

त उ हैनं यष्ट्या चिक्षेप। सुप्तं यष्ट्या ताडितवानित्यर्थः ॥ ३३ ॥

तत एव समुत्तस्थौ। दण्डताडनादेव समुत्तस्थौ। न तु प्राणनामा-
त्यर्थः। प्राणनामभिरामन्त्रणेऽप्यनुत्थानप्रदर्शनं प्राणान्यत्वज्ञापनार्थम्।
ामुपरतव्यापारेभ्यः शरीरेन्द्रियेभ्योऽन्यत्वं सुज्ञानमपि; तस्यामपि दशा-
यापारात् प्राणादन्यत्वं ज्ञापनीयमिति। प्राणनामभिरामन्त्रणेऽप्यनुत्थानेन
त्थानेन च जीवस्य प्राणव्यतिरेको दर्शितः ॥ ३४ ॥

---

[ पाण्डरवासः सोमराजन् इति। अत्र कर्तव्यो विचारः सर्वैः बृहदारण्यक-
कारयोर्द्रष्टव्यः। (३१)

ा चिक्षेपेति। 'पाणिनापेषं बोधयाञ्चकार' ति बृहदारण्यकम्। (३३)

**तं होवाचाजातशत्रुः, 'क्वैष एतद्बालाके पुरुषोऽशयिष्ट? क्वै (?) तदभूत्? कुत एतदागात्' इति ॥ ३५ ॥**

**तदु ह बालाकिर्न विजज्ञौ ॥ ३६ ॥**

**तं होवाचाजातशत्रुः, यत्रैष एतद्बालाके पुरुषोऽशयिष्ट, यत्रैतत् ;त(यत?) एतदागात् ॥ ३७ ॥**

---

एवं देहेन्द्रियमनःप्राणव्यतिरिक्तं जीवं प्रदर्श्य ततोऽतिरिक्तं पर ाधयितुमाह **तं होवाच** –। हे बालाके! **एष** पुरुषः अशयिष्ट इत्येतत् ः प्नस्थानप्रश्नः। यद्वा, **एतच्छब्दः** स्वप्नपरः। **अशयिष्टेत्येतत्** प्रत्यया म्। क **एतत्** स्वप्नमकृतेत्यर्थः। सर्वथा स्वप्नस्थानप्रश्नः। **क्व वा** ए ति सुषुप्तिस्थानप्रश्नः। एतच्छब्दस्य नपुंसकलिङ्गत्वेऽपि प्रकृतवाचि ारस्यात् प्रकृतपुरुषशब्दितजीवपरः (स्वम्?)। ततश्च क्व सुप्तोऽभूदि **त एतदागादिति**। अत्राप्येतच्छब्दो जीवपर एव। प्रबोधकालीनजीवो दानं किमित्यर्थः। ततश्च जीवस्य स्वप्नस्थानसुषुप्तिस्थानोद्गमनापादानानि शन्ति। यद्वा — त्रिष्वपि प्रश्नेषु **एतच्छब्दः** सप्तम्यन्तः। एतस्मिन् यर्थः। 'सुपां सुलुक्' इति सुपो लुक्। एतस्मिन् काले क्व स्वाप्नमनु ास्मिन् काले क्व सुप्तः; एतस्मिन् काले कुतो निर्गत इति। एवञ्च त्रया च्छब्दानामैकरूप्यञ्च सिध्यति ॥ ३५ ॥

**तदु ह बालाकिर्न विजज्ञौ**। उत्तरं बालाकिर्न ज्ञात र्थः ॥ ३६ ॥

**तं होवाचाजातशत्रुः यत्रेत्यादि**। उच्यत इति शेषः ॥ ३७ ॥

---

**स्वप्नमनुभूत**मिति पाठे, 'संध्यं स्वप्नं तृतीयं स्थानम्' इति श्रुतिदर्शनात् क्लीब त्वं द्रष्टव्यम्। (३५)

**हिता नाम हृदयस्य नाड्यो हृदयात् पुरीततमभिप्रतिष्ठन्ति**[1] **।**
**[च] सहस्रधा केशस्यापि पातः**[2] **तावदण्व्यः पिङ्गळस्याणिम्ना**
**ं शुक्लस्य कृष्णस्य पीतस्य लोहितस्येति । तासु तदा**
**॥ ३८ ॥**

1. प्रतन्वन्ति । 2. केशो विपाटितः.

---

स्वप्नस्थानप्रश्नं प्रतिवक्ति **हिता नाम — तदा भवति** । आत्मनो हिता-
हिता इति प्रसिद्धाः हृदयसंबन्धिन्यो नाड्यः **हृदयात् पुरीततं** पुरीतदाख्यं
वर्तिमांसपिण्डविशेषमभिप्रस्थिता भवन्ति । हृदये पुरीतति नद्धा भवन्ति ।
यथा केशस्यापि सहस्रधा पातः अतिसूक्ष्मः, **तावदण्व्यः** तथा **अण्व्यः**
पिङ्गळस्य शुक्लस्य कृष्णस्य पीतस्य लोहितस्य अन्नपीतादिरसस्य **अणिम्ना**
पूर्णाः तिष्ठन्ति । अतिसूक्ष्मत्वात् लेशेनापि पूर्णाः भवन्ति । **तासु**
**तदा** स्वप्नकाले आश्रितो भवतीत्यर्थः ॥ ३८ ॥

---

ासु तदा भवतीति । ननु जीवातिरिक्तपरमात्मप्रतिबोधनार्थं प्रवृत्तेन अजातशत्रुणा
देत्यादि पृष्ट्वा व्याख्यानं क्रियताम् । स्वप्नस्थानं किमिति प्रथमप्रश्नः तद्विवरणञ्च
परमात्मनः सुप्तानाधारत्वात्, नाडीनामेव तथात्वात् परमात्मनिरूपणे तदनुपयोगादिति
च्यते । 'य एतेषां पुरुषाणां कर्ता यस्य वैतत् कर्म' त्यनेनैव जीवविलक्षणे ब्रह्मणि
सिद्धे सुषुप्तप्रतिबोधनाद्यर्था प्रवृत्तिरेव किमर्थेति विचारणीयम् । तदुच्यते । बालाकिः
न् पुरुषान् कीर्तयन् शारीरं पुरुषं जाग्रतं सुप्तञ्च पृथक्पृथक् निर्दिदेश । सुषुप्तं तु
ेनायं मन्यते–जाग्रतः पुंसः सुप्तोऽन्यः, व्याघ्रवराहाद्यनेकाभिमानशालित्वात् सुप्तस्य ।
स्वप्ने, व्याघ्रोऽहम्, वराहोऽहम्, महाराजोऽहम्, म॰ाब्राह्मणोऽहमित्येवम् । सुषुप्ति-
वस्य लीनत्वात् श्वासप्रश्वासरूपेण तदाऽवस्थितः प्राण एव सुषुप्तः स्यादिति तस्य
देव सुषुप्तो न गणनीय इति । अतोऽयं बालाकिः प्रतिबोधनीयः, 'एक एवाऽऽत्मा
ुषुप्तीरनुभवति स्थानभेदेन । न च सुषुप्तः प्राणः । तथासति प्राणनामभिरामन्त्रणे
। न चैवम्' इति । तत्र, 'यत्रैतत् सुप्तोऽभूत्, य एष विज्ञानमय' इति जाग्र-
र्शितम् । जागरस्थानापेक्षयाऽतिरिक्तं नाडीस्थानं प्राप्य स एव स्वप्नमनुभवति;
प्राप्य सुप्तिमित्यपदिष्टं भवति । (३८)

**यदा सुप्तः स्वप्नं न कथञ्चन [1] पश्यति, अथास्मिन् प्राण भवति। तदैनं वाक् सर्वैर्नामभिः सहाप्येति ; चक्षुः सर्वै रूपैः स श्रोत्रं सर्वैः शब्दैः सहाप्येति ; मनः सर्वै [2] र्ध्यानैः सहाप्येतीति ॥**

**स यदा प्रतिबुध्यते, यथा [3] अग्नेर्विस्फुलिङ्गाः विप्र एवमेवैतस्मादात्मनः प्राणाः यथायतनं विप्रतिष्ठन्ते । प्राणेभ्यो देवेभ्यो लोकाः ॥ ४० ॥**

1. कञ्चन. 2. ध्यातैः. 3. अग्नेर्ज्वलतो विस्फुलिङ्गाः.

सुषुप्तिस्थानप्रश्नस्योत्तरमाह **यदा सुप्तः—सहाप्येतीति** । **सुप्तः**— क्तः—स्वपन् सन् यदा उपरतस्वप्नदर्शनो भवति—यदाशब्दानुरोधात् तदाश तव्यः—**अथ** स्वप्नानन्तरं **अस्मिन् प्राणे** प्राणशरीरके परमात्मनि **एकधा** एकधाभावो नाम — जाग्रदाद्यवस्थाजनितदेहात्माभिमानकृतरागद्वेषादिलक्षण दिराहित्येनावस्थानम् । ‘ सर्वाणि ह्वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणशब्दस्य परमात्मनि प्रचुरप्रयोगात्, वाजसनेयके समानप्रकरणे, ‘य एषो आकाशस्तस्मिन् शेते ’ इति आकाशशब्दितस्य सुषुप्त्याधारत्वश्रवणाच्च प्राणशब्दयोः परमात्मपरत्वमन्तरेणाविरोधासंभवात्, ‘सता सोम्य तदा संपन्नो ‘सति संपद्य न विदुः’, ‘ प्राज्ञेनात्मना संपरिष्वक्तः ’ इति परमात्मनः सुषुप्त्य श्रुत्यन्तर(रे?)श्रवणाच्च प्राणशब्दो योगेन वा अपर्यवसानवृत्त्या वा ब्रह्मपरः । बुद्धिस्थत्वात् **अस्मिन्** इति निर्देशोऽप्युपपद्यते । **अथ (तदा?)** तदुक्तः परमात्मानम् अपियन्तं जीवं वागादीन्द्रियाण्यपि [तत्] स्वकार्येण सहापियन **नाम**शब्दो नामाभिलपनपरः । **रूप-शब्द**शब्दौ तज्ज्ञानौपयिकव्यापारपरौ शब्दादीनां सुषुप्तौ लयासंभवात् । इन्द्रियव्यापारोपरतेरेव सुषुप्तिशब्दार्थत्वात्

उद्गमनापादानप्रश्नस्योत्तरमाह **स यदा — लोकाः** । जीवप्र अग्नेर्विस्फुलिङ्गा इव एतस्मात् परमात्मनः प्राणशब्दिता जीवाः यथास्थानं भवन्ति । तेभ्यश्च देवशब्दितानि इन्द्रियाणि, एतेभ्यश्च लोकशब्दितानि भवन्तीत्यर्थः ॥ ४० ॥

**यथाग्नेरिति** । अत्र, ‘ यथाग्नेर्ज्वलतः सर्वा दिशो विस्फुलिङ्गाः ’ इति श्रीभाष्यपाठ

**तद्यथा क्षुरः क्षुरधाने [1]अवहितः स्यात्, विश्वम्भरो वा विश्वम्भर
ाये, एवमेवैष प्राज्ञ आत्मा इदं [2]शरीरमात्मानमनुप्रविष्टः आ लोमभ्य
नखेभ्यः ॥ ४१ ॥**

**तमेतमात्मानमेते आत्मानोऽन्ववस्यन्ति ॥ ४२ ॥**

**यथा श्रेष्ठिनं स्वाः ॥ ४३ ॥**

1. धाने हितिः. 2. शरीरमनुप्रविष्ट.

---

**तद् यथा क्षुरः — आ नखेभ्यः** । क्षुरो धीयतेऽस्मिन्निति क्षुरधा
ोशः । तस्मिन् यथा क्षुरः **अवहितः** पिहितप्रविष्टः, — विश्वं बिभर्ति वैश्वा
न्यादिरूपेणेति **विश्वंभरोऽ**ग्निः — तस्य **कुलाये** नीडे —, एवमेवैष परमात्म
पुरोवर्तिशरीरम् आलोमभ्यः आ नखेभ्यः, व्याप्त इत्यध्याहारः । व्याप्त
**मानं** जीवात्मानम**नुप्रविष्टः** अन्तर्यामितयाऽनुप्रविष्ट इत्यर्थः। तादृशस्य सुषुप्त्या
बोद्गमनापादानत्वे संभवत इति भावः । यद्वा इदं वाक्यं जीवशरीरपरमे
त्येयम् । **आत्मानमिदं शरीरम्** आत्मत्वेनाभिमन्यमानमिदं शरीरम् आलोमभ्य
खेभ्यः जीवरूपेण प्रविष्ट इत्यर्थः ॥ ४१ ॥

**तमेतमात्मानमितर आत्मनोऽन्ववस्यन्ति** । एतादृशं परमात्मानम् इत
ः **अन्ववस्यन्ति** अनुवर्तन्ते ॥ ४२ ॥

तत्र दृष्टान्तमाह **यथा श्रेष्ठिनं स्वाः** । यथा श्रैष्ठ्यवन्तं स्वाः ज्ञात
वर्तन्ते ॥ ४३ ॥

---

**अवहितः** अधस्तात् निहितः, अन्तर्हित इति वा । **शरीरमात्मान**मित्युक्तयोर्भेद
ः अनुप्रविष्ट इत्यत्रान्वयायोगात् शरीरं व्याप्त आत्मानमनुप्रविष्ट इत्यध्याहारेण प्रथ
ना । (४१)

**श्रैष्ठ्यवन्त**मिति । श्रेष्ठिपदं वैश्ये रूढं तदर्थविवक्षयाऽप्यन्वयमर्हति । अथापि त
ग्रहणे कारणाभावात् श्रैष्ठ्यवन्तमित्यर्थवर्णनम् । (४३)

तद् यथा श्रेष्ठी स्वैर्भुङ्क्ते, यथा श्रेष्ठिनं स्वाः भुञ्जते प्राज्ञ आत्मा एतैरात्माभिर्भुङ्क्ते। यथा श्रेष्ठी स्वैः, एवं वा ए ऽन्ववस्यन्ति ॥ ४४ ॥

स यावद्ध वा इन्द्र एतमात्मानं न विजज्ञौ, त अभिबभूवुः। स यदा विजज्ञौ, अथ हत्वाऽसुरान् विजि देवानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं परीयाय।

सर्वान् पाप्मनोऽपहत्य सर्वेषां भूतानां श्रैष्ठ्यं स्वारा

---

तद् यथा श्रेष्ठी —। यथा कश्चित् प्रभुः भोगोपकरणभूतैः भोगान् भुङ्क्ते, यथा स्वाश्च बन्धवः तं प्रभुमैश्वर्यादिसमग्रमनुभूय तद्दत्ता चोपजीव्य हृष्यन्ति—एवमेवायं परमात्मा स्वोपकरणभूतैर्जीवात्मभिर्लील ते चात्मानः परमात्मदत्तभोगोपकरणाः सर्वैश्वर्यादिगुणविशिष्टं तम भवन्तीत्यर्थः। यथा वा स्वाः श्रेष्ठिनं भुञ्जन्तीति पाठे, यथ स्वकीयैर्भृत्यादिभिः भोगसाधनानि उपहरद्भिः हेतुभिः भोगान् भुङ् भोगसाधनानि उपहरन्तः प्रधानपुरुषं पालयन्ति — एवमित्यर्थः। 'भुज भुजेः परस्मैपदित्वादिति ध्येयम्। ईदृशं भोक्तृत्वं जीवद्वारा योजनीयम् ॥ ४४ ॥

स यावत्—य एवं वेद। इन्द्रो ब्रह्मविद्यालाभात् प्राग इमां ब्रह्मविद्यां लब्ध्वा असुरहननेन विजयी सर्वदेवाधिपत्यं सर्वदेवश्रैष्ठ शब्दिताकर्मवश्यत्वलक्षणं मोक्षं च प्राप। अतोऽन्योऽप्येवंवित् स सर्वभूतश्रैष्ठ्यं पापापहतिपूर्वकमकर्मवश्यत्वलक्षणं स्वाराज्यशब्दितं म तीत्यर्थः।

---

तद्यथा श्रेष्ठीति। अत्र, तद्यथा श्रेष्ठी स्वैर्भुङ्क्ते यथा वा स्वाः श्रेष्ठिनं भु मेवैष प्रज्ञात्मा एतैरात्मभिर्भुङ्क्ते, एवमेवैत आत्मान एनं भुञ्जन्ति' इति श्रीभाष्यप

य एवं वेद । य एवं वेद ॥ ४५ ॥

ओं वाङ्मे मनसीति शान्तिः ।

इति ऋग्वेदे कौषीतक्युपनिषदि चतुर्थोऽध्यायः ॥

इति कौषीतकिब्राह्मणोपनिषत् ॥

ओं नमो वासुदेवाय ।

शुभमस्तु

---

व्यासार्यैस्तु — "सर्वान् पाप्मनोऽपहत्येत्यनेनापहतपाप्मत्वादिगुणाष्टक-
जरादीनामपि पाप्मान्तर्गतत्वात् । उक्तं हि वाक्यकारैः, 'स्युः पाप्मानः
मृत्युशोकादयः संख्यातत्वात्' इति । **स्वाराज्यम्** स्वाधीनत्वम् । अतः
ं सत्यसंकल्पत्वञ्चोक्तं भवति । अतः (तत्?) स्वाराज्यं संसारिभ्योऽस्य
त् **आधिपत्यम्** । **अधिपतिः** परमात्मा; 'सर्वस्याधिपतिः' इति श्रुतेः ।
**आधिपत्यम्** । गुणाष्टकं हि ब्राह्मसंबन्धितया ब्राह्ममुच्यते, "ब्राह्मेण
" इति । अतो ब्रह्मसंबन्धितया तत्साधर्म्यरूपं संसारिभ्यः श्रेष्ठतारूपं यत्
, तदेतीति श्रुतेरर्थः" इत्युक्तम् । [**य एवं वेद** ?।] अन्योऽपि य
षदं वेद, सोऽपि ईदृशं फलमाप्नोतीत्यर्थः ॥ ४५ ॥

तत् प्रकरणं समन्वयाध्याये चतुर्थपादे चिन्तितम् । तत्र हि—'यो वै
एतेषां पुरुषाणां कर्ता यस्य वैतत् कर्म स वै वेदितव्यः' इत्यत्र [यः?]
देपुरुषाणां कर्ता, तत्कर्तृत्वनिर्वाहकञ्च पुण्यपापादिलक्षणं कर्म यस्यास्ति, स
इत्यर्थप्रतीतेः, कर्मशब्दस्य पुण्यपापयोः रूढत्वात्, सुप्तपुरुषागमनयष्टिघातो-
नाञ्च जीवलिङ्गत्वात्, 'तद्यथा श्रेष्ठी स्वैर्भुङ्क्ते' इति वाक्यप्रतिपाद्य-
रेपाल्यत्वयोर्जीव एव संभवात् जीव एव प्रकरणप्रतिपाद्य इति प्राप्ते —
"जगद्वाचित्वात्" । 'यस्य वैतत्कर्म' त्यत्र कर्मशब्दस्य यद्यपि पुण्य-
ढिरस्ति । तथापि चलनेऽपि रूढ्यविशेषेण रूढयोः परस्परकलहायमान-

---

न्योऽपि य एतामिति । इदं य एवं वेदेत्यभ्यासस्यार्थवर्णनमिव । अभ्यासस्य
त्र सर्वत्र प्रसिद्धमिहापि संभवति ।

त्वेनार्थनिर्णयासामर्थ्यात् । एतच्छब्दस्य प्रत्यक्षादिसंनिधापितज
तत्समानाधिकृतकर्मशब्दस्यापि, क्रियत इति कर्मेति व्युत्पत्त्या ज
चितम् । ततश्चायमर्थः — त्वदुक्तानामादित्यादिपुरुषाणां यः कर्ता,
सर्वमपि जगत् यस्य कार्यम्, स एव वेदितव्यः । ततश्च नात्र जो
यदि हि पुण्यापुण्यलक्षणकर्मसंबन्धी जीवोऽत्र वाक्ये प्रतिपाद्यः
आदित्यादिषु पुरुषवादिनं बालाकिमब्रह्मवादित्वेन प्रत्याख्यातवता
स्वयमब्रह्मण उपदेश्यत्वासंभवात् [असामञ्जस्यं स्यात् ?] । अतो ना
पुण्यपापवचनः; अपितु जगद्वचनः । "जीवमुख्यप्राणलिङ्गान्नेति
व्याख्यातम्" । यष्टिघातोत्थापनभोक्तृत्वादिजीवलिङ्गात्, 'अ
एवैकधा भवती'ति प्राणशब्देन प्राणभृतं निर्दिश्य तत्र करणग्र
श्रवणात्, प्राणभृत्त्वस्य जीवलिङ्गत्वाच्च जीव एवात्र प्रतिपाद्यते । न च
मुख्यप्राण एवार्थः; प्राणनामभिरामन्त्रणाश्रवणेन मुख्यप्राणव्यतिरिक्तत्व
मुख्यप्राणस्य एतत्प्रकरणप्रतिपाद्यत्वासंभवेन प्राणशब्दस्य प्राणसहचा
त्वस्यैव युक्तत्वात् । ततश्च यष्ट्यादिजीवलिङ्गात् प्राणशब्दसंकीर्तना
जीव एवात्र प्रतिपाद्यत इति चेत्—तद्व्याख्यातम् । प्रतर्दनविद्याया
प्रकरणे ब्रह्मलिङ्गानि चिदचिल्लिङ्गानि चोपलभ्यन्ते, तत्र चिदचिल्लिङ्गा
च्छरीरकान्वयसंभवात् चेतनाचेतनशरीरकब्रह्मोपासनं विधीयते' इ

---

**जगद्वचनत्वमेवोचित**मिति । नात्र कर्मपदं जगदित्यर्थकम्; अप्रसि
जगति **एत**त्पदेनोक्ते तद्गतकार्यत्ववाचि । तथाच **भाष्यम्** "कृत्स्नस्य जगतः का
एतच्छब्द एव सर्वजगत्परः । तद्गतकार्यत्वं कर्मेत्य**नेनो**च्यते, सर्वं यस्य का
कारेण पुण्यापुण्यपरत्वेऽनौचित्यातिशयो ज्ञाप्यते । तत्पक्षे हि पुरुषाणां कर्तेत्युक्तं
अस्वरसम् – पुरुषसृष्टिसंकल्पाश्रयत्वाभावात्; पुरुषोत्पत्तिपर्यवसायिपुण्यादिकर्मकर्तृ
सत्त्वात् । तावदर्थविवक्षायां **यस्य वैतत्कर्मे**ति पुनरुक्तं स्यात् । यस्य कर्मेत्येवाल
वैयर्थ्यञ्च । वाशब्दश्चानन्वितः; चशब्दस्यैव युक्तत्वात् । एवमत्र भाष्ये, 'यद
तथापि' इति प्रयोगस्वारस्यात् पुण्यापुण्ययोः रूढावप्यनतिसंमतिराविष्क्रियते;
रावश्यकत्वेन प्रकरणाद्यनुरोधेन कर्मत्वेन रूपेणैव तद्विशेषग्रहणसंभवादिति ।

**प्राणशब्देने**ति । अत्र प्रकरणे प्राणनामभिरामन्त्रणरूपं प्राणलिङ्गं प्रथमम
'प्राण एवैकधा भवती' ति प्राणशब्दश्च । तत्र प्रथमस्य आत्मनि प्राणव्यतिरि

नन्यथासिद्धजीवलिङ्गमस्ति चेत्—तच्छरीरकब्रह्मोपासनार्थः तन्मध्यवर्तिजीवे
ः। अत्र च प्रकरणे उपक्रम एव, 'मृषा वै मा संवादयिष्ठाः' इ
ह्मवादप्रत्याख्यानदर्शनात् पापापहतिपूर्वकस्वाराज्यरूपब्रह्मविद्यैकान्तफलेनोपस
त् प्रकरणस्य ब्रह्मपरत्वेन निश्चितत्वात् मध्ये जीवोपदेशस्तच्छरीरकतया ब्रह्मो
नार्थ इत्यध्यवसीयत इत्यर्थः। "अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्याम
के"। यष्टिघातेन जीवसंबोधनं जीवातिरिक्तब्रह्मस्वरूपप्रतिबोधनार्थमि
निराचार्यो मन्यते। कुतः? प्रश्नव्याख्यानाभ्याम्=प्रश्नप्रतिवचनाभ्याम्। यष्टि
नापि जीवप्रतिबोधनानन्तरं, 'क्वैष एतद्बालाके पुरुषोऽशयिष्ट क्वैतदभूत् कु
गात्' इति जीवसुषुप्त्याधारप्रश्नस्य, 'अथास्मिन् प्राण एवैकधा भवति' इ

---

क्षेणोऽपीष्ट। तेन प्राणव्यतिरेकसिद्धावपि जीवत्वं न सिद्ध्यति। अतो द्वितीयग्रहणम्। न
ब्दस्य जीवलिङ्गत्वेन वर्णनं पूर्वपक्षीयं चेत्, 'जीवलिङ्गान्नेति चेत्' इत्येतावदेवालमि
—सत्यम्। सूत्रकारः, 'जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यात्—' इति प्रागुक्त
त्यभिज्ञानसंपत्तिसौकर्याय पूर्वपक्ष्याशयं जीवमुख्यप्राणलिङ्गादिति पूर्वशब्दप्रयोगेणानुवद
भाव्यम्। न हि प्राणस्य प्रकरणप्रधानप्रतिपाद्यता संभवति, 'तद्यथा श्रेष्ठी' त्याद्युक्तभोक्
त्वादेरनन्वयात्।

**जैमिनिराचार्यो मन्यत** इति। नन्वत्र पूर्वसूत्रे जीवशरीरकब्रह्मोपासनार्थं जीवो
इति स्वमतं कथयन् सूत्रकारो यदि जैमिनिमतं पश्चात् निर्दिशति, तर्हि कतरद
्। द्वितीयपादे वैश्वानरविद्यायामग्निशरीरकपरमात्मोपासनार्थमग्निशब्द इत्युक्त्वा, 'साक्षा
विरोधं जैमिनिः' इति योगार्थपक्षमुपचिक्षेप। तत्र सूत्रकारपक्षमेवादृत्य, जैमिनिमतप्रदर्श
दुदाहरणान्तरविषयतत्परिग्रहाभिप्रायेणेति वर्णयामः। न ह्यत्रापि तद्वत् स्थलान्तरे जीवो
त्र जीवव्यतिरेकप्रदर्शनार्थताव्युत्पादनायेह जैमिनिमतोक्तिरिति शक्यं वक्तुम्; 'अपि चै
इति प्रकृतस्थल एव जैमिनिमतग्राह्यतायामुपष्टम्भकवर्णनात्। अत्र जैमिनिमते
मिति चेत्, तर्हि पूर्वसूत्रमिदं सूत्रञ्च, 'तद् व्याख्यात' मिति भागत्यागेन एकसूत्रत
व्यं भवेत् इति चेत्—उच्यते। अत्र पूर्वसूत्रेण जीवमुख्यप्राणोभयविषयेऽपि विशिष्ट
पक्ष उक्तः, अनेन सूत्रेण विशिष्टोपासनमुपेक्ष्य जीवादिव्यतिरेकप्रदर्शनार्थस्तदुपदेश इ
तरमुच्यते इति केषांचिन्निर्वाहः इह प्रकाशिकायामादृतः। नन्वेवं कतरन्मतं भाष्यमि
परिहार्येति चेत्—उच्यते। जैमिनिमतमेवेह सूत्रकारस्यापि गूढमभिमतम्। पूर्वसूत्रे
तरकथनञ्च तस्यापि स्थलान्तरे समादरणीयत्वमस्तीति ज्ञापनाय। वैश्वानराधिकरणे जैमि
हणं स्थलान्तरे उपयोगाभिप्रायेण; इह स्वपक्षग्रहणं तदभिप्रायेणेति विशेषः। दे
समाधानस्य प्रागेवोक्ततया पूर्वपक्षः प्रायो नोदियादिति ज्ञाप्यते। तदनन्तरञ्च ताद

समाधानमिहासंभावितमिति पुनः पूर्वपक्षिशङ्कायां प्रकारान्तरेण समाधानं
प्रदर्श्यते । कथं तदिहासंभावितमिति चेत् — यत्र जीवादौ परमात्मवा
दिना परमात्मधर्मान्वयप्रतीतिः, तत्र विशिष्टविवक्षा । इह तु, 'कैष
गात्', 'एतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते' इति व्यधिकर
अतो विशिष्टोपासनमसंभावितमिति । एवं सूत्रद्वयेन पक्षद्वयनिर्देशश्च
दर्शितः —

"इत्थं जीवातिरिक्ते प्रकरणनियते तत्र यज्जीवमुख्य-
प्राणाख्यानं न तेन क्षतिरिह च तथा तद्विशिष्टेप्यु
प्राणस्य प्राणभाजोऽप्यधिकरणतया वाजिवाक्योक्तरीत्य
ब्रह्मज्ञप्त्यै तदन्यप्रकथनमिति हि स्थापना सार्वभौ

अत्र श्लोके पूर्वार्धेन विशिष्टोपासनमुक्त्वा तद्विवरणमेवोत्तरार्धेन
वाक्यम् अन्तर्यामिब्राह्मणम् । तृतीयपादे, 'ब्रह्मोच्यते' इति शेषः । 
रीत्या इह प्राणजीवविशिष्टतया ब्रह्मोच्यत इति तदर्थः । एवं ब्रह्मज्ञप्त्यै त
विद्यायामिवेहापि विशिष्टोपासनसंभवात् एषा स्थापना सार्वभौमीति 
सारेणार्थः ।

चिन्तामणौ यथावस्थितवाक्यभ्रंशात् तत्रतत्र वाक्यान्तरप्रक्षेपशङ्कया
प्रवृत्तायां **पदयोजनायां** पूर्वार्धे विशिष्टोपासनरूपमेतदधिकरणद्वितीयसू
सूत्रप्रमेयमुत्तरार्धे । वाजिवाक्यं तावत् 'अपि चैवमेके' इति सूत्रखण्ड
त्वन्तर्यामिब्राह्मणम् । तथाच तत्र प्राणजीवकथनं प्राणजीवाधिकरणतया 
नार्थम् । अयमत्कृष्टः परिहार इति तदर्थ इत्युक्तम् । तत् सिद्ध
'जीवोपदेशः तच्छरीरकब्रह्मोपासनार्थं इत्यध्यवसीयते' इति वर्ण्यत इ

अत्रेदं बोध्यम् — श्रीभाष्ये द्वितीयसूत्रस्य जीवविशिष्टब्रह्मोपासन
तम् । प्राणशरीरकब्रह्मोपासनमिह प्रकरणे संभवतीति **तेन सूत्रेण** क
सूक्तिमापाततः पठन्तः सर्वे संमन्येरन् । वस्तुतः सूक्तिशैलीमवदधाने
द्वितीयसूत्रभाष्यम् "तत्परतया वर्णनीयानीति" इत्यन्तेन समाप्तम्; त
त्यादि "इत्यत्राह" इत्यन्तं तृतीयसूत्रावतरणभूतमिति । अतश्च प्राणशरीर
न भाष्यकृता द्वितीयसूत्रविवक्षिततया कण्ठोक्तम् । किन्तु तृतीयसूत्रोत्था
संभवमात्रेणाऽऽविष्कृतमित्येतदेव । जीवविशिष्टोपासनं तु नतराम् । 
किमिति चेत् — न विशिष्टोपासनं वाक्यविवक्षितमिति तत्प्रमेयम्;
प्रकरणे निश्चितत्वात् जीवादिलिङ्गं श्रूयमाणमपि तच्छेषतया नेयमित्येतदे
"**तत्परतया वर्णनीयानी**" ति । अत्र च **श्रुतप्रकाशिका**, "न
देष्टव्यमिति भावः" इति । अथ च, शेषतया वर्णनं नाम विशिष्टोपासनप

ति कृत्वा तस्य प्राणविषये संभवेऽपि जीवविषये असंभवं विमृशता शङ्कायां क्रियमाणाया
नातिरिक्तप्रकारेण शेषतया वर्णनमुपपादयितुं तृतीयसूत्रमिति ।

ननु तर्हि द्वितीयसूत्रे, 'तद् व्याख्यातम्' इति किमर्थम्? तद् विहाय द्वितीयतृतीय
रेकसूत्रतया पठनमेव पर्याप्तम् । न च प्रकृतस्थले प्रकारान्तरेण निर्वाहेऽपि उदाहरणान्त
शेषोपासनमपि भवतीति ज्ञापनार्थं सूत्रभेद इति वाच्यम् — इन्द्रप्राणाधिकरणे विशिष्टोपासन
ोक्तत्वात् इह प्रकारान्तरेण निर्वाहे दर्शिते, यत्र यत्संभवः, तत्र तद्ग्रहणमित्यस्य ज्ञाय
या पृथक्सूत्रवैयर्थ्यात् । अत एव प्राणविषये विशिष्टोपासनसंभवसूचनार्थं पृथक्सूत्रप्रणयन
पे न मन्तव्यम् — इन्द्रप्राणाधिकरणमिदञ्च पश्यतां यथासंभवं तत्तद्ग्रहणस्य स्वत
ति चेत् — उच्यते । इन्द्रप्राणाधिकरणे, 'उपासात्रैविध्यात्' इत्युपासनपरतया निर्वा
तत्र संभवाभिप्रायेण कथनेऽपि तदधिकरणस्य विशिष्टोपासनेनैव निर्वाहवर्णने न तात्पर्यम्
यत्र यथा संभवति तत्र तथा शेषतया निर्वाहवर्णन एवेति ज्ञापनार्थमेव, 'तद् व्याख्यातम्
ाठित्वा पृथक्कृतम् । अत्र संभवन्निर्वाहप्रकारोपपादनार्थञ्च तृतीयसूत्रम् । 'अन्यार्थं तु
ायमाशयः—प्रकरणस्य जीवपरत्वं शङ्कमानेन यथा तत्र प्राणनामभिरामन्त्रणादेः प्राणलिङ्गस्
ेरिक्ततया जीवज्ञापनपरत्वमाशङ्क्यते, तथा ब्रह्मपरत्ववादिना जीवलिङ्गस्य जीवातिरिक्त
पनपरत्वं हि सुवचमिति ।

एवञ्च, 'अथास्मिन् प्राण एवैकधा भवती'ति वाक्यम् अस्मिन् इति प्रकरणिनं परमा
भुवत् परमात्मनिष्ठे मुख्यप्राणे एकधाभावपरं वा, प्राणभृति एकधाभावपरं वा, प्राणशरीरे
मनि एकीभावपरं वा, 'प्राणस्य प्राण' मित्युक्तरीत्या पुष्कलप्राणनव्यापाराश्रये परमात्मनि
ावपरं वेति विमर्शे, अत्र स्वप्नोद्गमनयोरिव सुषुप्तावेकधाभावस्यास्य जीवकर्तृकताया ए
तः, 'यदा सुप्तः स्वप्नं न कथञ्चन पश्यती'ति वाक्यतश्च सिद्धत्वात् करणग्रामस्यैकधाभावं
ार्येत इति जीवकर्तृक एकीभावोऽयं परमात्मन्येवेति निश्चये जाते, प्राणशरीरकपरमात्म
प्यौचित्यादुपेक्षितुं युक्तम् । समानप्रकरणे बृहदारण्यके, 'य एषोऽन्तर्हृदय आकाशस्तस्मिन
इत्यत्र आकाशशब्दो न हि भूताकाशविशिष्टपरमात्मवाची, भूताकाशे जीवशयनाभावात्
आ=समन्तात् काशत इत्युक्तपरमात्मवाची । तद्वदिहापि प्राणशब्दो न मुख्यप्राणविशिष्ट
मुख्यप्राणे जीवस्यैकीभावाभावात् । किन्तु प्राणनव्यापारविशिष्टपरमात्मवाचीति पर्यालोचन
् । अस्मिन् प्राण एवेत्यस्य अस्मिन्नेव प्राणे, न तु मुख्यप्राणे अन्यत्र वेत्यर्थः । प्राणनप्र
मनि सुषुप्तत्वादेवायं जागरप्रयासायासपरिहारं लभत इति भावः ।

अस्तु तावदिदं कथमपि । सूत्रभाष्ययोराशयस्तावत् प्रागुक्तो धार्यः । एवं 'तद
ात' मिति इन्द्रप्राणाधिकरणातिदेशकरणात् इदमधिकरणं तदुपरि अधिकाशङ्कया प्रवृत्त
ं सूच्यते । अधिकाशङ्कापरिहारप्रकारौ च श्रुतप्रकाशिकायां दर्शितौ, "प्रतर्दनविद्याया
जीवलिङ्गावगमः । महावाक्यस्वारस्यं तु परमात्मपरत्वे । इह तूपक्रमोपसंहारमध्ये
ङ्गावगमात् अत एव परमात्मनः चिदचिद्विशिष्टतापरत्वाभावेनोपासात्रैविध्याप्रतिपत्ते

परमात्मवाचिप्राणशब्देन प्रतिवचनदर्शनाच्च जीवातिरिक्तब्रह्मप्रतिबोधनशेषतं
न्यासः । न तु तस्यैव शेषितया । ननु, ' क्वैतदभू'दित्येतच्छब्देन न
धीयते ; येन तत्प्रतिपादनं परमात्मप्रतिपत्तिशेषभूतं स्यात् । अपि तु
करणजातमभिधीयते । एतत् करणजातं सुषुप्तौ क्व लीनम् ; प्रबोधव
उत्थितमिति प्रश्नः — ' अथास्मिन् प्राण एवैकधा भवती'ति प्राणः
प्राणभृति लय इति प्रतिवचनतात्पर्यञ्च किं न स्यादिति चेत्, तत्राह:
चैवमेके " । एके = वाजसनेयशाखिनः प्रश्नप्रतिवचनयोः जीवसुषुप्त्या
स्पष्टमामनन्ति । ' य एष विज्ञानमयः पुरुषः क्वैष तदाभू'दिति, ' य
आकाशस्तस्मिन् शेते ' इति च । अतो जीवप्रतिपादनस्य परमात्मप्रतिपा
परमात्मैवात्र प्रकरणे प्रतिपाद्यः ; न जीव इति स्थितम् ॥ ४५ ॥

---

प्रातर्दनन्यायानवकाश इत्यधिकाशङ्का । त्रिविधोपासनाभावेपि जीवातिरिक्तब्रह्मबोधः
संभवादस्त्यवकाश इत्यनन्तरसूत्रे विवक्षितोऽधिकः परिहारः " इति । दर्शितभाष्
प्रकाशिकाग्रन्थानुरोधेन च अन्यत् वाक्यजातं नेयम् ।

नन्वेवं विशिष्टोपासनपरत्वं द्वितीयसूत्रे न विवक्षितश्चेत् — अधिकरणसाराव
कथम् — उच्यते । बहुषु तालकोशेषु अत्र श्लोके द्वितीयः पाद एवं पठ्यते, '
न तेन क्षतिरिह न तथा तद्विशिष्टेऽप्युपासा " इति । व्याख्यानेष्वदृष्टोऽपि बहुता
नऽघटितः पाठः समुचितो न सहसा प्रतिक्षेपमर्हति । तदयमर्थः—जीवापेक्षयोक्त
प्रकरणार्थतया स्थिते सति जीवमुख्यप्राणाख्यानं स्थितमपि न क्षतिकरम् । तावता
करणोक्तरीत्या जीवविशिष्टोपासनं विवक्षितमिति न मन्तव्यम् । तथा = स्वरूपेणोप
र्दनोपसनवच्च तद्विशिष्टेऽप्युपासा नेह भवति । किन्तु वाजिवाक्ये आकाशादिपदव
ब्रह्माधारकत्वं यथोक्तम्, तथेहापि प्राणजीवाधारतया ब्रह्मज्ञापनार्थमेव तत्कथनम् ।
ब्राह्मणोक्तरीत्या प्राणजीवाद्याधारतायाः ब्रह्मणि सत्त्वात् तद्रूपेण ब्रह्मज्ञापनार्थमे
कथनमिति इन्द्रप्राणाधिकरणार्थस्थापना चेत् क्रियते, सा सार्वभौमी हि । प्रतर्दन
बालाकिविद्याभूमावपि सा सुखमवतरतीति । श्लोके **प्राणस्ये**त्यादि **स्थापने**त्यन्ता
करणार्थस्थापनापरम् । **वाजिवाक्यपदं** चिन्तामणिग्रन्थ इवान्तर्यामिब्राह्मणपरम् । स्
प्रकृताधिकरणविषयवाक्येऽपि तदतिदेशसंभव उच्यत इति ।

एवञ्च द्वितीयसूत्रस्य विशिष्टोपासनपरतयाऽत्र योजनं क्रियमाणं यथाश्रुतानुर
विमर्शे औदासीन्येन सुखग्राह्यार्थमात्रसंग्रहदृष्ट्येति ॥

क्षेमाय यः करुणया क्षितिनिर्जराणां भूमावजृम्भयत भाष्यसुधामुदारः ।
वामागमाध्वगवदावदतूलवातो रामानुजः स मुनिराद्रियतां मदुक्तिम् ।।

इति कौषीतक्युपनिषत्तुरीयाध्यायप्रकाशिका ।

इति

श्रीमत्ताताचार्यचरणारविन्दचञ्चरीकस्य वात्स्यानन्तार्यपादसेवा-
समधिगतशारीरकमीमांसाभाष्यहृदयस्य परकाल-
मुनिपादसेवासमधिगतपारमहंस्यस्य

**श्रीरङ्गरामानुजमुनेः कृतिषु**

**कौषीतकिब्राह्मणोपनिषत्प्रकाशिका**

संपूर्णा ।।

श्रीरस्तु ।।

**श्रीमते रङ्गरामानुजमहादेशिकाय नमः**

---

सचन्द्रलोकभोगोक्ता मुक्तिः पर्यङ्कविद्यया ।
ऐहिकामुष्मिकश्लिष्टा मुक्तिः प्रातर्दनीगता ।।

केवला मुक्तिरन्ते च प्रोक्ता बालाकिविद्यया ।
मुख्यप्राणस्य साक्षस्य मध्ये वैभवमीरितम् ।।

इत्थमीशाद्युपनिषत्परिष्कारविधायिना ।
वेदान्तलक्ष्मणाभिख्ययोगीन्द्राङ्घ्रियब्जसेविना ।।

रङ्गलक्ष्मणयोगीन्द्राल्लब्धवेदान्तसंपदा ।
विविधग्रन्थनिर्माणसिद्धसाधुप्रसत्तिना ।।

वीरराघवसंज्ञेन वात्स्यसच्चक्रवर्तिना ।
कौषीतकिश्रुतिशिरःपरिष्कारः क्रमात् कृतः ।।

इति वात्स्यसच्चक्रवर्तिवीरराघवाचार्यकृतः

**कौषीतक्युपनिषद्भाष्यपरिष्कारः**

श्रीमते हयवदनपरब्रह्मणे नमः

श्रीरस्तु ।। शुभमस्तु ।।

— o —

श्रीः

# कौषीतक्युपनिषदर्थसंग्रहकारिकाः



कौषीतकिब्राह्मणोपनिषदृग्वेदसंश्रिता ।
अध्यायेषु चतुर्ष्वत्र प्रथमे प्रतिपाद्यते ॥ १ ॥

पर्यङ्कविद्या यन्निष्ठ इष्टिकृच्चन्द्रलोकभाक् ।
अनुभूय फलं चन्द्रविसृष्टस्तत्त्वभाषणात् ॥ २ ॥

देवयानेन संप्राप्य ब्रह्मलोकमरं ह्रदम् ।
विरजां चातीत्य पञ्चशत्या चाप्सरसां तदा ॥ ३ ॥

प्रत्युद्गतः सोपहारं दिव्यरूपः परिष्कृतः ।
तिल्यवृक्षादिकं प्राप्य क्रमाद् गन्धादिशोभितः ॥ ४ ॥

द्वारपापद्वादासब्रह्मस्थानोऽमितौजसि ।
पर्यङ्के ब्रह्मणा पृष्टः सत्यवाक् भोगसाम्यभाक् ॥ ५ ॥

मुख्यामुख्यप्राणचिन्ता द्वितीयाध्यायविस्तृता ।
प्रातर्दनी तृतीयेऽन्या परविद्या प्रकीर्तिता ॥ ६ ॥

इन्द्रेण त्वाष्ट्रहत्यादिकर्तृस्वान्तर्गतः परः ।
प्राणस्याप्यन्तरः प्राज्ञः आनन्दश्चाजरामृतः ॥ ७ ॥

सतोऽसतः कारयिता मुक्त्यै यत्रोपदिश्यते ।
तुर्ये बालाकिविद्योक्ता बृहदारण्यके स्थिता ॥ ८ ॥

॥ शुभमस्तु ॥

श्रीः
श्रीभूमिनीलासमेतश्रीनिवासपरब्रह्मणे नमः ॥

# मन्त्रिकोपनिषत् ।

द इति शान्तिः ।] [भद्रं कर्णेभिरिति शान्तिः ?]

**ओम् अष्टपादं शुचिं हंसं त्रिसूत्रमणुमव्ययम् ।**

---

श्रीः
श्रीमते रामानुजाय नमः

ादां भाष्यं रामानुजमतानुगम् । रम्यं कृतं प्रपद्ये तं रङ्गरामानुजं मुनिम् ॥

श्रीरङ्गरामानुजमुनिवरविरचिता

## मन्त्रिकोपनिषत्प्रकाशिका ।

अतसीगुच्छसच्छायमञ्चितोरस्स्थलं श्रिया ।
अञ्जनाचलशृङ्गारमञ्जलिर्मम गाहताम् ॥
व्यासं लक्ष्मणयोगीन्द्रं प्रणम्यान्यान् गुरूनपि ।
मन्त्रिकोपनिषद्व्याख्यां करवाणि यथामति ॥

ादं — **पश्यति** । त्रीणि वर्त्मानि यस्य सः **त्रिवर्त्मा** । सत्त्वरजस्तमो-
र्युतं **तेजसोहं** ब्रह्मप्रकाशाच्छादकं ब्रह्मप्रकाशहन्तारं **सर्वतः** सर्वतो
ाश्यन् बहिरवलोकयन् जीवः **अष्टपादं** प्रकृत्यष्टकशरीरकम् ?] **शुचिम्**
निरवद्यं **त्रिसूत्रं** सृष्टिस्थितिसंहारात्मकसूत्रशब्दितक्रियायुक्तम् **अणुम्**

---

श्री
श्रीमद्भ्यो रङ्गरामानुजमहादेशिकेभ्यो नमः ।

## मन्त्रिकोपनिषद्भाष्यपरिष्कारः

योऽधिष्ठाता विपरिणमिताचित् चितो भोजयन् सन्
लीलास्वादी निखिलनिगमस्तोमवन्द्योऽखिलात्मा ।
षड्विंशस्सन् बहुलगणनागोचरः सर्वहेतुः
मुक्तेः सेतुर्भवतु भगवान् माधवोऽयं श्रियै नः ॥

ा **भाष्यकृता**, "चमसवदविशेषात्" (४.४.२.) इत्यधिकरणे निरीश्वरसांख्य-
तदुपनिषद्वाक्यानामुपात्ततया तदर्थव्यक्तये उपनिषदियमपि दशोपनिषद्भाष्य-
तत्र "आथर्वणिका अधीयते" इत्युक्तत्वात्, अत्रापि **मन्त्रोपनिषदं** —

**त्रिवर्त्मानं तेजसोहं सर्वतः पश्यन्न[1] पश्यति ॥ १ ॥**

**भूतसंमोहने काले भिन्ने तमसि वै खरे ।**
**अतः[2] पश्यन्ति सत्त्वस्था निर्गुणं गुणगह्वरे ॥ २ ॥**

1. सर्वतः परिपश्यति । 2. अन्तः ।

---

अतीन्द्रियम् **अव्ययं** निर्विकारं **हंसं** हंसवदाश्चर्यभूतं दीप्यमानत्वाद्वा
कत्वाद्वा हंससदृशं परमात्मानं [न?] । पश्यतीत्यर्थः ॥ १ ॥

पुनः कदा पश्यतीत्यत्राह **भूत — गह्वरे । काले** कालविशे
**संमोहने** भूतानां मोहजनके **खरे** घोरे **तमसि** तमोगुणे भिन्ने, अ
**सत्त्वस्थाः** रजस्तमोभ्यामस्पृष्टविशुद्धसत्त्वाः पुमांसं **निर्गुणं गुणगह्वरे**
गुहान्तर्वर्तित्वेऽपि गुणसङ्गकृतदोषशून्यं पश्यन्तीत्यर्थः ॥ २ ॥

---

**अथर्वाणो भृगूत्तमाः** इति श्रवणात् उपनिषदियमथर्ववेदीयेति विमृश्यते । यजुर्वेद
अष्टोत्तरशतोपनिषत्कोशे गण्यते । उभयत्र वा पठिता स्यात् अष्टपादमित्यादि । अ
उत्तरार्धस्य पूर्वं व्याख्यानात् **अष्टपाद**मित्यारभ्य सर्वेषां द्वितीयान्तानां पदानां क्रमेण
भावात्, पूर्वार्धे विशेष्यभूतः परमात्मा; उत्तरार्धे तु प्राकृतप्रपञ्चो विशेष्य इत्याशयोः
अन्यथा **तेजसोह**मिति पदार्थः परमात्मनि नान्वेति; **पश्यन्न पश्य**तीत्यत्र **पश्य**न्नित्य
किञ्चिन्नोक्तं भवेदित्यभिसंधिः । एवञ्च भाष्ये, **पश्यन् न** इति पदद्वयव्याख्यानं अष्ट
**पाद**मिति प्रथमपदव्याख्यानवत् । अन्यथा, 'न पश्यती' ति पाठं विहाय परिपश्य
भाष्याभिमतश्चेत्—पूर्वार्धप्रथमपदमारभ्य क्रमेण व्याख्या कृता स्यात्, द्वितीयमन्त्राव
'पुनः कदा पश्यती'त्येवंरूपा, पूर्वमन्त्रे, न पश्यतीति पाठमभिमतं दर्शयति । तथा **पश्य**
सामान्यतः जीव इत्यर्थसंमतावपि सर्वं द्वितीयान्तं क्रमेणैकविशेष्यकं व्याख्यायेत । सर्वः
पाठः स एव, 'सर्वतः पश्यन्न पश्यती'ति इति ध्येयम् । **हंसव**दित्युक्तं सादृश्यं
**दीप्यमानत्वा**दिति ।

**भूतसंमोहने** इत्यस्य तमोविशेषणत्वं भाष्याभिमतम् । ननु तस्य कालविशेषणत्वम
'या निशा सर्वभूतानां तस्यां जागर्ति संयमी । यस्यां जाग्रति भूतानि सा निशा पश्य
इत्युक्तरीत्या सर्वभूतानिद्राकाले रात्रौ योगिभिर्निर्बाधं योगस्य क्रियमाणतया भूतसंमोह
रात्रिग्रहणसंभवादिति चेन्न—दिवाऽपि योगस्य सम्यगनुष्ठानात् **रात्रि**रूपविशेषग्रहणे प्रमा
उपात्तगीतावाक्येऽपि रात्रिकालरूपार्थस्याभावात् । न हि उत्तरार्धे भूतजागरणकालस्य
निशात्वं वस्तुतोऽस्ति । अतस्तत्र न कालः कश्चिदुच्यते । किंतु एकज्ञातमन्यस्याज्ञातं
**कालविशेषे** इति । सात्त्विकत्यागपूर्वकर्मानुष्ठानमृदितकषायतादशायामित्यर्थः । अत
जीवात्मावलोकनानन्तरमित्यर्थः । **अन्त**रिति पाठे अवलोकितस्य जीवात्मनोऽन्तरित्यर्थ

अशक्यः सोऽन्यथा द्रष्टुं ध्यायमानः कुमारकैः ।
विकारजननीमज्ञामष्टरूपामजां ध्रुवाम् ॥ ३ ॥

ध्यायतेऽध्यासिता तेन तन्यते प्रेर्यते पुनः ।
सूयते पुरुषार्थश्च तेनैवाधिष्ठितं (ता?) जगत् ॥ ४ ॥

गौरनाद्यन्तवती सा जनित्री भूतभाविनी ।

---

**अशक्यः — कुमारकैः ।** **अन्यथा** तमोगुणभङ्गाभावे **कुमारकैः** तमो-नान्तःकरणतया मन्दप्रज्ञैः ध्यायमानोऽपि द्रष्टुमशक्य इत्यर्थः ।

**विकार—ध्रुवाम् ।** 'अष्टौ प्रकृतयः षोडश विकाराः' इत्युक्तरीत्या एका-रपञ्चभूतात्मकषोडशविकारजननीं पञ्चतन्मात्रप्रकृतिमहदहङ्काररूपाष्टप्रकृति-अज्ञाम् अचेतनाम् **अजां ध्रुवाम्** उत्पत्तिविनाशरहिताम् । एतेषां द्विती-नां **पिबन्त्येनामविषमा**मित्युत्तरेणान्वयः ॥ ३ ॥

**ध्यायते — जगत् ।** **ध्यायते** परमात्मना संकल्परूपेण ज्ञायते । सिता अधिष्ठिता **तन्यते** विस्तार्यते = स्थूलावस्था क्रियते, समष्टिभूतरूपेण **प्रेर्यते**; तेनैव परमात्मना अधिष्ठिता प्रकृतिः **पुरुषार्थं** पुरुषणामर्थनीयं गोपकरणभोगस्थानरूपं जगत् सूयते ॥ ४ ॥

**गौ — विभोः ।** **जनित्री**त्यनेन समष्टिसृष्टिरुच्यते । **भूतभाविनी**त्य-ष्टिसृष्टिरुच्यते । **अनाद्यन्तवती** आद्यन्तशून्या नित्या तेजोबन्नद्वारा

---

ष्टप्रकृतीति । यद्यप्यस्मन्मते एकतन्मात्रोत्पन्नभूतात् अपरतन्मात्रोत्पत्तिस्वीकारात् शकप्रसङ्गः—अथापि **विकार**पदं पाञ्चभौतिकशरीरे उपलभ्यमानभूतेन्द्रियपरम् । तेषामेव रीरे दृश्यमानत्वात् । अवशिष्टानि तत्कारणानि चाष्टौ प्रकृतय इति **न दोषः** । शेषं **निषद्भाष्ये** । (३)

**गौण्या वृत्त्या गौरित्युच्यत** इति । **अजां ध्रुवा**मित्यत्र अजापदं न छागस्त्रीवाचि । समभिव्याहारबलादेवोत्पत्तिराहित्यरूपयोगार्थस्य स्फुटं प्रतीतेः । 'अजोऽपि सन्नव्ययात्मे'-जपदस्य योगार्थं सुष्ठु प्रसिद्धिरप्यस्ति । अत एव श्रीभाष्ये चमसाधिकरणे अजामेका-गीपरत्वं परोक्तं प्रत्याख्यातम् । न तथा गौरिति पदं योगार्थे क्वचित् प्रसिद्धम् । अतो णैरिति भावः । (५)

**सिताऽसिता च रक्ता च सर्वकामदुघा विभोः ॥ ५ ॥**

**पिबन्त्येनामविषमा[1]मविज्ञाताः कुमारकाः ।**
**एकस्तु पिबते देवः स्वच्छन्दोऽत्र वशानुगाम्[2] ॥ ६ ॥**

**ध्यानक्रियाभ्यां भगवान् भुङ्क्ते ऽसौ प्रसभं[3] विभुः ।**
**सर्वसाधारणीं दोग्ध्रीं[4] पीड्यमानां तु यज्वभिः ॥ ७ ॥**

1. अविषयामविज्ञातां. 2. वशानुगः. 3. प्रसहत्. 4. पीयमानां.

---

हितशुक्लकृष्णरूपयुक्ता ईश्वरस्य **सर्वकामदुघा** लीलारसदोग्ध्री प्रकृतिरूपा का रित्यर्थः । कामदोग्धृत्वादिसादृश्यात गौण्या वृत्त्या गौरित्युच्यते ॥ ५ ॥

**पिबन्ति — कुमारकाः ।** **अविषमां** कर्मानुगुणपरिणामित्वादपक्षपातिन **विज्ञाताः** स्वात्मभिः देहेभ्यो विविच्याज्ञातास्सन्तः **कुमारकाः** अल्पप्र **बन्ति** प्राकृतं भोगं कर्मपरवशा अनुभवन्तीत्यर्थः । **एकस्तु देवः** परमा च्छन्दः अकर्मपरवशस्सन् **वशानुगां** स्वसंकल्पाधीनस्वरूपस्थितिप्रवृत्तिकां तिरूपां गां **पिबते** तत्कृतलीलारसं भुङ्क्त इत्यर्थः ॥ ६ ॥

**ध्यान-विभुः ।** **ध्यानक्रियाभ्याम्** 'ऐक्षत,' 'असृजते'ति श्रुताभ्यां सङ्कल ादिव्यापाराभ्यामित्यर्थः । **भुङ्क्ते** तत्कृतलीलारसमनुभवतीत्यर्थः । शिष्टं स्पष्टम् **—यज्वभिः** । सर्वबद्धजीवसाधारणतया फलप्रदाम्, वत्सैः यथा माता क्षीर डेता भुज्यते, एवं कर्मवश्यैरात्मभिः भोक्तव्यफलानुरूपं परिणाम्यमानामित्यर्थं

इत्थमेव **व्यासार्यैः**, "चमसवदविशेषा" दिति सूत्रे व्याख्यातम् ॥ ७

---

**सर्वकामदुघे**त्यत्र **विभो**रित्यस्यान्वयात् जीवकामदोहनरूपार्थत्यागेन **लीलारसदोग** तम् । जीवैरनुभाव्यतया विभोः कामनाविषयभूतं यद्यत् तस्य सर्वस्य दोग्ध्रीत्युक्तिसंभवेऽ तत्र लीलारसस्यापि स्वानुभाव्यस्य सत्त्वात् तद्विवक्षैव युक्तेति भावः ।

**एकस्तु पिबते देवः स्वच्छन्द** इति । न चैवम्, 'ऋतं पिबन्ता'वित्यत्र परमात्म कर्तृत्वाभावेऽपि पाययितृत्वमस्तीत्युपपादनं किमर्थं कृतम् । अत्रोक्तरीत्या पानकर्तृत्वसं वादिति वाच्यम्—जीवस्य सुकृतफलभोक्तृत्वम् परस्य तत्कृतभोगदर्शनाधीनलीलारसभोक्तृ त्वेविहाप्युक्तया सुकृतफलभोक्तृत्वस्य परमात्मन्यभावात्, 'ऋतं पिबन्तौ सुकृतस्ये' ानुभाव्यतयोक्ते ऋते परानुभाव्यत्वायोगेन पाययितृत्वस्यैव तत्र वक्तव्यत्वात् । (६)

पश्यन्त्यस्यां महात्मानः[1] सुपर्णं पिप्पलाशनम् ।
उदासीनं ध्रुवं हंसं स्नातकाध्वर्यवो जगुः ॥ ८ ॥
शंसन्तमनुशंसन्ति बह्वृचाः शास्त्रकोविदाः ।
रथन्तरं बृहत् साम सप्त[2] वैधैस्तु गीयते ॥ ९ ॥
मन्त्रोपनिषदं ब्रह्म पदक्रमसमन्वितम् ।
पठन्ति भार्गवा ह्येते[3] अथर्वाणो भृगूत्तमाः ॥ १० ॥

इति मन्त्रिकोपनिषदि प्रथमः खण्डः ॥

1. सुवर्णं. 2. वैधैः. 3. ह्यथर्वाणो.

पश्यन्ति — पिप्पलाशनम् । कर्मफलभोक्तारं शोभनपक्षयुक्तपक्षिवः नन्दादिकमनीयगुणयुक्तं केचन शुद्धान्तःकरणाः महात्मानः पश्यन्ि च्य साक्षात्कुर्वन्ति । उदासीनं — जगुः । तत्समीपवर्तिनम्, 'तयोरन्य ः स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति' इत्युक्तरीत्या कर्मफलाशनशून्यत्वय ीनं ध्रुवं व्यापित्वेन निश्चलं हंसं हंसवच्छुद्धमद्भुतं स्नातकाध्वर्यवः--स्नातक काः अध्वर्यवः येषां ते स्नातकाध्वर्यवः — समीचीनयाजकानुष्ठापितयज्ञ द्धान्तःकरणाः जगुः सामभिः स्तुवन्तीत्यर्थः ॥ ८ ॥

शंसन्तं — कोविदाः । अत्र तमित्यध्याहारः । तं शंसन्तं तं स्तुवन्तम गणं बह्वृचाः ऋग्वेदाध्येतारः शास्त्रकोविदाः अध्यात्मशास्त्रप्रवीणा त्रावरुणादयः अनुशंसन्ति । 'स्तुतमनुशंसन्ती' ति श्रवणादुद्गातृगणै ः स्तुताः देवताः होतृगणैः ऋग्भिः शंसनीयाः । ततश्च सकलस्तोत्रशस्त्राणि ग्याण्येवेति भावः ।

रथन्तरं–गीयते । रथन्तरबृहत्सामादिकं यस्मिन् विषये गीयत इत्यर्थः ॥ ९

मन्त्रोपनिषदं -- भृगूत्तमाः । पदक्रमसमन्वितं मन्त्रोपनिषदाख्यं ब्रह्म भृगूणां मध्ये उत्तमा भार्गवाः एते अथर्ववेदाध्यायिनः पठन्तीत्यर्थः । तत शिखाध्यायिभिरेवेयमुपनिषदध्येतव्येत्यर्थः ॥ १० ॥

॥ इति मन्त्रिकोपनिषत्प्रथमखण्डप्रकाशिका ॥

(२)

॥ अथ द्वितीयः खण्डः ॥

सब्रह्मचारिवृत्तिश्च स्तंभोऽथ फलितस्तथा ।
अनड्वान् रोहितोच्छिष्टः [1]पठ्यते बहुविस्तरे ॥ १ ॥

[ [2]कालः प्राणश्च भगवान् मृत्युः शर्वो महेश्वरः ।
उग्रो भवश्च रुद्रश्च ससुरः सासुरस्तथा ॥ २ ॥

[3]प्रजापतिर्विराट् चैव पुरुषः सलिलमेव च । ]
स्तूयते मन्त्रसंस्कृत्यैरथर्वविहितैर्विभुः ॥ ३ ॥

तं षड्विंशकमित्येके सप्तविंशमथापरे ।
पुरुषं निर्गुणं सांख्यमथर्वशिरसो विदुः ॥ ४ ॥

1. पश्यन्तो बहुविस्तरम् । 2. कुण्डलितं न सभाष्यकोशे. ३. 3. स्तूयते मन्त्रसंस

(२)

परमात्मनः सर्वात्मतामाह सब्रह्मचारिवृत्तिश्च—बहुविस्तरे । स्तंभुर्ग हंसार्थो वा । रोहितोच्छिष्टः । उच्छिष्टोऽवशिष्टः । रोहितश्च उच्छिष्टश्च रो च्छिष्टः....? इति यावत् । बहुविस्तरे शास्त्रे यैः पाठ्यते(ये पठ्यन्ते ?) र्वेऽपि स एवेत्यर्थः ॥ १ ॥

स्तूयते — विभुः । मन्त्रसंस्कृत्यैः मन्त्र इति संस्कृतशब्दवाच न्त्रैरिति यावत् । अथर्वविहितैर्मन्त्रैः स एव परमात्मा स्तूयत इत्यर्थः ॥ ३

तं — विदुः । निर्गुणं सत्त्वरजस्तमोगुणातीतं तमेव परमात्मानं षर विदुः] । परमात्मा षड्विंश इत्यर्थः । षड्विंशवादिनाञ्च, कालतत्त्वमेष्वेव विश्रे या अन्तर्गतमित्यभिप्रायः । सप्तविंशमथापरे कालपार्थक्यवादिन इति भावः ॥

सब्रह्मचारिवृत्तिश्चेत्यादिना ब्रह्मणः सर्ववस्तुसामानाधिकरण्यं प्रदर्श्य, 'नैतत् वस्तु नेबन्धनम्; किन्तु शरीरात्मभावकृत' मित्युपदेशार्थम् अचेतनातिरिक्तजीवाधिकरवं ३ प्यते, तं षड्विंशमित्यादिना । अथर्वशिरस इति । अथर्वोपनिषत्त इत्यर्थः ।

**चतुर्विंशतिसंख्यात[1] मव्यक्तं व्यक्त[2] मुच्यते ।**
**अद्वैतं द्वैतमित्याहुस्त्रिधा तं पञ्च[3] सप्तधा ॥ ५ ॥**
**ब्रह्माद्यं स्थावरान्तञ्च पश्यन्ति ज्ञानचक्षुषः ।**

1. संख्याकं. 2. व्यक्तमेव च. 3. पञ्चधा तथा.

---

**चतुर्विंशति — मुच्यते ।** व्यक्ताव्यक्तरूपतया चतुर्विंशतिसंख्यातम त्मतत्त्वमुच्यत इत्यर्थः । तस्यैव ब्रह्मणः अव्यक्तव्यक्तशरीरकत्वादिति भावः [ — **सप्तधा** । तमेव परमात्मानं चिदचिद्विशिष्टमभिप्रेत्य तस्यैकत्वादद्वै हुः, 'एकमेवाद्वितीय' मित्याद्याः काश्चन श्रुतयः । काश्चन, 'पृथगात्म रञ्च मत्वे' त्यादिश्रुतयः विशेषणविशेष्यभेदविवक्षया द्वैतम् । केचि क्ता भोग्यं प्रेरितार' मिति चिदचिदीश्वरभेदेन त्रित्वम् । व्यक्ताव्यक्तका श्वररूपेण पाञ्चविध्यं केचिदाहुः । तमेव **पञ्चधा** पञ्चभूतात्मकतया, सप्त कात्मकतया चाहुरित्यर्थः ॥ ५ ॥

**ब्रह्माद्यं — द्विजाः** । ब्रह्मादिस्थावरान्तान्तर्यामिणं व्याप

---

**चतुर्विंशतिसंख्यात**मित्येतत् पञ्चविंशस्य जीवस्याप्युपलक्षणम् । यद्वा **पुरुषं निर्गु** णमिति **जीवात्मकथनम्** । अत एव सांख्यमिति विशेषणमपि सार्थकम् । सांख्यशा साधितमपि वेदादेव प्रतिपद्यन्ते प्रमाणिकाः । तदुक्तम्, 'श्रौतीमेवात्मसिद्धिं श्रोत्रि न्ते' इति । अत एवाथर्वशिरोरूपवेदवेद्यत्वमेवाहत्य सांख्यप्रक्रियासिद्धिनिरसनं शारीरवे चेतनाचेतनाधिकोऽपि चेतनाचेतनवाचिपदसामानाधिकरण्येन व्यपदिश्यत इत्यर्थ द्वयेन चेतनाचेतनात्मत्वं ब्रह्मण्युक्तम् । एवं पञ्चविंशस्य पुरुषस्य चतुर्विंशतेरचेत व्यक्ताव्यक्तानां प्रदर्शनात् परमात्मनः षड्विंशत्वमुपपादितं भवति । **पञ्चसप्तधे**त्यस्यै भवितुमर्हति — तत्त्वत्रयवादवत् अर्थपञ्चकवादस्यापि दर्शनात् पञ्चधा ब्रह्मावस्थितम व्यक्तानां त्रयोविंशतिसंख्यातानां व्यक्तत्वेन क्रोडीकारे व्यक्ताव्यक्तकालजीवपरमात्मरू ध्यम्, व्यक्ताव्यक्ताक्षरतमोजीवकालपरमात्मरूपेण साप्तविध्यमिति । एवं प्रकृतिनित्यविभू वपरमात्मभेदेन वा प्रकृतिकालजीवधर्मभूतज्ञानपरमात्मभेदेन वा पाञ्चविध्यम्; व्यत नित्यविभूतिकालधर्मभूतज्ञानजीवपरमात्मभेदेन च साप्तविध्यमित्याद्यपि द्रष्टव्यम् । (४.

**ब्रह्माद्य**मिति । अत्र मन्त्रे **पश्यन्ती**ति पदस्य द्विः श्रवणात् पूर्वार्धं पृथग्वाक्य रार्धमिति ज्ञायते । तत्र पूर्वार्धेन ब्रह्मणः देहविशिष्टात्मरूपव्यष्टिजीवान्तर्यामित्वमुक्त **पुरुष**मिति **चतुर्विंशती**ति चार्धाभ्यां शुद्धचेतनाचेतनान्तर्यामित्वमुक्तमिति विशेष

तमेकमेव पश्यन्ति परिशुद्धं[1] विभुं द्विजाः ॥ ६ ॥

यस्मिन् सर्वमिदं प्रोतं ब्रह्म स्थावरजङ्गमम् ।
तस्मिन्नेव लयं याति स्रवन्त्यः सागरे यथा ॥ ७ ॥

यस्मिन् भावाः प्रलीयन्ते लीनाश्चाव्यक्ततां ययुः ।
पश्यन्ति व्यक्ततां भूयो जायन्ते बुद्बुदा इव ॥ ८ ॥

क्षेत्रज्ञाधिष्ठितश्चैव[2] कारणैर्भिद्यते पुनः ।

1. परिशुभ्रं. 2. क्षेत्रज्ञाधिष्ठितश्चैव.

---

परिशुद्धमेकमेवात्मानं ज्ञानचक्षुषः पश्यन्तीत्यर्थः ॥ ६ ॥

**यस्मिन्**—अत्र ब्रह्मशब्देन जीवजातमुच्यते । स्थावरजङ्गमात्मकं ब्रह्मवज्जातं (ब्रह्म जीवजातं?), यस्मिन् प्रोतं = यत्सङ्कल्पेन धृतम् — य मित्यर्थः – तस्मिन्नेव लयं याति । ततश्च उपादानत्वान्तर्यामित्वयोरैकाधिक भवति । **स्रवन्त्यः सागरे यथा** । स्रवन्त्यः नद्यः समुद्रे यथा लयं यान्तीत्य

**यस्मिन् – बुद्बुदा इव** । यस्मिन् आत्मनि **भावाः** वियदादि प्रलीयन्ते ; प्रलीनाश्च सन्तः शब्दस्पर्शादिशून्याः पृथगुपलम्भानर्हाः अ नामरूपाः; 'तमः परे देव एकीभवती'ति श्रुत्यनुरोधेनाविभक्ततमोवस्था भव तत्रैव परमात्मनि सर्गादिसमये बुद्बुदा इव पुनर्जायन्ते ; व्यक्ताश्च भवन्ति । लयाधारस्य परमात्मन एवोत्पत्त्युपादानत्वमिति भावः ॥ ८ ॥

**क्षेत्रज्ञ — पुनः** । उत्पन्नाश्च महदाद्याः क्षेत्रज्ञविशेषैरधिष्ठिताश्च पुनश्च नाशकारणैर्भिद्यन्ते नाश्यन्त इत्यर्थः । **एवं – पुनः पुनः** । एवं प

---

**तमेक**मित्युत्तरार्धेन तु एवं सर्वान्तर्यामित्वे सत्यपि तत्कृतदोषास्पृष्टत्वरूपो विभवो वक्त वक्तव्यम् । भाष्ये तु पूर्वोत्तरार्धयोरैकवाक्यतादर्शनात् पश्यन्तीति पदमेकमेव स्यादिति निरीक्ष्यः । (६)

**यस्मिन् सर्व**मित्यादिना उपादानकारणत्वमुच्यते (७.८)

एवं स भगवान् देवः [1] पश्यत्यस्य पुनः पुनः ॥ ९ ॥
ब्रह्म ब्रह्मन् यथा [2] यान्ति ये विदुर्ब्राह्मणास्तथा ।
अत्रैव ते लयं यान्ति लीनाश्चाव्यक्तशालिनः ॥
लीनाश्चाव्यक्तशालिन [3] इति ॥ १० ॥

इति मन्त्रिकोपनिषदि द्वितीयः खण्डः ॥

इति मन्त्रिकोपनिषत् संपूर्णा

श्रीरस्तु

[1] ...वं पश्यन्त्यन्ये. 2. ब्रह्मेत्यथो. 3. नाव्यक्तशायिनः ?

...स्य पुनः पुनः उत्पत्तिविनाशावेव **पश्यति** सङ्कल्पयतीत्यर्थः ॥ ९ ॥

...॥ येन प्रकारेण **ब्रह्मन्** ब्रह्मणि **ब्रह्म** प्रकृतिजीवभूतं ब्रह्म लयं याति,— ...वचनव्यत्ययश्छान्दसः — तथा ये विदुः, ते अत्रैव ब्रह्मणि लीनाः ...नाव्यक्ता एवं शेरते न कदाचिदपि ॥ १० ॥

...इति **मन्त्रिकोपनिषद्भाष्ये द्वितीयखण्डप्रकाशिका ।**

इति श्रीमत्तातार्यचरणारविन्दचञ्चरीकस्य वात्स्यानन्तार्य-
पादसेवासमधिगतशारीरकमीमांसाभाष्यहृदयस्य-
-परकालमुनिपादसेवासमधिगतपारमहंस्यस्य

**श्रीरङ्गरामानुजमुनेः कृतिषु**
**मन्त्रिकोपनिषत्प्रकाशिका**
संपूर्णा ।

॥ श्रीरस्तु ॥

...**स भगवानिति** प्रवाहेश्वरपक्षनिरसनेन ब्रह्मणः, भगवद्वासुदेवरूपत्वेन **ध्यानक्रि**...वानिति पूर्वमेव दर्शितस्य नित्यैश्वर्यं निरूपितम् । (९)

...**शेरते** नेत्येव पाठदर्शनात् ब्रह्मणि लीनाः पश्चात् दृश्यमानरीत्या नाव्यक्तशायिन...। **अव्यक्तशालिन** इति, '**अव्यक्त**मव्यक्ततामेवं शाडन्ते श्लाघन्ते इति ...। शाडृ श्लाघायाम् । डलयोरभेदात् काश्यपमतमत्र स्वत्वम् ' इति व्याख्येयम् ।

ईशाद्युपनिषद्भाष्यपरिष्कारविधायिना ।
श्रीमच्छुत्यन्तसौमित्रिरङ्गलक्ष्मणसेविना ॥

**श्रीवीरराघवार्येण वात्स्यसच्चक्रवर्तिना ।**
**मन्त्रिकोपनिषद्भाष्यपरिष्कारो व्यतन्यत ॥**

इति **श्रीवात्स्यवीरराघवाचार्यकृतिषु**
**मन्त्रिकोपनिषद्भाष्यपरिष्कारः**

श्रीरस्तु । शुभमस्तु ॥

---

## मान्त्रिकोपनिषदर्थसंग्रहकारिकाः

याजुषी वाऽथर्वणी वा मन्त्रिकोपनिषन्मता ।
खण्डद्वयात्मना तस्या विभागमपि मन्वते ॥ १ ॥

भगवत्प्रेर्यमाणैव प्रकृतिः परिणामिनी ।
जीवात्मनां भोगहेतुः तस्य लीलारसप्रदा ॥ २ ॥

सर्वश्रुतिभिरुद्घुष्टः सर्वात्मा च स्तुतः परः ।
षड्विंशत्वादिना नूनं पृथग् ह्येयो जगन्मयः ॥ ३ ॥

निमित्तवदुपादानं क्षेत्रज्ञैर्भगवानयम् ।
परिशुभ्रो ध्यातुमर्हो नित्यैश्वर्य इहोच्यते ॥ ४ ॥

**शुभमस्तु**

---

श्रीः

श्रीमते नारायणाय नमः

# सुबालोपनिषत् ।

[ ओं पूर्णमद इति शान्तिः ॥ ]

---

श्रीः

श्रीमते रामानुजाय नमः

[ श्रुतप्रकाशिकावक्त्रे व्यासायास्तु नमस्क्रिया ।
यः संग्रहाय दयया श्रुतदीपमदीपयत् ॥ ]

## सुबालोपनिषद्विवरणम्

श्रीश्रुतप्रकाशिकाचार्यविरचितम् ।

विशुद्धविज्ञानविशेषकारणं रजस्तमःकल्मषदोषनाशनम् ।
सदैव रामानुजपादपङ्कजं स्मरामि नौमि प्रणमामि चादरात् ॥ १ ॥

सौबालोपनिषद्धृदि विनिहितमर्थं सुपुष्कलं गहनम् ।
अनुसन्दधीमहि वयमक्लिष्टमृजूपपन्नश्च ॥ २ ॥

---

श्रीः

श्रीमद्भ्यो रङ्गरामानुजमहादेशिकेभ्यो नमः

ायणाद्रिशिखरेऽत्र निरीक्ष्यते यो नारायणः कमलयाऽद्भुतमासुबालम् ।
ब्रह्मरुद्रमुखसर्वसृजं सुबालश्रुत्यन्तगुह्यमखिलान्तरमाश्रयामि ॥

भाष्यादेर्व्याक्रिया सार्वभौमी येषामेषां स्वादुवाचासुधानाम् ।
ासार्योणामेतमस्मद्गुरूणां विख्यातानां वन्दिषीयाङ्घ्रिपद्मम् ॥

ादौ बृहदारण्यकान्ता इव सुबालोपनिषदियमपि सर्वैः समकण्ठमादृता, सर्वजग-
रुद्रादिकारणत्व–सर्वान्तर्यामित्व–नारायणत्व–दिव्यैकदेवत्वादिस्पष्टवर्णनेन सर्वेभ्यो-
र परैरपि न व्याख्याता, साधु व्याकर्तव्येति विभाव्य, श्रीभाष्यदीपवेदार्थसंग्रहादि-
ातवैदुष्यैर्विशदमधुरविशिष्टार्थव्युत्पादकवचस्सुधावर्षणालङ्कर्माणैः वेदव्यासापरना-
शनभट्टारकैर्भाष्यमस्या अभाषि । परं तत् विवरणमस्याः षोडशखण्डात्मिकायाः
तमेव सर्वत्र लक्ष्यते । शिष्टोऽप्येतदुपनिषद्भागः श्रीभाष्यादौ एतद्भाष्ये च
नः, यत्रैव नारायणत्वादि नः प्रतिबोधितमिति सोऽपि सार्थोऽधिगन्तव्य एव ।

**हरिः ओम् — तदाहुः — किं तदाऽऽसीत्**
**तस्मै स होवाच — नसन्नासन्नसदसदिति ।**

---

**तदाहुरिति** । **तत्** वक्ष्यमाणं वाक्यजातमध्येतारोऽधीयत
यद्वा शिष्याचार्यभावेन स्थिताः प्रष्टारः प्रतिवक्तारश्च ब्रह्मवादिन आहुरित्यर्थ
कस्यचित् शिष्यस्य प्रश्नवचनं दर्शयति **किं तदासीदिति** । **तदा** सृष्टेः
जगत्कारणत्वेनावस्थितमासीदित्यर्थः । **तस्मै स होवाच** । **तस्मै** प्रष्टृत्वेन
शिष्याय **सः** प्रष्टव्यतया बुद्धिस्थ आचार्य उवाचेत्यर्थः । **ह**ेति पूजायाम्
प्रष्टा रैक्वः, प्रतिवक्ताऽऽचार्यो घोराङ्गिरा इति व्यक्तीभविष्यति । संक्षेपतः
विषयं प्रतिवचनं दर्शयति **नसन्नासन्नसदस**दिति । तत्र (अत्र ?) **सदा**
नगशब्दवत् **न**शब्देन समस्तानि । **न**शब्दश्च तदन्यवाची । **सच्छब्दः** का
चेतनपरः; ' इदं सर्वमसृजत् ' इत्युपक्रम्य, ' सच्च त्यच्चाभवत् विज्ञानञ्चाविज्ञा
कार्यावस्थचेतनविषये सच्छब्दस्य प्रयुक्तत्वात् । असच्छब्दश्च कार्यावस्थाचेत
कार्यावस्थचेतनविलक्षणं कार्यावस्थाचेतनविलक्षणमुभयात्मकजगद्विलक्षणं परमे
स्थितं परं ब्रह्म कारणमासीदित्यर्थः । ब्रह्मणः परमव्योमसंबन्धो हि
'परस्तान्नसन्नासन्नसदसत् ' इति । अस्य वाक्यस्य सदादिनिषेधमात्रपरत्वे, 'तस्मा
संजायते' इति तच्छब्देन कारणतया कस्यचित् परामर्शायोगात् । किञ्चिदपि
चेत्, **तस्मा**दिति किं परामृश्यते ? सदसदनिर्वचनीयमज्ञानमिति चेत्, तद

---

ननु **तदाहुरिति** प्रष्टृप्रतिवक्तॄणां बहूनामुक्तिरुपक्रान्ता । एवञ्च, **किं तदासी**
प्रश्नमाहुः, तत्र **नसन्नासन्नसदस**दिति प्रतिवचनञ्चाहुरिति सुवचम् । तत्र मध्ये **स**
**होवाचे**ति कथमित्यत आह **अत्र प्रष्टा रैक्व** इत्यादि । यद्यप्येवं श्रुत्याशयः स्यात् — '
ज्ञासया प्रवृत्ताः सर्वेऽपि प्रष्टारः, किं तदाऽऽसीदित्येव प्रश्नमाहुः । तत्र प्रतिवक्तॄणामुक्ति
ब्रह्म वा इदमग्र आसीत्, आत्मा वा इदमग्र आसीत्, एको ह वै नारायण आसीत्, असद्वे
आसीत् इत्येवम् । तत्र रैक्वाय प्रष्ट्रे घोराङ्गिरस उत्तरं तु विलक्षणम् **नस**दित्यादि' इति ।
आहुरिति प्रश्नमात्रान्वयीति — तथापि **स होवाचे**त्येतावदनुक्त्वा **तस्मै स हो**
वचनात् प्रश्नवाक्यमपि रैक्वैककर्तृकतया व्याख्यातमिति ध्येयम् ।

**उभयात्मके**ति । न चैवं **नसन्नास**दित्युक्तस्यैव **नसदस**दित्युक्तौ पु
स्यादिति वाच्यम् — समष्टिकार्यभूतचेतन — तादृशाचेतन — व्यष्टिरूपचेतनाचेतनात्मकजग
वैलक्षण्यस्य त्रिभिः पदैर्विवक्षणादपौनरुक्त्यात् ।

**तस्मात् तमः संजायते ।**

पनिषदि, 'अपुनर्भावा(भव?) याण्डकोशं भिनत्ती'त्यारभ्य, 'मृत्यु
त्योर्वै परे देव एकीभवति । परस्तान्नसन्नासन्नसदसत्' इति देशतः कालतः
वा मुक्तप्राप्यत्वकथनायोगात् । 'मृत्युं दहति परस्तान्नसन्नासन्नसदसत' इति
ज्ञात् मृत्योः परत्वाभिधानायोगाच्च । अनिर्वाच्यं हि ज्ञाननिवर्त्यमभिमतम् ।
ब्दवैयर्थ्याच्च । मृत्योरपि सान्ततया परत्वविशेषणं हि न घटते ।
परे देव एकीभवति परस्तान्नसन्नासन्नसदसत्' इति देशतः कालतः
वा सर्वेश्वरात् परत्वमनिर्वचनीयस्यात्यन्तानुपपन्नम् । जगत्कारणब्रह्मपरत्वे
प्यत्वादिकं सर्वमुपपन्नम् । **इति**शब्दः प्रतिवचनसंक्षेपसमाप्तौ ।

अथ विस्तरेण सृष्टिमाह **तस्मात् तमः संजायते** इति । **तस्मात्** सर्व-
त्रेन प्रतिपादितात् परस्मात् ब्रह्मणः अतिसूक्ष्मं प्रधानतत्त्वं **संजायते** सञ्जा-
विभक्तमित्यर्थः । ननु पूर्वमविभक्तस्य हि पश्चाद्विभागः । ब्रह्मणः चिद-
त्तया तेन तत्पूर्वमपि अविभागाभावात् विभागोक्तिर्न घटते । न ।
पनिषदि **तमोमृत्यु**शब्दवाच्यस्य सूक्ष्माचिद्वस्तुनः परब्रह्मशरीरत्वं वक्ष्यते ।
शरीरके ब्रह्मणि कार्योपयुक्तांशस्य प्रळयदशायामविभागो युक्तः । वक्ष्यते,
भवती'ति । अतः सर्गकाले विभागोऽप्युपपन्नः । विभागश्च न छित्वा भित्वा
अपितु केनचिदाकारेण व्यावृत्तिर्विभागः । परब्रह्मप्रकारभूतकार्योपयोग्यंशस्य
पापत्तिर्विभागः । स च परमात्मप्रेरणाधीनः । परमात्मनोऽचिच्छरीरकत्वं

तः **कालतः स्वभावतो** वेति । मृत्युं भिनत्तीति मृत्युभेदनानन्तरं मुक्तप्राप्य-
परस्तादिति मृत्युनाऽनाक्रान्तदेशे मुक्तप्राप्यत्वमुक्तम् । तदुभयमपि अज्ञानस्य न
तु तावदिदम्, यत् देशतः कालत इति । अज्ञानं मुक्तप्राप्यं नैव भवतीति
। तद्वर्णनायोग एवेत्यर्थः ।

**तमसो** भूतादिरित्यादिषूपरितनवाक्येषु संजायत इत्यस्यार्थस्यैवानुषङ्गात् तलोपरत्यर्थ-
विभागपरत्वमयुक्तम् । अतः, श्रुतिस्वारस्याच्च तमस्त्वावस्थापन्नमुत्पद्यत इत्येवार्थोऽस्तु
इयते **तम एकीभवती**ति । अक्षरं तमसि लीयते इत्यन्तं लीयत इति प्रयुज्य,
ते वाक्ये एकीभवतीति प्रयोगात् तमस्त्वमक्षरत्वादिवत् न प्रहीयत इति प्रतीयते ।
[illegible]

## तमसो भूतादिर्भूतादेराकाशमाकाशाद्वायुः

तत्प्रेरकत्वञ्च भगवता मनुना स्पष्टमुक्तम्, 'आसीदिदं तमोभूत
'प्रादुरासीत् तमोनुदः । सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः
एतदुक्तं भवति—समस्तचिदचिद्विलक्षणस्वरूपात् तमश्शब्दवाच्यातिसूक्ष्म
कात् परब्रह्मणः कार्योत्पादनाय कश्चित् तमस्तत्त्वांशः तत्संकल्पाद्विभक्तोऽ

**तमसो भूतादिरिति । भूतादिः** आकाशादिभूतानामादिभूतः ता
तस्माद्विभक्तात् तमसोऽक्षराव्यक्तमहदवस्थाद्वारेण भूतादिरभूदित्यर्थः । '
लीयते महानव्यक्ते लीयते अव्यक्तमक्षरे लीयते अक्षरं तमसि ल
प्रळयक्रमस्य वक्ष्यमाणत्वात् तमसो भूतादिकारणत्वं तत्त्वान्तरव्यवधानेनेत
**भूतादि**शब्दः सात्त्विकाहङ्कारराजसाहंकारयोरपि प्रदर्शनार्थः । 'वैकारि
भूतादिश्चैव तामसः । त्रिविधोऽयमहंकारो महत्तत्त्वादजायत' इति भगवत्पराश

**भूतादेराकाश**मिति । शब्दतन्मात्रावस्थापूर्वकमाकाशमुत्पन्नमि
'आकाशमिन्द्रियेषु इन्द्रियाणि तन्मात्रेषु तन्मात्राणि भूतादौ लीयन्ते' इ
मैत्रोपनिषदि पञ्चभूतप्रळयदशायां तन्मात्रलयप्रतिपादनेन उत्पत्तावपि तन्मा
सिद्धत्वात् । 'भूतादिस्तु विकुर्वाणः शब्दतन्मात्रकं ततः । ससर्ज श
त्रादाकाशं शब्दलक्षणम' इति भगवत्पराशरवचनेन शब्दतन्मात्रादाकाशोत्प
तरमवगतत्वाच्च । **आकाशाद्वायु**रिति । अत्रापि स्पर्शतन्मात्रपूर्वकं
इत्यर्थः । 'आकाशस्तु विकुर्वाणः स्पर्शमात्रं ससर्ज ह । बलवानभवद्वायुस्

---

तमसः चेतनेन देवेनैक्यायोगात् देवापृथक्सिद्धेन अचेतनद्रव्येण अविभक्ततमोनाम्ना
विवक्षितमिति सृष्ट्यारम्भकाले इहोक्तो विभागोऽपि तादृशाचेतनद्रव्यादेव विवक्षितः
विभागो नाम कार्यानुरूप्यापत्तिः कार्यापेक्षितसामग्रीसंपन्नत्वम् । सा च सामग्री भगवत्
प्रेरणादिः । **आसीदिदं तमोभूत**मिति । एतन्मनुवचनानामर्थः श्रुतप्रकाशिकायां (
विशदमनुसंधेयः । अनेन प्रलयकाले तमस्त्वावस्थासद्भावः स्पष्टमवगम्यत इति न तस्य
युक्तमित्यपि दर्शितम् । श्रुत्यन्तरञ्च, 'नासदासीन्नो सदासीत् तदानीं तम आसीत्
गूढमग्रे प्रकेतम्' इति ।

रग्निरग्नेरापोऽद्भ्यः पृथिवी । तदण्डं समभवत् ।

मतः' इति पराशरोक्तेः । **वायोरग्निः अग्नेरापः अद्भ्यः पृथिवी**ति । अत्र
न्मात्रादग्नेरुत्पत्तिः, रसतन्मात्रादपामुत्पत्तिः, गन्धतन्मात्रात् पृथिव्युत्पत्तिरपि सि
' वायुर्विकुर्वाणो रूपमात्रं ससर्ज ह । ज्योतिरुत्पद्यते वायोस्तद् रूपगुणमुच्य
श्चापि विकुर्वाणं रसमात्रं ससर्ज ह । विकुर्वाणानि चाऽम्भांसि गन्धम
रे' इति पुरणवचनोपबृंहितत्वात् । **वायोरग्नि**रित्यत्राग्निशब्दः तेजोमात्रपर
स्तेजसि लीयन्ते' इति अत्रैव प्रळयवाक्ये तेजश्शब्दश्रवणात्; '
सृजते' ति श्रुत्यन्तरैकार्थ्यात्; 'ज्योतिरुत्पद्यते वायोः' इति स्मृतिवचनाच्च

**तदण्डं समभव**दिति । तच्छब्दः पृथिव्यन्ततत्त्वजातपरः । महदादिपृ
तत्त्वजातमण्डात्मना परिणतमभूदित्यर्थः । 'महदाद्या विशेषान्ता ह्यण्डमुत्पा
ते' इति स्मरणात् ।

ननु 'तन्मात्राणि भूतादौ लीयन्ते' इति तन्मात्राणां युगपत् प्रलयश्रवण
रपि युगपदित्यवगम्यते । युगपत् उत्पन्नेभ्यस्तन्मात्रेभ्यः परस्परानपेक्षेभ्
शाद्युत्पत्तिः । अत एव आकाशादीनां न परस्परकारणत्वम् । तथा सति
प्रकृतयः षोडश विकाराः' इति विकाराणां षोडशसंख्याकत्वं घटते
। आकाशादीनां चतुर्णां प्रकृतित्वेन [प्रकृतीनां ?] विकाराणाञ्च द्वादश
। तन्मात्राणां युगपदुत्पत्त्यङ्गीकारे लयश्रुत्यनुरोधश्च भवति । 'आकाशाद्वायुः
वाक्येषु आकाशादिशब्दाः पञ्चम्यन्ताः तन्मात्रावस्थाकाशादिभूतपरा इति —

अत्रोच्यते—न तावत् तन्मात्राणां युगपदुत्पत्तिः श्रुता । युगपत्प्रलयश्रवणा
येति चेन्न—प्रळयस्यापि यौगपद्याश्रवणात् । **लीयन्त** इति हि श्रूयते; न तु

---

**न परस्परकारणत्व**मिति । वाय्वादीनां साक्षात् आकाशादिकारणकत्वं वा तज्जन्य
देकारणकत्वं वा नेत्यर्थः । **तथासति** तत्कारणकत्वाभावे सत्येव । **तन्मात्रावस्था**
**भूतपरा** इति । ननु **तन्मात्रे**ति शब्दतन्मात्रग्रहणे तज्जन्यत्वं वायोः कथम्
ात्रग्रहणे तदवस्थत्वमाकाशस्य कथमिति चेत् — पूर्वं **परस्परानपेक्षेभ्य** इत्यने
शब्दतन्मात्रापेक्षा न वार्यते । किंतु सिद्धान्ते स्पर्शतन्मात्रादेः स्वोत्पत्तौ आकाशादिद्वार
ात्राद्यपेक्षत्वं यत्, तदेव वार्यत इति इह आकाशपदं शब्दतन्मात्रपरमिति ।

पलीयन्त ' इति । अतः क्रमयौगपद्यसाधारणी इयं श्रुतिः । यथा, 'यतो वा इ
नि जायन्ते – यत् प्रयन्त्यभिसंविशन्ति ', ' यस्मिन्निदं सञ्च वि चैति स
दि । तत्रापि यौगपद्यविवक्षा अस्तीति चेत्–महदहङ्कारादितत्त्वानां देवमनु
। प्रमाणान्तरावगतसर्गप्रळयक्रमो बाध्येत । अतो युगपत्प्रळय (या?) श्र
दुत्पत्तिकल्पनं तन्मात्राणामयुक्तम् । न केवलं कल्पकाभावात् युगपदुत्तिकल्प
म् ; बाधकसद्भावाच्चायुक्तम् । न हि श्रुतिक्रमविरोधेन यौगपद्यकल्पनमुपपद्य

तथा हि — ' भूतादेराकाशमाकाशाद्वायुः वायोरग्निः ' इत्यादिवाक्येषु
ानामाकाशादिशब्दानां प्रसिद्धाकाशादिमात्रपरत्वप्रहाणेन तन्मात्राकाशादिप
सम् । स्वारस्यबाधाभावेऽपि क्लिष्टार्थकल्पनमयुक्तम् । प्रथमान्तानां पञ्चम्य
काशादिशब्दानामर्थवैरूप्यञ्च स्यात् । प्रथमान्तानामपि तन्मात्रपरत्वात् न
प्रमिति चेत् — तर्हि भूतादेः शब्दतन्मात्रमुत्पन्नम्, शब्दतन्मात्रात् स्
त्रमुत्पन्नमित्ययमर्थ उक्तः स्यात् । तदानीमुत्तरोत्तरतन्मात्राणां पूर्वपूर्वतन्म
ात् तेषां यगपदुत्पत्तिर्बाध्येत । तन्मात्रेभ्यः प्रसिद्धाकाशाद्युत्पत्तिः निष्प्र
च स्यात् ; ' एतस्माज्जायते प्राणः — खं वायुर्ज्योतिरापः ' इत्यादौ कवि
पे वेदवाक्ये तन्मात्रेभ्यः खाद्युत्पत्तिश्रवणाभावात् । प्रथमान्तानां शब्द
ावाचित्वमप्ययुक्तम् ; ' अद्भ्यः पृथिवी ' इत्यनेन भग्नत्वात् । न हि पृथिवी
गन्धतन्मात्रपरः ; अनन्तरवाक्यविरोधात् । ' तदण्डं समभवत् ' इ
ुपनिषदि, अन्यत्र ' पृथिव्या ओषधयः ' इत्येवानन्तरं श्रूयते । न हि गन
ात् अण्डोत्पत्तिरोषधीनामुत्पत्तिश्च भवति । किञ्च युगपदुत्पन्नेभ्यः तन्मात्रे
ोत्पत्त्यभ्युपगमे, 'पृथिव्यप्सु प्रलीयते ' इति प्रळयश्रुतिश्च विरुध्यते । पृथिव्
णस्य गन्धतन्मात्रस्य च सलिलकारणकत्वाभावात् । एवम् ' आपस्तेजसि लीयन्
भिश्च विरोधः । उत्तरोत्तरभूतानां पूर्वपूर्वभूतप्रसूतत्वाभावात् । अतः तन्मात्रा
त्पत्तिः कल्पकाभावात् सर्गप्रळयपरानेकवाक्यविरोधाच्चानुपपन्ना । छान्दोग्ये
जोऽसृजत–तत् तेज ऐक्षत–तदपोसृजत–ता अन्नमसृजन्त'इति तेजोबन्नवाच्चि
ां तन्मात्रपरत्वे स्वारस्यभङ्गः, तस्मिन् सोढेऽपि युगपदुत्पत्तिविरोधश्चावर्जनीयः

'आकाशाद्वायुः' इत्यादिवाक्यानां केचिदेवं निर्वाहमिच्छन्ति —— भूतादे-
माकाशाद्वायुः', 'आत्मन आकाशः संभूतः, आकाशाद्वायुः' इत्यादिवाक्येषु
शादयः शब्दा अविशेषेण स्थूलसूक्ष्मावस्थतत्तद्भूतवाचिनः । अतोऽर्थवैरू-
दोषा न स्युः । तत्रार्थसामर्थ्यात् सूक्ष्मांशस्यैव स्थूलभूतमनन्तरं प्रति कारण-
द्ध्येत्—इति । इदानीमपि तन्मात्राणां युगपदुत्पत्तिः दूरतः परित्यक्ता । किञ्च—
शाद्वायु' रित्यादीनि वाक्यानि मिथुनात् मिथुनोत्पत्तिवचनानि । पञ्चम्यन्तानां
तानाञ्च पदानामुभयवाचित्वात् । एवं सति मातापित्रोरिव पुत्रदुहित्रोरिव च
क्ष्मभूतयोर्न परस्परकार्यकारणभावः सिद्ध्येत् । पुत्रदुहितरौ प्रति पित्रो-
स्येव स्थूलाकाशस्यापि स्पर्शमात्रं वायुमपि प्रति कारणत्वं स्यात् । सूक्ष्मस्येव
काशस्यापि प्रकृत्युत्पन्नस्य स्थूलं सूक्ष्मञ्च वायुं प्रति हेतुतयाऽन्वयस्य अविशेषेण
तिपन्नत्वात् स्थूलाकाशस्य स्पर्शमात्रस्थूलवायुजननायोग्यत्वे प्रमाणान्तराभावात्।
समधिगम्यो ह्ययमर्थो यथाशब्दं स्वीकार्यः । अतः अर्थसामर्थ्यादभिमतव्यवस्था
। तथा, 'वायुराकाशे लीयते' इत्युक्ते स्पर्शतन्मात्रवाय्वोः स्थूलाकाशेऽपि
तिपादितः स्यात् । अतः सर्वं परमतं व्याकुलं स्यात् ।

तस्मात् प्रमाणान्तरागोचरे जगत्सर्गप्रळयादौ शब्दानां स्वरससिद्ध एवार्थः
ः । स्वप्रकरणस्थवाक्यानुगुण्यादुपबृंहणवचनानुगुण्याच्च प्रसिद्धानामेवाकाशादीनां
व्यवहिता [1]सृष्टिरित्यभ्युपगन्तव्यम् । 'तमसो भूतादिः, भूतादेराकाशम्'
षु व्यवधानेऽपि कार्यकरणभावनिर्देशदर्शनात् ।

तर्हि, 'अष्टौ प्रकृतयः षोडश विकाराः' इति श्रुतेः का गतिरिति चेत्—
हणनिपुणतरपरमर्षिसंदर्शितैव गतिः । नास्माभिः तद्विरुद्धनिर्वहणेऽभिनि-

[1] सृष्टिरभ्युपगन्तव्या ।

---

नास्माभिरिति । अत्र अष्टौ प्रकृतय इति प्रकृतिमहदहङ्कारतन्मात्राणामेव विवक्षा ; षोडश
इति पञ्चभूतैकादशेन्द्रियग्रहणम् । एषैव चतुर्विंशतितत्त्वताव्यवहारस्य बहुग्रन्थसंप्रति-
। कथमाकाशादीनां चतुर्णां प्रकृतित्वेनापरिगणनमिति चेत् — विवक्षितस्यार्थस्य तत्रा-
नात्र प्रकृतित्वं कार्यद्रव्यारम्भकत्वमात्रम् : किं तु पाञ्चभौतिकत्वस्य शरीरे [illegible]

वेष्टव्यम् । भगवता वेदव्यासेन हि मोक्षधर्मे याज्ञवल्क्यजनकसंवादे विकाराः प्रत्यक्षश्रुत्यन्तराविरोधेन दर्शिताः —

"अष्टौ प्रकृतयः प्रोक्ताः विकाराश्चैव षोडश ।
तथा व्यक्तानि सप्तैव प्राहुरध्यात्मचिन्तकाः ॥

अव्यक्तश्च महांश्चैव तथाऽहंकार एव च ।
पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् ॥

एताः प्रकृतयस्त्वष्टौ विकारानपि मे श्रुणु ।
श्रोत्रं त्वक् चैव चक्षुश्च जिह्वा घ्राणञ्च पञ्चमम् ॥

वाक् च हस्तौ च पादौ च पायुर्मेढ्रं तथैव च ।
शब्दस्पर्शौ च रूपञ्च रसो गन्धस्तथैव च ॥

एते विशेषा राजेन्द्र महाभूतेषु पञ्चसु ।
दशेन्द्रियाण्यथैतानि सविशेषाणि मैथिल ॥

मनः षोडशमित्याहुः अध्यात्मगतिचिन्तकाः" इति ।

अत्र ज्ञानप्रवृत्तिकारणानीन्द्रियाणि तद्विषयाः शब्दादयश्च तत्त्वान्तराः कत्वात् षोडश विकारा इति प्रतिपादितम् । 'एते विशेषा राजेन्द्र मह पञ्चसु' इति वैयधिकरण्यनिर्देशात् विशेषशब्दः शब्दस्पर्शादिगुणमात्रपरः । घोराश्च मूढाश्च विशेषास्तेन ते स्मृताः' (वि.पु.१.२.) इत्यत्र तदभावात् ि शब्दो गुणिपरः । पटस्य शुक्लः, पटः शुक्लः इत्यादिषु शुक्लादिशब्दानामिव ि

---

पञ्चभूतगतशब्दादिसर्वगुणाश्रयतया इन्द्रियाश्रयतया च तस्योपलभ्यमानत्वाच्च विकारभूते उपलभ्यामानानि तत्त्वानि विकारा इत्युच्यन्ते, अन्यानि तु प्रकृतिमहदहङ्कारतन्मात्राणि त लभ्यमानत्वात् उपलभ्यमानतत्त्वप्रकृतित्वाच्च प्रकृतय इत्युच्यन्ते इति तात्पर्यवर्णनसंभवात् सांख्याभिमतरीतिमुपेक्ष्य भगवत्पराशरोपबृंहितप्रकृतश्रुत्यनुरोधेन तत्त्वोत्पत्तिवादस्य न, प्रकृतयः' इति श्रुत्यादिविरोध इत्यादि वर्णनं यद्यपि संभवति-अथाप्यस्मिन्नर्थे उपपन्नेऽपि ना भिनिवेशः कार्यः, व्यासयमादिवचनपर्यालोचने अष्टौ प्रकृतय इत्यस्याभिप्रायान्तरावगमादिति

तथा व्यक्तानीति युक्तः पाठः; न तु अथाव्यक्तानीति । वस्तुतः, आसां तु व्यक्तानीत्येव संप्रतितनः पाठः (मोक्ष- ३१५.) ।

[स्यापि गुणपरत्वं गुणिपरत्वञ्च युक्तमेवेति प्रयोगवशादवगम्यते । नन्वेवं सां
[वैंशत्याधिक्यं स्यादिति चेन्न । द्रव्यरूपाणां कार्यकारणाचित्तत्त्वानामव्यक्तादी
[वैंशतिसंख्यानतिरेकात् । 'अष्टौ प्रकृतयः षोडश विकाराः' इत्यादिवाक्यस्य
[त्र्यपरत्वनियमो नास्तीति उपबृंहणवशादवगम्यते । अर्थान्तराणामनुपपन्नत्वाच
[का]शादीनामपि प्रकृतित्वे, 'अष्टौ प्रकृतय' इति श्रुतं प्रकृतीनामष्टसंख्याकत्वं
' इति चेन्न—तन्मात्राणां भूतेष्वन्तर्भावाभिप्रायेणाष्टसंख्यानिर्देशोपपत्तेः ।

तथा वसिष्ठकरालजनकसंवादेऽपि भूततन्मात्रव्यतिरिक्तानां शब्दस्पर्शादीन
[विशे]षशब्दोक्तानां षोडशविकारान्तर्भावः प्रतिपाद्यते—

"अव्यक्तमाहुः प्रकृतिं परां प्रकृतिवादिनः ।
तस्मान्महत् समुत्पन्नं द्वितीयं राजसत्तम[1] ॥
अहङ्कारस्तु महतः तृतीय इति नः श्रुतम् ।
पञ्च भूतान्यहंकारादाहुः सांख्यनिदर्शिनः[2] ॥
एताः प्रकृतयस्त्वष्टौ विकाराश्चापि षोडश ।
पञ्चैव च विशेषाश्च पञ्च पञ्चेन्द्रियाणि तु ॥" (भा.शां. ३११

अत्र पञ्चानां भूतानां प्रकृतिषु परिगणनात् केवलविकारत्वमपास्तम् । विशेष
स्य तन्मात्रपरत्वं तन्मात्राणां केवलविकारत्वञ्च न कस्यापीष्टम् । अतो विशेष
: शब्दस्पर्शादिगुणमात्रपर इति परिशेषात् सामर्थ्याच्च सिद्धम् । 'पञ्च भूता
भूतशब्दः तन्मात्रपरः; विशेषशब्द आकाशादिपरः' इति चेन्न । अप
[भ]ावेऽपि भूतशब्दस्य क्लिष्टार्थकल्पनाऽयोगात् । विशेषशब्दो गुणेष्वक्लिष्टः
[के]वलमुपबृंहणवचनस्थभूतशब्दस्यैव, श्रुतिवाक्यस्थाकाशादिशब्दानामपि तन्मात्र
स्वारस्याभावः स्फुटतरः ।

एवमुपनिषद्वाक्यानां परमर्षिवचसाञ्चामुख्यार्थाश्रयणमर्वाचीनसांख्यदुर्निबन्धनम्
वचनान्तरयुक्त्यन्तराभावात् । समीचीनं सांख्यमतं तु श्रुतिस्वारस्यानुगुण
अत्रैव दर्शितम्, 'आहुः सांख्यनिदर्शन (?)' मिति ।

1. द्वितीयमिति नः श्रुतम्. 2. निदर्शनम्.

तथा यमस्मृतौ विषयेन्द्रियाण्येव षोडश विकारा इत्युक्तम् –

"पञ्चविंशतितत्त्वज्ञो यत्रतत्राश्रमे रतः ।
प्रकृतिज्ञो विकारज्ञः स दुःखात् परिमुच्यते ॥
मनो बुद्धिरहंकारः खानिलाग्निजलानि भूः ।
एताः प्रकृतयस्त्वष्टौ विकाराः षोडशापरे ॥
श्रोत्राक्षिरसनाघ्राणं त्वक् च संकल्प एव च ।
शब्दरूपरसस्पर्शगन्धवाक्पाणिपायवः ॥
उपस्थपादाविति च विकाराः षोडश स्मृताः ।
चतुर्विंशकमित्येतत् ज्ञानमाहुर्मनीषिणः ॥
पञ्चविंशकमव्यक्तं षड्विंशः पुरुषोत्तमः ।
एतत् ज्ञात्वा तु मुच्यन्ते यतयः शान्तबुद्धयः ॥
अशब्दमरसस्पर्शं रूपगन्धविवर्जितम् ।
निर्दुःखं सुसुखं शुद्धं तद्विष्णोः परमं पदम् ॥
अजं निरञ्जनं शान्तमव्यक्तं ज्ञानमक्षरम् ।
अनादिनिधनं ब्रह्म तद्विष्णोः परमं पदम् ॥" इ

अत्र प्रकृतिषु परिगणनात् प्रथमोपादानाच्च प्रधानतत्त्वमव्य
इत्युक्तम् । संकल्पशब्देन तत्कारणं मनो विवक्षितम् । ज्ञानं ज्ञात
गात्मनः पञ्चविंशकत्वेनोक्तत्वात् परिशेषाच्च चक्षुराद्यगम्यमात्मतत्त्वमव्यक्त
'विकाराः षोडश स्मृताः' इति षोडशविकारशब्दोपादानात् 'एताः प्र
इत्युक्तत्वाच्चास्य स्मृतिवचनस्य, 'अष्टौ प्रकृतयः षोडश विकाराः' इति
मवगम्यते । अतस्तस्याः श्रुतेरयमर्थ इति यमेन निर्णीयत इति स्फुटम्

ईदृशस्मृत्युपबृंहितया अनया श्रुत्या विषयेन्द्रियाण्येव षोडश
विवक्षितानीति भगवतो भाष्यकारस्य हृदयमिति भगवद्गीताभाष्ये स्प
"महाभूतान्यहंकारो बुद्धिरव्यक्तमेव चे'ति क्षेत्रारम्भकद्रव्याणि ।
वाय्वाकाशानि महाभूतानि । अहङ्कारो भूतादिः । बुद्धिर्महान् । अव्य

[याणि दशैकञ्च पञ्च चेन्द्रियगोचराः ' इति क्षेत्राश्रितानि तत्त्वानि । श्रोत्रत्व
जैह्वाघ्राणानि पञ्च ज्ञानेन्द्रियाणि, वाक्पाणिपादपायूपस्थाः पञ्च कर्मेन्द्रियाणि दश
ति मनः । इन्द्रियगोचराश्च पञ्च शब्दस्पर्शरूपरसगन्धाः " इति । अत्र क्षेत्रारम्भ
णीत्यारम्भकद्रव्यपदेन, ' अष्टौ प्रकृतय ' इति प्रकृतिशब्दो व्याख्यातः । ' क्षेत्र
ते तत्त्वानि ' इति विषयेन्द्रियाणां षोडशानां साधारणाकार उक्तः ।

एवम् , ' अष्टौ प्रकृतय षोडश विकाराः ' इति वाक्येऽपि विषयेन्द्रियाण्ये
राविरोधेन षोडशविकारत्वेन विवक्षितानीति व्यासादीनां परमर्षीणां भाष्यकारस
दयं ?] स्फुटतरमवगम्यते । अतः आकाशाद्वायुरित्यादीनां यथोक्त एवार्थः ।

---

ननु संभवति द्रव्यपरतयैव, ' अष्टौ प्रकृतयः षोडश विकाराः ' इत्यस्य निर्वाहे विकारपदे
ग्रहणं न युक्तम् । कथं निर्वाह इति चेत्—नात्र प्रकृतिशब्दः तत्त्वान्तरोपादानत्वमात्रे
किंतु समष्टितत्त्वाभिप्रायेण । विकारपदञ्च व्यष्ट्यन्तर्गतवस्तुपरम् । एवं हि व्यष्टिप्रलय
तरं समष्टिप्रलयवर्णनारम्भे भगवान् पराशर आह (६.४.३०.), ' एवं सप्त महाबुः
प्रकृतयः स्मृताः । प्रत्याहारे तु ताः सर्वाः प्रविशन्ति परस्परम् ' इति । आवरणानि च
णे, किन्तु भूतानीति तत (१.२.) एव सुबोधम् । अतः अण्डकटाहरूपपृथिवीसहित
ताः वाय्वादयः ( वि-१२. ) व्यष्टिप्रपञ्चहेतुत्वात् साक्षादुपभोगानर्हत्वात् समष्टय
। व्यष्ट्यन्तर्गतानि तु इन्द्रियाणि च भूतानि च विकाराः । भूतानामपि इन्द्रियविषयत्वेऽ
विशिष्टतयैवेन्द्रियग्राह्यत्वात्, इन्द्रियव्यवस्थापकत्वरूपमहिमशालित्वाच्च गुणानाम्, तेषामे
विषयतया निर्देशः सर्वदर्शनसुप्रसिद्ध इति क्वचित् गुणपुरस्कारेण निर्देशेऽपि गुणिन
न तात्पर्यम् । एवञ्च, 'महाभूतान्यहङ्कारः ' इति गीतादिकं सुस्थम् । 'एते विशेषा राजेन्
पञ्चसु ' इति शब्दादीनां (भारतादौ) निर्देशस्थलेऽपि महाभूतेष्विति द्रव्याणां विशेषणतः
द्रव्यविशिष्टगुणानामेव विकारत्वं गम्यते । गुणविशिष्टद्रव्यमिति द्रव्यवर्तिगुण इति
नेत्रम् इत्याशङ्कायाम्, निर्वाहप्रकारो यः कश्चिदस्तु । आकाशाद् वायुरित्यादेरर्थस
व, न तत्रान्यथाभावः । अस्माभिस्तु गुणानामपि चतुर्विंशतितत्त्वमध्ये गणनं युक्तमि
। तथाहि तत्त्वसागरसंहितावचनम् (श्रीरहस्यत्रयसारोद्धृतम्) 'भूतानि च कवर्गे
द्रियाणि च । टवर्गेण तवर्गेण ज्ञानगन्धादयस्तथा ' इति ज्ञानेन्द्रियैः सह गन्धादीनामे
तेमध्ये निवेशकम्, स्वारस्यात् । (व्याख्यातारस्तु गन्धतन्मात्रादि ग्राहयन्ति) । तथा
त्तभाष्ये श्रीषट्सहस्रिकायामपि, ( ८.८.५. ), " प्रकृतिमहदहङ्कारैकादशेन्द्रिय
देभूतशब्दादिविषयरूपचतुर्विंशतितत्त्वविलक्षण " इति इत्याशयेन निगमयति अ
दिति । अत्र तत्त्वमुक्ताकलापश्लोकः (१.१५) तत्र सर्वार्थसिद्धिश्चानुसंधेयौ —

" तत्त्वेष्वाथर्वणेऽष्टौ प्रकृतय उदिताः षोडशान्ये विकाराः

निष्कर्षेदम्परेऽस्मिन् वचसि तदितरत् सर्वमावर्जनीयम् ।

**तत् संवत्सरमात्रमुषित्वा द्विधाऽकरोत्, अधस्ताद्भूमिमुपरिष्टा
मध्ये पुरुषो दिव्यः सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्**

---

एवं ब्रह्माण्डसृष्टिरुक्ता। अथ हिरण्यगर्भोत्पत्तिमाह **तत् संवत्सरम**
**द्विधाऽकरोदि**ति ।। वक्ष्यमाणः पुरुषः तस्मिन्नण्डे संवत्सरमात्रमुषित्वा परि
द्विधाऽकरोदित्यर्थः । **आकाशमिति** ।। **अकरो**दित्यन्वयः । **आकाशा**
स्वर्गादि(?)परः । **मध्ये** अन्तरिक्षे **पुरुषः**। अभूदिति शेषः । पुरुषशब्द
परत्वव्यावृत्त्यर्थं **दिव्यः पुरुष** इत्युक्तम् । तस्याण्डोत्पन्नस्य दिव्यपुरुषस्य
प्रतिपाद्यपरमपुरुषात्मकत्वमाह **सहस्रशीर्षा पुरुष** इति । अन्यथा द्वितीय
पौनरुक्त्यप्रसङ्गात् । सर्वज्ञत्वात् सर्वशक्तित्वाच्च सर्वत्र शिरश्चक्षुःपादका
करणसमर्थो यो महापुरुषः श्रुतः, तदात्मकोऽयमण्डोत्पन्नः पुरुष इत्यर्थः ।

इदञ्च सामानाधिकरण्यं परमपुरुषान्तर्यामिकत्वनिबन्धनम्; न तु
कृतम् । ‘**तस्य ब्रह्मा बिभीते**’ इति तस्य मृत्युभयाभिधानात्, ‘भीषा
श्चेन्द्रश्च मृत्युर्धावति पञ्चमः’, ‘स यश्चायं पुरुषे । यश्चासावादित्ये । स ए
पुण्डरीकाक्षस्य परमपुरुषस्य, मृत्योरपि भयनिमित्तत्वाच्च मृत्योर्भीतस्य मृत्युभ
च स्वरूपैक्यानुपपत्तेः । शाखान्तरे हिरण्यगर्भस्य, महापुरुषस्य महापुरुषत्वा
म्नानाच्च न स्वरूपैक्यम् । ‘स प्रजापतिरेकः पुष्करपर्णे समभवत्’ इत्यार

---

दृष्ट्वा सांख्यं पुराणादिकमपि बहुधा निर्वहन्त्येतदेके
चिन्तासाफल्यमान्द्यात् श्रमबहुलतयाऽप्यत्र तज्ज्ञैरुदासि ।। इ

**संवत्सरमात्र**मिति मात्रशब्दः कार्त्स्न्यार्थकः । पूर्णं संवत्सरमित्यर्थः । **अध**
अत्र मोक्षधर्मे (३१६), ‘ततो ब्रह्माणमसृजत् हैरण्याण्डसमुद्भवम् । सा मूर्तिः सर्वभू
मनुशुश्रुम । संवत्सरमुषित्वाऽण्डे निष्क्रम्य च महामुनिः । संदधेऽर्धं महीं कृत्स्न
प्रजापतिः । द्यावापृथिव्योरित्येष राजन् वेदेषु पठ्यते । तयो शकलयोर्मध्यमाकाशमकर
इति । मनुश्च –‘तस्मिन्नण्डे स भगवानुषित्वा परिवत्सरम् । स्वयमेवात्मनो ध्यानात् तद
द्विधा । ताभ्यां स शकलाभ्याञ्च दिवं भूमिं च निर्ममे । मध्ये व्योम’ (१.१२.) इति

**ननु** दिव्यो देव एको नारायण इति नारायणे दिव्यशब्दप्रयोगस्यात्रोपनिषदि
वाक्यमिदं परमात्मपरमेवास्तु, कृतं चतुर्मुखविवक्षयेत्यत्राह **अन्यथा द्वितीय**

ोऽग्रे भूतानां मृत्युमसृजत् त्र्यक्षं त्रिशिरस्कं त्रिपादं खण्डपरशुम् ।

ा समभूत्' इति प्रजापतिनोक्ते, 'नेत्यब्रवीत् । पूर्वमेवाहमिहाऽऽसमिति ।
ग्र पुरुषत्वम् । स सहस्रशीर्षा पुरुषः' इति चतुर्मुखस्य परमपुरुषावेदनं हि
म् । अत एव ह्युक्तं ब्रह्मणैव,

'यत्र देवा न मुनयो न चाहं न च शङ्करः ।
जानन्ति परमेशस्य तद्विष्णोः परमं पदम् ॥' इति ॥

ब्रह्मरुद्रसंवादेऽप्युक्तम्—

'तवान्तरात्मा मम च ये चान्ये देहिसंज्ञिताः ।
सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित् क्वचित्' इति ।

न्तर्यामित्वनिबन्धनं सामानाधिकरण्यम् ।

तिशब्दो भगवदेककर्तृकसर्गसमाप्तौ ।

थ हिरण्यगर्भकर्तृकसर्गमाह सोऽग्रे भूतानां मृत्युमसृजदिति । मृत्युं

ब्रवीदिति । पुष्करपर्णे जातेन प्रजापतिना स्वकीयमांसनखवालोत्पन्नवातरशन वैखानस
ायेन अपामन्तः कूर्मं भूतं सर्पन्तमपि स्वत्वङ्मांसाभ्यां संभूतमभिमत्योक्ते, स
न्यषेधीदित्यर्थः ।

ाशीर्षा पुरुष इत्यस्य तत्र 'भूत्वोदतिष्ठत्' (तै-आ-अ-१ २३.) इत्युत्तरत्रान्वयः ।
मति । खण्डकपरशुविशिष्टमित्यर्थः स्यात् । रुद्रसृष्टिस्तु, 'ललाटात् क्रोधजो रुद्रो
त्तरत्र वक्ष्यते ।

' इति । नन्वत्र प्रथमपुरुषशब्दः चतुर्मुखान्तर्यामिपरः, दिव्य इत्यादि नारायणपरमि-
। तदयं तच्छब्दः परमपुरुषपर एव किं न स्यात् । तत्कर्तृकैव सृष्टिः चतुर्मुखस्येव
' सर्वाणि च भूतानीत्यन्तानामुच्यताम् । चतुर्मुखकर्तृकसृष्टिस्तु, हिरण्यज्योति-
रे वक्ष्यमाणा परमस्तु । एवञ्च ब्राह्मणक्षत्रियादीनां भगवदवयवोत्पन्नत्वं सिद्ध्यति ।
भगवतोऽवयवानामेव तथात्वम्, 'स्त्रीरत्नकारणमुपात्ततृतीयवर्णं दैत्येन्द्रवीरशयनं
र् । देवेश यौवनगजेन्द्रकराभिराममूरीकरोतु भवदूरुयुगं मनो मे', 'सर्गेष्विदं भवति
ृतिः' इत्यादौ । यद्ययं स इति शब्दो ब्रह्मार्थकोऽभविष्यत्, तर्हि उपरि, तस्य
, सो ब्रह्माणमेव विवेश' इत्यत्रापि पूर्ववत्, 'तस्य स बिभीते, स तमेव विवेश'
एव प्रायोक्ष्यत । न च मनुवचनविरोध इति शङ्क्यम्—तत्र चतुर्मुखजन्य-
। प्रजापत्यादिषु कथनाद्यनेकवैलक्षण्यदर्शनेन स इत्यस्य चतुर्मुखार्थकत्वेऽपि विरोध-

**तस्य ब्रह्मा बिभीते। सो ब्रह्माणमेव विवेश। स मानसान् सप्त पुत्र**
**ते ह विराजः सप्त मानसानसृजन्। ते ह प्रजापतयः।**

---

विशिनष्टि **त्र्यक्षमित्यादिपदैः। तस्य ब्रह्मा बिभीते।** **तस्येति** संबन्ध
तस्मात् मृत्योर्भीतः। स्रष्टुरपि भयावहो मृत्युः; किमुत अन्येषामित्यर्थः।
**णमेव विवेशेति। सो ब्रह्माण**मिति सन्धिश्छान्दसः। ब्रह्मशरीरे
इत्यर्थः। **स मानसानिति। सः** ब्रह्मा सप्त **मानसानसृजत्।** मनसाऽसृ
**ते ह विराजः** विविधदीप्तियोगात् विराट्छब्दवाच्यभूताः सप्त मानसपुत्रा
मानसानसृजन्। कथं मनसा सृष्टिरित्यत्राह **ते ह प्रजापतय** इति। प्र
मनसा स्रष्टुं शक्ता हीत्यर्थः।

---

परिहाराभावात्। पुरुषसूक्तं तु कतमस्य पक्षस्य साधकमिति विमर्शपदं नातिकामा
प्रलयानन्तरभाविप्रथमसृष्टिप्रकरणत्वाच्चास्य सर्वस्य परब्रह्मजन्यत्ववर्णनपरत्वं युज्य
**नामसहस्रभाष्ये**ऽभाषिषत, 'यतः सर्वाणि भूतानि भवन्त्यादियुगागमे' इत्यत्र—
ब्रह्मसर्गादुपरि, अवान्तरसर्गे च ब्रह्मादिमुखेन सृजति, अथापि प्रथमसृष्टौ न तथे
**आदियुगागमे** इति" इति। देवनायकपञ्चाशत्येव च श्रीरत्नमित्यादिवत् 'वेदेषु
निखिलेष्वधीतं व्यासादिभिर्बहुमतं तव सूक्तमग्र्यम्। अङ्गान्यमूनि भवतः सुभगान्यधीते
जनितवन्ति विरिञ्चपूर्वम्' इत्यपि द्रष्टव्यम्। अतो ब्रह्मद्वितीयदिनादिरूपेषु कल्पेषु चतु
त्वेऽपि सर्वेषाम्, आदौ परमपुरुषजन्यत्वं भूतानामुपपन्नमिति चेत्—अस्तु परमपुरुषकर्तृ
सृष्टिरनेकेषां भूतानाम्—अथापि प्रकृतवाक्ये स इति स एव ग्राह्य इति न विशेषण
प्रत्युत, **सहस्रबाहुरिति** इति इतिशब्देन भगवदेककर्तृकसृष्टिसमाप्तिद्योतनात्,
**पुरुष** इति ब्रह्मान्तर्यामितया गृहीतस्य **सोऽग्रे** इति स इत्यनेन ग्रहणौचित्याच्च
स्रष्टृत्वमेव मृत्युप्रभृतीनाम्। अत एव **सोब्रह्माणमेव** इति **एव**कारोऽपि संगच्छ
स्रष्टारमेव स्वयं हन्त मृत्युः प्रविवेशेति वर्णनपरत्वात् तस्य। तदुपरि प्रजापतयः
अपि चतुर्मुखजन्यत्वेन प्रसिद्धाः; न भगवत्पुत्रतया। द्वितीयखण्डे स्त्रीपुरुषरूपद्वैधकर
सृष्टिस्तु शंस्यमाना चतुर्मुखजन्यमनुसृष्टित्वेन संभावनमर्हति, बृहदारण्यकानुरोधात्
ललाटात् क्रोधजो रुद्र इत्यत्र, 'अस्यैव चानुजो रुद्रो ललाटात् यः समुत्थितः' इत्युपबृं
मुपेक्ष्य रुद्रे ब्रह्मजन्यत्वं प्रमाणान्तरानुसारेण ग्राह्यम्। महतो भूतस्य निश्वसित
मैत्रेयीविद्यायामिव साक्षात्परमात्मनिःश्वसितरूपं प्रतीतमपि इह तथा न ग्राह्यमित्यलम्

**ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः ।**
**ऊरू तदस्य यद् वैश्यः पद्भ्यां शूद्रो अजायत ।**
**चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत ।**
**श्रोत्राद्वायुश्च प्राणश्च हृदयात् सर्वमिदं जायते ॥**

इति प्रथमः खण्डः ॥

(२)

अथ द्वितीयः खण्डः ॥

**पानान्निषादा यक्षराक्षसगन्धर्वाश्च, अस्थिभ्यः पर्वता लोमभ्य स्पतयः, ललाटात् क्रोधजो रुद्रोऽजायत(जायते) ।**

नश्च हिरण्यगर्भात् प्राणिसृष्टिमाह — **ब्राह्मणोऽस्य मुखमासी**दिति । खमासीदित्यौपचारिकं सामानाधिकरण्यम् । मुखजात इत्यर्थः । **पद्भ्यां** नन्तरोक्तिः । **बाहू राजन्यः कृतः** । बाहुभ्यां **कृतः** तज्जनित **ऊरु तदस्य यद्वैश्यः** । [यदिति] नपुंसकं वस्तुत्वाभिप्रायम् । वैश्य इति ब्रह्मणः **ऊरू** ऊरुभ्यां जातमित्यर्थः । **प्राणः** पञ्चवृत्तिप्राणः । **हृदयात्** र्थः । **सर्वमिदम्** = अनुक्तं सर्वमिदम् ।

ते श्रीहरितकुलतिलकवाग्विजयिसूनोः श्रीरङ्गराजदिव्याज्ञालब्धवेदव्यासा- य श्रीसुदर्शनार्यस्य कृतौ सुबालोपनिषद्विवरणे प्रथमः खण्डः ॥

॥ श्रीसुदर्शनार्यमहादेशिकाय नमः ॥

(२)

थानुक्तसर्गप्रपञ्चपूर्वकं प्रळय उच्यते **अपाना**दिति । मनुष्येषु निकृष्टाः वयोन्यवान्तरभेदाः यक्षराक्षसगन्धर्वाश्च चतुर्मुखस्यापानादजायन्तेति अध्या- जायतेति पदस्य विपरिणामेन वा अन्वयः । **ललाटात् क्रोधज** इति । तुर्मुखस्य मनोवृत्तिषु क्रोधः, अवयवेषु ललाटश्च हेतुः । 'ब्रह्मणः पुत्राय दिष्वपि क्रोधात् ललाटोद्भवतया पुत्रत्वमेतदैकार्थ्येन सिद्धम ।

हिरण्यज्योतिरित्यारभ्य वक्ष्यमाणा विलक्षणसृष्टिरत्र खण्डे युक्ता । ततः पूर्वमु- र्वखण्डे । सत्यम्—सृष्टिरेयं परमपुरुषकर्तृकाऽपि कदाचित, कदाचिच्चतुर्मुखकर्तृका- सूचनार्थेवम ।

**तस्यैतस्य महतो भूतस्य निःश्वसितमेवैतत्, ऋग्वेदो यजुर्वेदः साम वेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दोविजि(चि?)तं ज्योतिषाम मीमांसा धर्मशास्त्राणि व्याख्यानान्युपव्याख्यानानि च सर्वाणि च**

**हिरण्यज्योतिर्यस्मिन्नयमात्माऽधिक्षीयन्ति भुवनानि विश्वा द्विधाऽकरोत्, अर्धेन स्त्री अर्धेन पुरुषः। देवो भूत्वा देवानसृज ऋषीन्, यक्षराक्षसगन्धर्वान्, ग्राम्यानारण्यान् पशूनसृजत्। इतरा ऽनड्वानितरा बडबेतरोऽश्व इतरा गर्दभीतरो गर्दभ इतरा विश्वम्भ विश्वम्भरः।**

---

अथ शास्त्रप्रवर्तनमाह **तस्यैतस्येति**। **तस्य** अण्डसंभवस्य एतस्य स्रष्टुर्हिरण्यगर्भस्येत्यर्थः। **महतो भूतस्येति** परमात्मवाचिशब्देन सामाना हिरण्यगर्भकर्तृकस्य सर्वस्य भगवदधीनत्वं ज्ञाप्यते। 'महद्भूतमनन्तमपारम् वा अक्षरस्य महतो भूतस्ये' ति, 'एको विष्णुर्महद्भूत' मिति च श्रु महद्भूतशब्दयोः भगवति प्रसिद्धिरविगीता। **निश्वसित**मिति ततः प्रवृत्तत्वं वि **सर्वाणि च** [तानीमानि] **भूतानि** निश्वसितमित्यन्वयः। **भूत**शब्दः इ

**हिरण्यज्योति**रित्यादि॥ हिरण्यसमानं ज्योतिः यस्य सः **हिरण** रित्यात्मविशेषणम्। यस्मिन् विश्वा भुवनानि अधिक्षीयन्ति = वश्यतया सोऽयं हिरण्यज्योतिरात्मा = हिरण्यगर्भः आत्मानं द्विधाऽकरोदित्यन्वयः अर्धांशेन स्त्री अर्धांशेन पुरुषः। अभूदिति शेषः। शरीरिणः स्व स्वांशाभ्यां तत्तज्जातीयः पुरुषोऽभूत्, तत्तज्जातीया स्त्री चाभूदित्यर्थः प्रपञ्चयति **देवो भूत्वा देवानसृज**दित्यादिना। **यक्षराक्षसगन्धर्वा**निति तीयः पुमान् भूत्वा ऽसृजदिति प्रकरणवशादवगम्यते। ग्राम्यारण्यपशुसृष्टिं यति **इतरा गौ**रित्यादिना। **इतरा** पूर्वं ब्रह्मणा स्वांशेन सृष्टा स्त्री गौ **इतरः** तत्कल्पितः पुरुषोऽ**नड्वान्** पुङ्गवोऽभूत्। गोजातीयसृष्ट्यर्थमित्यर्थः **बडबा इतरोऽश्व** इत्यादेरप्येवं योजना। **बडबा** तुरगस्त्री। **विश्वम्भरी** वहा उष्ट्री। अर्थान्तरमन्वेष्टव्यम्।

**सोऽन्ते वैश्वानरो भूत्वा संदग्धे (स दग्धे ?) सर्वाणि भूतानि पृथिव्यप्सु प्रलीयते। आपस्तेजसि लीयन्ते। तेजो वायौ लीयते काशे लीयते।**

अथ प्रळयं प्रतिपादयति **सोऽन्ते** इत्यादिना। **सः** हिरण्यगर्भरूपः परम **अन्ते** स्थितिकालसमाप्तौ **वैश्वानरः** कालाग्निर्भूत्वा **सर्वाणि भूतानि** कार्य **संदग्धे(?)** दहति = धक्ष्यतीत्यर्थः। भवनदहनक्रिययोर्भेदात् स इति ः। दाहानन्तरं प्रळयमाह **पृथिव्यप्सु प्रलीयत** इति। पूर्वावस्थाप्रहाणेन संसर्गो लयः। 'लीङ् श्लेषणे' इति हि धातुः। कार्यस्य तदुपयुक्तकारण उपादानम्। तदतिरिक्तांशस्त्वपादानम्। तदपेक्षया कार्यस्य विभागव्यपदेशः पञ्चम्यन्तेन उच्यते। अपादानं (उपादानं ?) त्यक्तकार्यावस्थद्रव्यमपादानेन भवति। तस्य तदानीम्, घटस्य भूतलवत् अधिकरणत्वादपादानमेव सप्तम्यन्ते। अपादानस्योपादानद्रव्यसजातीयत्वात्, 'कारणे लय' इति व्यपदेशः। **प्सु प्रलीयते**। पृथिवी पृथिवीत्वावस्थां तदुपक्रमभूतां गन्धतन्मात्रावस्थाञ्च अब्ववस्था सती प्रागवस्थितेषु समुद्रादिजलेषु संसृष्टा भवतीत्यर्थः। स च समानाकारयोर्निरन्तरसंश्लेषरूपत्वादैक्यमित्युच्यते। शुक्लगो (?) क्षीरे कपि-(?)क्षीरं संसृष्टमेकीभूतमिति व्यपदिश्यते। **आपस्तेजसि लीयन्त** इत्यादि-मपि अयमेवार्थः। त्यक्तजलावस्थस्य त्यक्तरसतन्मात्रावस्थस्य च द्रव्यस्य आपन्नस्य प्रागवस्थिततेजस्संपर्को लयः। एवमुत्तरत्राप्यनुसन्धेयम्।

एतत् सर्वं भगवता पराशरेण स्पष्टमुक्तम् —

> 'आपो ग्रसन्ति वै पूर्वं भूमेर्गन्धात्मकं गुणम्।
> आत्तगन्धा ततो भूमिः प्रळयत्वाय कल्पते।

---

कालाग्निरिति। श्रीविष्णुपुराणे द्रष्टव्यमिदम् (६-३.)।

एतत् सर्वमिति। विवेचितलयशब्दार्थाधिगमौपयिकोऽर्थः, तत्रतत्र तन्मात्रद्वारकत्वञ्चे- **आपो ग्रसन्ती**ति श्लोकः पृथिव्याः गुणापक्षयवर्णनेन तस्याः प्रलयौन्मुख्यं दर्शयति। लीयमानस्य सारांशहानि — अवयवशैथिल्य — क्रमिकह्रासादिपूर्वमेव . विलयदर्शनात

प्रणष्टे गन्धतन्मात्रे भवत्युर्वी जलात्मिका ।
आपस्तदा प्रवृद्धास्तु वेगवत्यो महास्वनाः ।
सर्वमापूरयन्तीदं तिष्ठन्ति विचरन्ति च ' इति,

तथा,

' नश्यन्त्यापः पुनस्ताश्च रसतन्मात्रसंक्षयात् ।
ततश्चापो हृतरसाः ज्योतिष्ट्वं प्राप्नुवन्ति वै ।
अग्न्यवस्थे तु सलिले तेजसा सर्वतो वृते ।
स चाग्निः सर्वतो व्याप्य आदत्ते तज्जलं तथा ।
प्रणष्टे रूपतन्मात्रे हृतरूपो विभावसुः ।
प्रशाम्यति तथा ज्योतिर्वायुर्दोधूयते महान् ।
निरालोके तदा लोके वाय्ववस्थे च तेजसि ' इत्यादिना ॥

अत्र, ' प्रणष्टे गन्धतन्मात्रे भवत्युर्वी जलात्मिके ' त्यनेन स्थूलपृथि
गन्धतन्मात्रावस्थाप्रहाणेन जलत्वापत्तिरुक्ता । ' आपस्तदा प्रवृद्धास्तु 'इत्यने
वस्थितानामपां पृथिव्यवस्थान्तररूपसलिलान्तरसंसर्गात् तदेकीभूततया प्रवृद्धत्व
' सर्वमापूरयन्ती ' ति पूर्वपृथिव्याक्रान्तप्रदेशस्यापि सकलिलस्याऽऽपूरितत्वमुक्त
मग्न्यवस्थजलस्यापि रसतन्मात्रावस्थाप्रहाणेन ज्योतिष्ट्वापत्तिः कण्ठोक्ता—' अग्न्य
सलिले तेजसा सर्वतो वृते ' इति । [ अग्न्यवस्थे सलिले ? ] औज्वल्यगुणेन
सति प्रागवस्थितो ह्यग्निः सर्वतो व्याप्य=पूर्वजलसंसृष्टमपि प्रदेशं व्याप्य तज्ज
वस्थमादत्ते = स्वात्मनैकीकरोतीत्यर्थः । ' प्रणष्टे रूपतन्मात्रे ' इत्यादिना
तन्मात्रावस्थाप्रहाणेन वायुत्वापत्तिः, तेनैकीभावात् प्रागवस्थितस्य वायोरतिमहत्त्व
प्रतिपादिता । एवमुपबृंहणानुगृहीतत्वात् **पृथिव्यप्सु प्रलीयत** इत्यादिव
यथोक्त एवार्थः ।

---

गन्धस्य च सारगुणत्वात् तथोक्तिः । **प्रनष्ट** इत्यादिना च पृथिव्याः गन्धतन्त्रलयद्वारा व
र्णितः । यद्वा **आपो प्रसन्तीति** पूर्वार्धे गन्धतन्मात्रस्य स्वस्मिन् विलापने अपां
दर्शयति । उत्तरार्धञ्च अत एव पृथिव्याः गन्धतन्मात्रद्वारा जले विलयपरम् ।

**सकलिलस्येति** । **कलिल**शब्देन ब्रह्माण्डान्तर्गतसर्वलोकग्रहणम् ।

**काशमिन्द्रियेष्विन्द्रियाणि तन्मात्रेषु ।**

---

**काशमिन्द्रियेषु इन्द्रियाणि तन्मात्रे**ष्विति । अत्र इन्द्रियाणि तन्मा-
न लयस्थानत्वेन विवक्षितानि । इन्द्रियाणामाकाशकारणत्वाभावात् ;
न्द्रियकारणत्वाभावात् । प्रलीयत इति पदाश्रवणाच्च । अत एव लय-
त्र न युक्तः । प्रथमेतरसर्ववाक्येष्वनुषङ्गश्चेत्, मध्यगतवाक्यद्वयेऽपि
ात् । पूर्वापरवाक्येषु सर्वेषु लयवाचिपदस्य पठितत्वात् मध्येऽनुषङ्गश्चानु-
तो लयपदाश्रवणं लयस्याविवक्षितत्वं दर्शयति । अतः संसर्गमात्रमेव
नन्वाकाशस्येन्द्रियसंयोगः प्रागप्यस्तीति प्रळयदशायां तदुक्तिवैयर्थ्यमिति
] इह विवक्षितस्य संसर्गस्य प्रागसिद्धत्वात् । मनआदीनामिन्द्रियाणां हि
तैराप्यायनं श्रुतिस्मृतिषु प्रसिद्धम्, 'अन्नमयं हि सोम्य मन आपोमयः
ी वाक्', 'श्रोत्रं नभो घ्राणमुक्तं पृथिव्याः' इत्यारभ्य, 'वाय्वात्मकं
ंत,' 'नभः श्रोत्रञ्च तन्मय' मित्यादिषु । तत्र पृथिव्यादिषु वायुपर्यन्तेषु
तत्तदिन्द्रियाप्यायकभूतांशानामपि प्रलीनतया तेषामाकाशतापन्नत्वात्
ेषु स्वान्तर्गतेतरभूतमाकाशमेव संसर्गितयाऽवस्थितम् ; न तु पृथिव्या-
अथ इन्द्रियाणामाकाशस्य च अहङ्कारकार्यत्वात् सेन्द्रियस्य स्वान्तर्गते-
स्याकाशस्य तत्र लयं वक्तुम्, आकाशस्य तन्मात्रावस्थापन्नस्यैवेन्द्रिय-
**इन्द्रियाणि तन्मात्रे**ष्विति । पूर्वमाकाशसंसृष्टानीन्द्रियाणि पश्चात्
ु संसृष्टानीत्यर्थः । परित्यक्ततन्मात्रावस्थतया पृथिव्यादिषु प्रलीनेषु
ीनामवस्थानानुपपत्तेः शब्दतन्मात्रमेव **तन्मात्र**शब्देन विवक्षितम् ।
ायकपृथिव्यादिभूतांशानामपि स्वस्वकारणतत्त्वलयक्रमेण शब्दतन्मात्र-
तदंशेन भेदविवक्षायां बहुवचनम् । एतदुक्तं भवति—इन्द्रियाप्यायक-
षां आकाशतापन्नत्वात् आकाशस्यैवेन्द्रियेषु संसर्ग आसीत् ।
भूतानां शब्दतन्मात्रतापन्नत्वात् इन्द्रियाणि शब्दतन्मात्रभेदेषु
ति ।

**तन्मात्राणि भूतादौ लीयन्ते ।**

---

अथ सेन्द्रियाणां शब्दतन्मात्रांशानां स्वकारणे प्रळयमाह त
**भूतादौ लीयन्ते** इति। भूतादिशब्दोऽहङ्कामात्रपरः। इन्द्रियाणां स
कारकार्यतया तस्मिन्नंशे लयोपपत्तेः। तामसाहंकारांशे लयानुपपत्तेश्च

यद्वा — अण्डान्तर्गस्य भूतचतुष्टयस्य स्वस्वतन्मात्रलयक्रमेणाक
राकाशस्येन्द्रियसंसर्गश्चोक्तौ। अथ तेनाकाशेन सह अण्डात् बहिरावरणत्वेन
भूतानां तन्मात्रावस्थापत्तिरूपं प्रळयमिन्द्रियसंसर्गञ्चाह **इन्द्रियाणि तन्मात्रे**
ब्रह्माण्डतदवरणरूपेणावस्थितानि पृथिव्यादीनि भूतानि स्वस्वकारणे प्रल
तन्मात्रावस्थां क्रमेणापन्नानि भवन्ति। तेषु तन्मात्रेष्विन्द्रियवर्गः क्रमे
इत्यर्थः। अथाण्डोदरतद्बहिर्भागावस्थितमहाभूतकारणानां साधारणं
**तन्मात्राणि भूतादौ लीयन्त** इति। तानि तन्मात्राणि साक्षात् पर
स्वकारणभूतेऽहङ्कारे साक्षात् परम्परया च लीयन्त इत्यर्थः।

अयमर्थो भगवता पराशरेण स्पष्टमुक्तः, 'आपो ग्रसन्ति वै पूर्वं भूमेः
गुण'मित्यादिना अण्डान्तर्गतानां तत्त्वानामव्यक्तपर्यन्तं प्रळयमुक्त्वा,

---

**अहङ्कारमात्रपरः** इति। कृत्स्नाहङ्कारपरः; न तु महाभूतकारणतामसाहङ्
इत्यर्थः। तन्मात्राणीति निर्देशानुसारेण **भूतादौ** इति निर्देशः कृतः। अत्र तन्मात्रप
वाक्यानुसारेण सेन्द्रियतन्मात्रपरत्वे सिद्धे भूतादिपदमपि सात्त्विकाहङ्कारविशिष्टभूतादिप
ग्राह्यञ्चेति भावः।

**तन्मात्रेषु, तन्मात्राणी**ति बहुवचनोपपत्तिसंपादकं पक्षान्तरमाह **यद्वे**ति।
पक्षे, **पृथिव्यप्सु प्रलीयत** इत्यादिवाक्यानामविशेषेण ब्रह्माण्डान्तर्वर्तितदावरणोभ
भूतविलयपरत्वं सुवचम्। अस्मिंस्तु पक्षे अन्तर्वर्तिभूतमात्रलयपरत्वम्। अन्यथा बहि
व्यादिलयस्यापि विवक्षितत्वे अबादिलयात् प्रागेव गन्धतन्मात्रादिलयस्यापि निष्पन्नतया
भूताकाशमात्रस्य परिशिष्टतया तस्य, 'आकाशमिन्द्रियेषु' इति इन्द्रियसंसर्गो कथ्य
आकाशकारणभूतं शब्दतन्मात्रमेव स्थितमिति, 'इन्द्रियाणि तन्मात्रेषु' इति बहुवचना
तदवस्था स्यात। एवञ्चाण्डान्तर्वर्तिषु भूतेषु आकाशमात्रपरिशेषः प्रथममुक्तः। अथ त
संसर्गः। अथ चाण्डकटाहरूपपृथिव्याः तदावरणपरम्परान्तर्गतानां जलादीनाञ्च लये
तत्तद्भूतलयाधारतत्तत्तन्मात्रसंबन्धः क्रमेण भवतीति **इन्द्रियाणि तन्मात्रेषु** इति ब
पत्तिरस्मिन् पक्षे इति भावः। **सोन्ते वैश्वानर** इति पूर्ववाक्यञ्च व्यष्टिमात्रविषयकमि

ण्डान्तर्वर्तिपृथिव्यादिलयानन्तरमाकाशस्येन्द्रियसंसर्गः **आकाशमिन्द्रियेषु** इत्यने-
तरमिन्द्रियसंसर्गः तन्मात्रेष्विति, **इन्द्रियाणि तन्मात्रेष्वि**त्यनेन वक्तव्यम्। नैतत्
ाशपरिशेषणात् प्रागेव गन्धतन्मात्रादीनां नष्टतया आकाशसंसर्गानन्तरमिन्द्रियाणां
ंसर्गकथनायोगादित्यत्राह **अव्यक्तपर्यन्तं प्रलयमुक्त्वे**ति। अण्डान्तर्वर्तिनाम-
ळयः पूर्वं भवति। तदनन्तरमेवाऽऽवरणभूतानां लय इति विष्णुपुराणप्रामाण्या-
अत इन्द्रियाणां तन्मात्रेषु क्रमेण आवरणान्तर्गतेषु सर्वेषु संसर्गोपपत्तिरिति।

मेह विमृश्यम्—विष्णुपुराणे अण्डान्तः अव्यक्तपर्यन्तलयं पूर्वमुपवर्ण्य पश्चाद्
र्णनेऽपि लयवर्णनपौर्वापर्यस्येह लयपौर्वापर्यकल्पकत्वे मानाभावः। न हि अण्डा-
तमहदहङ्कारापेक्षया बाह्यानां तेषां पृथगव्यक्तादुत्पद्यमानत्वमस्ति। एक एव हि
व च सात्त्विकादिरहङ्कारः। अतो बाह्यपृथिव्यादिलयात् प्रागेव अण्डान्तर्वर्ति-
क्तपर्यन्तसर्वलयकल्पनं न युक्तम्। किञ्च तथा कल्पने अण्डान्तर्वर्त्याकाशसंसृष्टा-
ाकाशेन सह भूतादौ लयस्तदैव संपन्नः; बहिर्वर्तिमात्रस्य तु पश्चादिति वर्णनस्यैव
मिन्द्रियाणां बाह्यतन्मात्रेषु संसर्गकल्पनं तत एव भूतादिलयवर्णनञ्चेह श्रुतं नोप-
अण्डान्तर्वर्तिपृथिवीलयकाल एव बहिः पृथिवीलयोऽपि। एवं तत्तद्भूतलयोऽप्यु-
। तथाचाकाशस्येन्द्रियेषु संसर्गकाले बहिरप्याकाशमात्रमेवावस्थितमिति तदनन्तरः
संसर्गः शब्दतन्मात्र एव भवितुमर्हति। अनन्तरमेव तु सकृत् अहङ्कारस्य, ततो
यथाश्रुति। न च 'इन्द्रियाणि तन्मात्रेषु' इत्यनेन आकाशेन्द्रियसंसर्गात् पूर्वं
मिरिन्द्रियसंसर्गः, पश्चात् शब्दतन्मात्रेण च सोऽभिधीयत इत्येवास्त्विति वाच्यम्—
मन् पक्षेऽपि **तन्मात्राणी**ति बहुवचनसमर्थनस्य तुल्यतया तत्र तत्त्यागायोगात्। अत
सर्गानन्तरं सर्वतन्मात्रसंसर्ग इन्द्रियाणां वक्तव्यश्चेत्, अन्य एव पन्था आश्रयणीयः।

विति चेत्—उच्यते। अहङ्कारात् शब्दतन्मात्रमात्रे जाते तदुत्पन्नादाकाशतः
कभूतक्रमेण सृष्टिः सिद्धान्तसंमता। विष्णुपुराणव्याख्याने **विष्णुचित्तीये** **स**
.)। तथासति, 'अष्टौ प्रकृतयः षोडश विकाराः' इति प्रकृत्यष्टकादिपरिगणनं
। अतः शब्दतन्त्रादेव आकाशवत् स्पर्शतन्मात्रेऽप्युत्पन्ने तस्मात् शब्दतन्मात्र-
त्पत्तिः। एवमुत्तरोत्तरभूतम् अनन्तरपूर्वात् तन्मात्रात् स्वपूर्वतन्मात्रसहितादुत्पद्यत
ामेव प्रकृतित्वात्, 'अष्टौ प्रकृतय' इत्युपपन्नम्। न च स्पर्शतन्मात्रमात्राद्
शब्दगुणोपलम्भ उपपद्यते। तन्मात्रं हि नाम, 'वायुर्गन्धानिवाशयात्' इत्युक्त-
सुरभिभागवत् तत्तद्गुणमात्रे उद्भूतः अन्यांशे च धर्मितद्गतगुणान्तरादावनुद्भूतः
क्ष्मद्रव्यविशेषः। तत् कथं तदेकोत्पन्नस्य स्थूलानेकगुणशालित्वमिति। परंत्विदं
ममपि अत्रोपनिषद्भाष्ये. 'अष्टौ प्रकृतयः' इत्यस्यान्यथा तात्पर्यवर्णनेन सांख्य-

'येनेदमावृतं पूर्वमण्डमप्सु प्रलीयते ।
सप्तद्वीपसमुद्रान्तं सप्तलोकं सपर्वतम् ॥

उदकावरणं यत्तु ज्योतिषा लीयते तु तत् ।
ज्योतिर्वायौ लयं याति यात्याकाशे समीरणः ॥

आकाशञ्चैव भूतादिर्ग्रसते तं तथा महान् ।
महान्तमेभिः सहितं प्रकृतिर्ग्रसते द्विज ' इति ।

अस्यां योजनायां **तन्मात्रेषु, तन्मात्राणी**त्युभयत्र तन्मात्रशब्दासंके
ुवचनस्वारस्यम्; उपबृंहणानुग्रहश्च सिध्यति ।

---

निराकरणादेव नाभ्युपगतमिति सुग्रहम् । तत्र विष्णुचित्तीयमते, प्रकृत्यष्टकादिविवरण
ासयमादिवचसामन्यथा निर्वाहसंभावनायामपि, 'आकाशाद्वायुः', 'पृथिव्यप्सु प्रलीयते ' इ
ेवाक्यार्थवैघट्यं पूर्वमेतद्भाष्यदर्शितरीत्या जागर्तीति तन्मतं यद्युपेक्ष्यते, तर्हि एतद्भाष
ुपेक्ष्य अहङ्कारादेव तन्मात्राणि पञ्च जायन्ते । ततः शब्दतन्मात्रादाकाशे जाते, आः
ितन्मात्रसहिताद् वायुरुत्पद्यत इत्येवमेकभूतैकतन्मात्रयोरुत्तरोत्तरभूतोपादानत्वमिष्य
ोक्तश्रुतिवैघट्यविघटनम्; **तन्मात्राणि भूतादौ** लीयन्ते इति बहुवचनाञ्जस्यञ्चेति चे

सर्वेषां तन्मात्राणामहङ्कारजन्यत्वस्य विष्णुपुराणाद्युपबृंहणविस्पष्टविरुद्धत्वात् । बहुव
न्यायेनोपपन्नतया तदनुरोधेन विस्पष्टोपबृंहणबाधायोगात् । अतः स्मृतिपाञ्चरात्रानुर
ान्तसंमतरीतिरेव सृष्टिक्रमः । सर्वमन्यत् तदनुरोधेन नेयमित्यलम् ।

ननु आकाशमिन्द्रियेषु न लीयत इति कथम्? चतुर्दशखण्डे(१४)पृथिवीवाव्नमापोऽ
वमुत्तरोत्तरं प्रलयस्थलनिर्देशात्, आकाशो वा अन्नमिन्द्रियाण्यन्नादानीति तत्र तल्लयश्रवण
-तत्र इन्द्रियाणीत्यस्य इन्द्रियसंसृष्टतन्मात्रपरत्वात् । ननु, 'आकाशं तन्मात्रे लीयते, त
ादौ' इत्येव निर्देष्टव्ये, मध्ये इन्द्रियघटनं किमर्थं कृतमिति चेत्—उच्यते । स्थूलभूतानामेवे
ता; न तन्मात्राणाम् । सृष्ट्यारम्भे च सात्त्विकाहङ्कारजनितानि इन्द्रियाणि विषयोपादा
ात्रे संसर्जितानि क्रमेणाकाशादिषु संसृष्टानि स्थितानि समये तत्तद्ग्राहकाण्यभूवन् । 
ग्रो विषयः सर्वो विलीनप्रायः, ग्राहकमात्रमवशिष्टम्; इन्द्रियाप्यायकभूतांशश्च तदा आ
ैव स्थित इति **आकाशमिन्द्रियेष्वि**ति वाक्येन ज्ञाप्यते । अथ, 'ग्राहकमपि तन्मात्रेण
ारे विलयार्थं तन्मात्रे संसृज्यते; सर्वथा आप्यायकभूतांशविहीनमेवास्ति ' इति **इन्द्रिय**
ात्रेष्वित्यादिना दर्श्यते । 'इन्द्रियेभ्यः परा ह्यर्थाः ' इति न्यायेन विषयाणां प्राधान्य
प्रपञ्चत्वाच्च विषयहेतोर्भूतादेस्तामसस्य शब्दतो निर्देशः, न सात्त्विकस्येति च ध्येयम्

**हति लीयते । महानव्यक्ते लीयते । अव्यक्तमक्षरे लीयते ।**
**मसि लीयते । तमः परे देव एकीभवति ।**

---

**भूतादिर्महति लीयते** इत्यत्रापि भूतादिशब्दोऽहंकारमात्रपरः । वैकारिक-
रयोः तदानीमवस्थानानुपपत्तेः । **महानव्यक्ते लीयत** इति । गुणत्रयवैषम्या-
वस्था गुणसाम्यम् । गुणसाम्यलक्षणमव्यक्तम् । **अव्यक्तमक्षरे लीयते**-
यस्यामवस्थायां गुणसाम्यमप्यस्फुटम्, तदवस्थं चेतनसमष्टिगर्भं तत् अक्षर-
यते ; न तु चेतनमात्रम् । तस्याव्यक्तप्रकृतित्व–तमोविकृतित्वायोगात् ।
तत्त्वजातं चिदचिदात्मकं मन्तव्यम् । 'प्रधानादिविशेषान्तं चेतनाचेत-
ति भगवत्पराशरवचनात् । अत्र तु चिद्गर्भवस्तुनि अक्षरशब्द उपचरितः ;
थासिद्धे शक्त्यन्तरकल्पनायोगात् । **अक्षरं तमसि लीयते** इति ॥
चित्त्वमपि यत्र विवेक्तुमशक्यम्, तदवस्थमतिसूक्ष्मं प्रधानं तमश्शब्दा-
। अक्षराद्यवस्थाप्राप्त्यौन्मुख्यविशिष्टं तदेव विभक्तं तमः । तदौन्मुख्यरहित-
तमः परमात्मशरीरतयाऽपि चिन्तयितुमशक्यम्, सलिलविलीनलवण-
स्थसलिल—सूर्यकान्तस्थवह्निकल्पं सर्वज्ञपरमात्मैकवेद्यमवतिष्ठते । भूतल-
बीजस्थानीयमविभक्तं तमः । मृन्निस्सृतबीजवत् विभक्तं तमः । सलिलसंसृष्टार्द्र-
यवबीजतुल्यमक्षरम् । उच्छूनबीजसमानमव्यक्तम् । अङ्कुरस्थानीयो महा-
नेकः । **तम एकीभवति** । महदाद्यवस्थाप्रहाणवत् तमस्त्वप्रहाणाभावात्
त्यनुक्तिः । कार्योपयोगितया विभक्तं तमः कार्यानुपयुक्ताविभक्ततमसि एकी-
र्थः । यथा सलिलावस्थपृथिव्यंशः प्रागवस्थितसलिलेनैकीभवति, यथाऽग्न्य-
शांशः प्रागवस्थिततेजसैकीभवति, तद्वत् तमस्तत्त्वस्य परमात्मशरीरभावस्य
त्वादविभक्ततमश्शरीरकपरमात्मनैकीभाव इति तत्त्वस्थितिः ।

---

**वस्थानानुपपत्तेरिति** । सह लयस्यावश्यकत्वादिति भावः । **चेतनसमष्टिगर्भमिति** ।
चेतनस्य अचिद्गर्भगतत्वमस्यामवस्थायां प्रकाशत इति तत् अक्षरसंज्ञां लभते ।

**नः परे देव एकीभवतीति** । अत्र **परे** इत्यनेन तस्य सर्वोपादानत्वम्, **देवे** इत्यनेन
र व्यज्यते । दिवु क्रीडायामिति लीलारसानुभववचनात् किमर्थं सृजतीति शङ्काऽपि
नु 'कारंकारमलौकिकाद्भुतमयं मायावशात् संहरन् हारंहारमपीन्द्रजालमिव यः कुर्वन्
डति, तं देवं' कुत्र मुख्यसाम्राज्यनिर्वहणधुरन्धरं पश्येम, जगद्व्यापारस्य सर्वस्येह

परस्तात् नसन्नासन्नसदसत् — इत्येतन्निर्वाण'मनुशासनम्

1. निर्वाणानुशासनम् पा०

चिदचिदात्मकतमःपर्यन्तप्रकृतिप्राकृततत्त्वविलक्षणं तत्त्वान्तरं प्र **परस्तान्नसन्नासन्नसदसदिति**। परशब्द ऊर्ध्वदेशपरः। 'अथ हैषोऽ मक्षय्यं लोकं जयति। यः परेणाऽऽदित्यम्' इत्यादिप्रयोगात्। 'दिग्दे स्तातिः' इति पाणिनिस्मृतिः। तमस ऊर्ध्वदेशे इत्यर्थः। **सदस**च्छब्दौ चेतनाचेतनपरौ। **सदा**दिशब्दाश्च न निषेधमात्रपराः। अपितु तद्विलक्ष पूर्वमेवोपपादितम्। तमस उपरिभागे कार्यकारण (कार्यावस्थ ?) चिदचि मयात्मकजगद्विलक्षणं तत्त्वमित्यर्थः। न च वाच्यम् — सदसदनिर्वचनी इति। **परस्ता**दिति पदवैयर्थ्यात्। परमते हि तमःपर्यन्तं कृत्स्नं मनिर्वचनीयम्। परशब्दस्य तमोविलक्षणब्रह्मपरत्वे प्रपञ्चस्य निर्वचनीय एवानिर्वचनीयत्वञ्चोक्तं स्यात्। अस्तातिप्रत्ययवैयर्थ्यञ्च भवेत्। अतः प्रकृ समस्तवस्तुविलक्षणं किमपि तत्त्वं विवक्षितम्। तच्च किमित्यपेक्षायाम्, 'अ तमसः परस्तात्', 'तदक्षरे परमे व्योमन्', 'विश्वं पुराणं तमसः इत्यादिभिः वेदान्तवाक्यैः मुक्तप्राप्यस्थानविशेषविशिष्टं परं ब्रह्मेति निश्चीयते केवलं परं ब्रह्मैव विश्वविलक्षणत्वात् नसन्नासन्नसदसदित्युच्यते; परस्ताच्छब्द प्रसङ्गात्। त्रिविधपरिच्छेदरहिततया सर्वगतस्य परब्रह्मणः स्वरूपं हि दे परिच्छिन्नं कथमुच्यते। अतः स्थानविशेषरूपविशेषविशिष्टमेव तथा वक्तुं (क्तमिति ?) परस्य ब्रह्मणो रूपमनेन वाक्येन प्रतिपाद्यत इति सिद्धम्।

**इत्येतन्निर्वाणमनुशासनम्**। एतदनुशासनम् विविच्य ज्ञा उपदेशः **निर्वाणं** निर्वाणहेतुः = मोक्षहेतुः; तत्कारणविषयत्वादित्यर्थः

क्रीडामात्रायमाणत्वादित्यत्र तत् स्थलं प्रदर्श्यते **परस्तान्नसन्नासन्नसदस**दिति। तत्र न कर्मोपाधिकचेतनाचेतनान्तर्यामित्वदशाऽस्तीति, ज्ञानानन्दमयप्रपञ्चप्रभोर्विष्वक्सेन समस्तैश्वर्यस्य विचित्रानन्तभोग्यभोगोपकरणविस्तारस्य श्रीमतो नारायणस्य परमो भो

**देश** इति। न च एकीभावानन्तरमिति कालपरत्वमेव किं न स्यादिति वाच्यम्— खण्डे एतत्समानाकारवाक्ये देशार्थकत्वावसायादिहापि तद्विधेः।

सनम् । वेदानुशासनम् ॥

(३)

अथ तृतीयः खण्डः ।

सद्वा इदमग्र आसीत् ।

सनमिति। 'जगत्सृष्टिरेवंविधा। प्रळय एवंविधः। कार्यकारणभूतानि तान्येतानि। कार्यभूताः। परमकारणं ब्रह्मैव चिदचिद्वस्तुविलक्षणं विलक्षणदेशादिविशिष्टम्। पुरुषः। ब्रह्मादयश्च तत्कार्यभूताः तदात्मकाः। परमकारणविषयज्ञानमेत्र इत्ययं वेदोपदेश इत्यर्थः। कारणतत्त्वोपदेशसमाप्तिद्योतकोऽभ्यासः॥

ति श्रीहरितकुलतिलकवाग्विजयिसूनोः श्रीरङ्गराजदिव्याज्ञालब्ध-
वेदव्यासापरनामधेयस्य श्रीसुदर्शनार्यस्य कृतौ
सुबालोपनिषद्विवरणे द्वितीयः खण्डः ।
श्रीसुदर्शनार्यमहादेशिकाय नमः ।

(३)

गत्कारणतयोक्तस्य परब्रह्मणः कारणत्वशङ्कितविकारादिदोषव्युदासार्थं तत्स्व- च्यते तृतीयखण्डेन । तदर्थं कारणमनुवदति **असद्वा इदमग्र आसी-** दंशब्दो न जगन्मात्रपरः । तस्य वक्ष्यमाणजगद्वैलक्षण्यव्याघातात् । न हि तो विलक्षणाकारं भवति । जगतः परमात्मशरीरत्वञ्चात्रैव वक्ष्यते । अत जगच्छरीरकं ब्रह्मोच्यते । जगद्रूपं परं ब्रह्म तु **अग्रे** सृष्टेः पूर्वम**सदा-** भक्तनामरूपमासीत्। महदहङ्कारदेवमनुष्यादिनामरूपशून्यमासीदित्यर्थः। मत्वेत्यनन्तरमात्मशब्दव्यपदेशेन असच्छब्दस्यात्मविषयत्वावगमात्; सोम्येदमग्र आसीत्' इति कारणवाक्यान्तरैकार्थ्येन तुच्छत्वायोगाच्च। कार्यपरः। 'असद्वा इदमग्र आसीत्। ततो वै सदजायत' इति शाखान्तरे

नाचेतनेति । अत्र, "केवलाचेतनादचेतनात् मिश्रिततदुभयरूपव्यष्टिभ्यश्च 'ति सर्वव्याख्यानाधिकरणश्रुतप्रकाशिकाऽप्यनुसंधेया ।

**न्नासन्नसदस**दिति चेतनाचेतनवैलक्षण्यमुक्तं विशदीक्रियते **असद्वा** इत्यादिना। मखण्डे ।

**अजातमभूतमप्रतिष्ठितमशब्दमस्पर्शमरूपमरसमगन्धमव्य**
**बृहन्तमजमात्मानं मत्वा धीरो न शोचति ।**

---

श्रवणात् । कार्यं तु विभक्तनामरूपम् । 'तद्धेदं तर्ह्यव्याकृतमासीत् त
व्याक्रियत' इति श्रवणात् । सद्विलक्षणत्वञ्चासत्त्वम् । अतो नामरूपशून्यम

तस्य समस्तवैलक्षण्यमाह **अजात**मित्यादिना । कार्यकारणरूपा
भावेन तद्व्यावृत्तिमाह **अजात**मित्यादिना । 'जायते अस्ति विपरि
अपक्षीयते विनश्यती' त्यचेतनस्य भावविकाराः षडुच्यन्ते । तत्र उत
जन्म । उत्पन्नावस्था चास्तित्वम् । तदुभयाभावमाह **अजातमभूत**
च, तदवच्छिन्नमस्तित्वञ्च नास्तीत्यर्थः । **अव्यय**मिति विनाशराहित्यं
उत्पत्तिविनाशमध्यकालभाविनः पृथिव्यादीनां ये विकाराः तद्राहित्येन
**अप्रतिष्ठित**मित्यादिना । प्रतिष्ठा = आधारः । पृथिव्यादीनि आधार
ब्रह्म तु तदनपेक्षम् । **अशब्द**मित्यादिना कालपरिच्छेदाविनाभूतधर्मव्य
एवम**जात**मित्यादिना **अव्यय**मित्यन्तेन कालतः परिच्छेदाभाव उक्तः
**बृहन्त**मिति स्वरूपतो धर्मतश्च विपुलत्वमुक्तम् । तेन देशापरिच्छे
**आत्मान**मिति वस्त्वपरिच्छेद उक्तः । न हि वस्तुतः परिच्छिन्नो
स्यात्मा भवति । अयं तु सर्वस्यात्मा सर्वशरीरकत्वात् सर्वबुद्धीनां पर्य
वस्तुतः परिच्छिन्नो हि घटः पटादिबुद्धेर्न पर्यवसानभूमिरिति तद्व्यावृत्तिः
देहसंबन्धलक्षणोत्पत्तिमतां जीवानामप्यात्मशब्दवाच्यत्वात् तद्व्यावृत्त्यर्थम
मित्युक्तम् । एवं त्रिविधपरिच्छेदरहितं समस्ताचिदचिद्वस्तुविलक्षणं का
तद्गतदोषास्पृष्टं परमात्मानं **मत्वा** उपास्य धीरो न **शोचती**ति । स
नानुभवति । मुक्तो भवतीत्यर्थः ।

---

**अजात**मित्यादिना अचेतनवैलक्षण्यस्य प्रपञ्चनम्; उपरि **अप्राण**
चिद्वैलक्षण्यस्य । **अप्राण**मित्यादिकं, **न तदश्नाति किञ्चने**त्यत्र तच्छब्दविशे
पूर्वविशेषणम् पूर्ववाक्यस्य समाप्तत्वात्; **अन्वा**गिति नपुंसकप्रयोगाच्च । अत्र **अ**
पदेषु क्वचिद् बहुव्रीहिः, क्वचित् तत्पुरुष इति यथायथं ग्राह्यम्, यथ
अक्षरविद्यायां बृहदारण्यके । **वस्तुतः** वस्तुना ।

**अप्राणममुखमश्रोत्रमवागमनोऽतेजस्कमचक्षुष्कमनामगोत्रमशिरस्कम**
**णिपादमस्निग्धमलोहितमप्रमेयमह्रस्वमदीर्घमस्थूलमनण्वनल्पमपारमनिर्दे**
**मनपावृतमप्रकाश्यमसंवृतमनन्तरमबाह्यं न तदश्नाति किञ्चन;**

---

अजमिति व्यष्टिदेहविशिष्टदेवमनुष्यादिजीवव्यावृत्तिं सूचितां प्रपञ्चयं
ाणमित्यादिना। **अप्राण**मिति प्राणाधीनस्थितित्वं निवर्तितम्; न तु प्राणसम्बन्ध
ाम्। प्राणस्याप्यन्तर्यामित्वात् तस्य। 'यः प्राणे सञ्चरन्' इति हि वक्ष्यते
ुख**मिति। अपरभागसापेक्षः पुरोभागावयवविशेषो मुखम्। तदस्य न विद्य
त्राभिमुखत्वादित्यर्थः। **अश्रोत्रमवा**गित्यादिना ज्ञानेन्द्रियाधीनज्ञानत्वं कर्मेन्द्रिय
व्यापारत्वञ्च निवर्तितम्। तेन तस्य स्वतस्सर्वज्ञत्वं सर्वशक्तित्वञ्च दर्शितम्
**ेजस्कं** मनोधीनप्रकाशरहितम्। **अचक्षुष्कं** रूपसाक्षात्कारे चक्षुरनपेक्षम्। **अनाम**
**त्रमशिरस्कमपाणिपाद**मिति। **नामगोत्र**शब्दाभ्यां नामधेयं कुलञ्चोक्तम्। न
ञ्च शिरःपाणिपाद्यवयवाश्च न स्वरूपे विद्यन्त इत्यर्थः। लोके शिरःपाणिपाद
योन्यकार्याशक्ताः; अयं तु सर्वत्र सर्वावयवकार्यशक्त इत्यर्थः। **अस्निग्ध**
**हितम्**। मनुष्यदेहवत् स्वेदरक्तादिमान् न भवतीत्यर्थः। **अप्रमेय**मिति
ाणम् = इयत्ता। 'प्रमाणे द्वयसज्दघ्नञ्मात्रचः' इति प्रयोगात्, **अप्रमेय**
मेयम्। व्यष्टिदेहिवत् इयत्तारहितम्। तदेव प्रपञ्चयन् **महान्त**मित्युक्तदेश
च्छेदं विवृणोति **अह्रस्व**मित्यादिना। **अस्थूलम्** अपीनम्। **अनणु** अकृशम
ूलताप्रतिसम्बन्धिनो निषेध्यत्वात्। तस्मात् **अनल्पम्** अल्पपरिमाणरहितम्
नल्पस्य समुद्रादेरप्यवधिमत्त्वदर्शनात् तद्व्यावृत्त्यर्थमाह **अपार**मिति। शतयोज
स्रयोजनत्वादिविशेषणैर्निर्देष्टुमशक्यम्। तर्हि सर्वगतत्वात् सर्वत्र दृश्येतेत्यत
**नपावृत**मिति। तिरोहितमित्यर्थः। अत्र हेतुमाह **अप्रकाश्य**मिति। चक्षुरादि
काशयितुमशक्यत्वादित्यर्थः। प्रमाणागोचरत्वे शून्यत्वं स्यादित्यत आह **असंवृ**
ति। योगिनामतिरोहितमित्यर्थः। तेषां कुत्र प्रकाशत इत्यत्राह **अनन्तरमबा**
ति। **अनन्तरम्** बहिः आदित्यमण्डलादौ प्रकाशते; **अबाह्यम्** अ
दयपुण्डरीकेऽपि प्रकाशत इत्यर्थः। **न तदश्नाति किञ्चन**। सर्वत्रावस्थित
ं ब्रह्म न किञ्चनाश्नाति। कर्मफलत्वेन न किञ्चिदपि जीववत् भुङ्क्त इत्यर्थ

**न तदश्नाति कश्चन ।**

**एतद्वै सत्येन दानेन तपसाऽनाशकेन ब्रह्मचर्येण निर्वेदनेन षडङ्गेनैव साधयेत् । एतत्त्रयं वीक्षेत दमं दानं दयामिति ।**

---

'ज्ञानक्रियाभ्यां भगवान् भुङ्क्तेऽसौ प्रसभं विभुः' इति लीलारस
प्रमाणसिद्धत्वात् । **न तदश्नाति कश्चन ।** कश्चिदपि सांसारिकः कर्मफल
भुङ्क्ते इत्यर्थः । वाक्यद्वयेन समस्तभोक्तृभोग्यविलक्षणमित्यर्थः [उक्तो भ

**मत्वा धीरो न शोचती**ति तदुपासनमपवर्गोपायत्वेन पूर्वमुक्तम् ।
न्याह **एतद्वा** इति । यथार्थं भूतहितवचनं **सत्यम्** । **तपसा** । 'तप आ
तत्त्वनिरूपणेनेत्यर्थः । ? **ब्रह्मचर्यं** स्त्रीनियतिः ? । **अनाशकेन** अनशने
**तपः** कृच्छ्रचान्द्रायणादीति, **अनाशकं** फलाभिसन्धिरहितं यज्ञादिकम् ;
फलभोगेन तदभिसन्धिकर्तृत्वममकारेण (?) च रहितत्वात् । सत्यादिकमेव
शब्देनोच्यते । पुनश्च तदङ्गत्वेन प्रकृष्टतरं गुणत्रयमाह **एतत् त्रयमि**
मनोनियमनम् । **दानम्** । 'दैप् शोधने' । स्नानादिना शुद्धिः । प्र
पूर्वोक्तत्वात् पुनरुक्तिप्रसङ्गात् । अनुक्तगुणान्तरसाहचर्येण दानशब्दस्याप
परत्वोपपत्तेश्च । **यद्वा** आदरातिशयात् दानस्य पुनरपि कीर्तनम्
स्वप्रयोजनानपेक्षं परदुःखासहत्वम् ।

---

**सत्येने**त्यादिना अङ्गषट्कस्य वक्तव्यत्वात् **तपसाऽनाशकेने**त्यत्र **अनाशक**पद
वाचकं स्वीक्रियते । तत्र **तपः**पदेन कृच्छ्रचान्द्रायणादिग्रहणे अनशनं पृथङ् न वक्तव्यमिति
पदस्य यज्ञपरत्वमाह **यद्वे**त्यादिना । **इतिशब्दो** हेत्वर्थः । तपःपदेन कृच्छ्रादेरुक्तत्वादित्यर्थ
**संधिकर्तृत्वममकारेणे**त्यत्र पाठो निरीक्ष्यः । त्रयाणां समाहारद्वन्द्वेन वा एकवचनं
**तदभिसंधिः** फलापेक्षा । **ब्रह्मचर्यं स्त्रीनियतिः** इति वाक्यं **रहितत्वा**दित्येतदनन
स्थानात् । **निर्वेदनेने**त्यस्य निर्वेदार्थकत्वं स्पष्टमिति तत् पदं **ज्ञानेने**ति पदमिव न
**अनाशकेन षडङ्गेने**त्यत्र अनाशकादं षडङ्गविशेषणं स्यात् । पूर्वोक्तरीत्या विनाश
तदर्थः । **षडङ्गेने**ति समाहारः एकाभावेऽपि कार्यासिद्धिं दर्शयति । **एव**कारो वक्ष्यमा
त्रयेणास्य वैकल्पिकत्वमतिं वारयति ; अङ्गानि विना ज्ञानाभ्यासमात्रेणोपासनं साधयितुं
मतिश्च । **साधयेदि**त्यत्र **एत**दिति वाक्योपक्रमस्थं कर्म । ब्रह्मोपासनमिति वा ब्रह्मेत्ये
अत्र **दानेने**त्येतत् बृहदारण्यके (७.२.) देवान् मनुष्यान् असुरांश्च प्रति क्रमेण प्र
पदेशार्थवादपूर्वकं 'दाम्यत दत्त दयध्वमिति तदेतत्त्रयं शिक्षेद् दमं दानं दया'मिति
फलश्लक्ष्णकमित्याशयेनोच्यते **एतत् त्रयमिति** । वीक्षेतेत्यस्य शिक्षेतेत्यर्थः । तथैव वा

**ाणा उत्क्रामन्त्यत्रैव समवलीयन्ते, ब्रह्मैव सन् ब्रह्माप्येति,**

---

साङ्गब्रह्मोपासनफलमाह **न तस्येत्यादिना** । य **एवम्** उक्तैरङ्गैः सह ब्रह्मोपास्ते, — 'उपासीते' त्यसकृद्वक्ष्यमाणत्वात् सामान्यशब्दस्य ायित्वाच्चोपासनात्मकं वेदनं विवक्षितम् —, **तस्य** उपासकस्य — षष्ठी — तस्मादुपासकात प्राणा नोत्क्रामन्तीत्यर्थः । यथा 'नटस्य यत्र नटाच्छृणोतीत्यर्थः, तद्वत् । एकादशेन्द्रियाणि मुख्यप्राणश्च **प्राणा** ते सूक्ष्मशरीरस्था अर्चिरादिमार्गगमनार्था उपासकं न जहतीत्यर्थः । प्राणा उत्क्रामन्ती' ति शाखान्तरवाक्यैकार्थ्यात् । 'कोशं भिनत्ति भिनत्ति पृथिवीं भिनत्ती' त्युपक्रम्य, 'अव्यक्तं भिनत्ति अक्षरं भिनत्ति ी' त्यन्तेन अस्यामेवोपनिषदि ब्रह्मविदुत्क्रान्तेर्वक्ष्यमाणत्वाच्च । "प्रति- चेन्न शारीरात् स्पष्टो ह्येकेषाम्" इति ब्रह्मसूत्रम् । **ब्रह्मैव सन्** कारस्सन् **ब्रह्माप्येति** ब्रह्मण्यप्येति आत्यन्तिकलयं गच्छति । परित्यक्त- मनुष्यादिनामरूपे(पो ?) ब्रह्मणि सर्वकारणे सर्वाधारभूते प्रतिष्ठितो भवति । ामरूपप्रहाणेन कारणावस्थानं हि लयः । तदानीं ब्रह्मणि वर्तमानस्य कारतयाऽवस्थानमुपपन्नम् । परित्यक्तदेवादिरूपस्य ब्रह्मसारूप्यञ्च अपहत- गुणाष्टकाविर्भावलक्षणम् । 'अपहतपाप्मा विजरो विमृत्युर्विशोको विजि- ासः सत्यकामः सत्यसङ्कल्पः' इति दहरवाक्ये प्रजापतिवाक्ये च गुणाष्ट- ।

---

**तस्य प्राणा** इत्याद्यर्थविस्तरो **बृहदारण्यके** द्रष्टव्यः(६.४.)। **अत्रैव समवलीयन्ते** र्चिरादिगत्यर्थमवस्थापित्ते सूक्ष्मशरीर एव लीयन्ते ; न स्थूलशरीरान्तरं प्रति यान्ती- ्रा **अत्रैवे**त्यस्य प्रकृतावेवेत्यर्थः । एवञ्च **न तस्य प्राणा उत्क्रामन्ती**त्यस्य तदीयाः तत्प्राप्यं प्रकृतेः परं स्थानं प्रत्युत्क्रामन्तीत्यर्थवर्णनेऽपि न दोषः। तेन तत्रास्य अकर्म- इति सिद्ध्यति । अथवा 'अत्रैव समवलीयन्त' इत्यस्य जीवसंश्लिष्टा एव भवन्तीत्यर्थ ाभिमतः स्यात् ; अधिकस्यानुक्तत्वात् । "प्रतिषेधात्" इति सूत्र**टीकायां** तथै- ं ।

य एवं वेद ॥

॥ इति तृतीयः खण्डः ॥

---

निर्विशेषज्ञानमात्रब्रह्मतापत्तिपरत्वमस्य वाक्यस्यानुपपन्नम् —— **य एवं** ब्रह्मैव सन्निति पदानामनन्वितत्वात् । वेदितुः ब्रह्मतापत्तिप्रतीतेः । वे त्तिमात्रतापत्तेरनुपपन्नत्वाच्च । किञ्च ब्रह्माप्येतीति वाक्यस्य ब्रह्मशब्दद्वितीयानु प्तिर्वा, अप्येतीतिशब्दस्वारस्यानुरोधेन तत्र लयो वा अर्थः स्यात् । ब्रह्मैव स ह्मतापन्नस्य ब्रह्मभावातिरेकेण प्राप्तेर्लयस्य चाभावात्, 'ब्रह्माप्येती'ति वाक्यांशोऽन ात् । 'ब्रह्मतापन्नस्य काल्पनिकनामरूपभेदप्रहाणमप्ययः' इति चेत्, तद्व्यति ह्मभावो नाम अर्थान्तरं नास्तीति, ब्रह्मैव सन्निति वाक्यांशोऽनर्थकः स्यात् । 'प्र ज्ञानन्य आत्मा । तस्मात् काल्पनिकभेदलय एव विद्याफलमित्यर्थः' इति चेत्, वेद, स ब्रह्मैव सन् ब्रह्माप्येती'ति ब्रह्मतापत्तेर्वेदनफलत्वप्रतीतिस्वारस्यभ ञ्च क इह, ब्रह्मैव सन्नित्युच्यते ? किं ज्ञप्तिमात्रम् ? तर्हि वाक्यवैयर्थ्यम् । यो ब्रह्मैव सन्नित्युच्यते ; न तु या वित्तिः सा ब्रह्मैव सती ब्रह्माप्येतीति । देतुरेव ब्रह्मतापत्तिः प्रतीयते । वेदिता च ज्ञाता । स चाहंकारः । काल्पनि कारो जडः, नात्मेति तस्य ब्रह्मभावाभावात् ब्रह्माज्ञानवादपक्षे इयं श्रुतिरत्य रुद्धा । अतो यथोक्त एवार्थः ॥

इति हरितकुलतिलकवाग्विजयिसूनोः श्रीरङ्गराजदिव्याज्ञालब्ध-
वेदव्यासापरनामधेयस्य श्रीसुदर्शनार्यस्य कृतौ
सुबालोपनिषद्विवरणे तृतीयः खण्डः ॥

---

॥ श्रीसुदर्शनार्यमहादेशिकाय नमः ॥

॥ अथ चतुर्थः खण्डः ॥

**हृदयस्य मध्ये लोहितं मांसपिण्डम्, यस्मिंस्तद्दहरं पौण्डरीकं**

(४)

एवं खण्डत्रयेण परस्य ब्रह्मणो जगत्कारणत्वं तत्प्रयुक्तदोषशङ्कानिवारणार्थं
लक्षणत्वञ्चोक्तम् । अपवर्गोपायश्च सत्याद्यनुगृहीतं तदुपासनमिति च संक्षेपत
। अथ उपासनविशेषान् पञ्च (पञ्चमे ?) प्रपञ्चयितुं उपासनस्थानेपु प्रधानं
मलं प्रस्तुत्य तत्रावस्थितस्य जीवस्य परमात्मोपासिसिपोपजननाय प्रकृति-
संकुचितज्ञानस्यास्य ज्ञानसंकोचविकासतारतम्यकृतो जागराद्यवस्थायोगः चतु-
ण्डेन प्रतिपाद्यते ।

**हृदयस्य मध्ये लोहितं मांसपिण्डमिति** । अत्रायं हृदयशब्दः
वक्षःस्थलोपलक्षितप्रदेशपरः । तस्य मध्ये **लोहितं** रक्तवर्णं मांसपिण्डं
त्यर्थः । **यस्मिन् तद्दहरं पौण्डरीकमिति** । पुण्डरीकमेव **पौण्ड-**
[ । उपमानोपमेयभावेन पुण्डरीकसंबन्धीति वाऽर्थः । 'पद्मकोशप्रतीकाशं
ाऽप्यधोमुखम्' इति श्रूयते । यस्मिन् मांसपिण्डे **पौण्डरीकं** पद्मकोश-

---

**एवं खण्डत्रयेणेति** । अयं भावः—सुबालोपनिषद्वृत्तिं सरसं मनसि निधायैव सूत्रकारो
रीरकं निबबन्ध । तत्र हि प्रथमेऽध्याये जगत्कारणत्वं नारायणस्य निरूप्य द्वितीयेऽध्याये
निमित्तोपादानस्य चेतनाचेतनाविशेषोत्प्रेक्षितानेकदोषशङ्कापरिहारेण सर्ववस्तुवैलक्षण्यं
, तादृशस्य तस्य प्राप्त्यर्थोपासनविषयतृष्णाभिवर्धनाय जीवस्य जागरस्वप्नसुषुप्त्याद्य-
स्थितदुरवस्थास्थापनपूर्वं परस्यैतद्विलक्षणस्य विषये बहून् भक्तिमार्गान् साङ्गांस्तृतीयेऽध्याये
शोध्य तुरीये तत्प्राप्तिप्रकारं भगवान् बादरायणः प्रास्तौषीत् । इह चोपनिषदि प्रथमं
येन परमपुरुषस्य अद्वारकं सद्वारकञ्च स्थितं जगज्जन्मादिकारणत्वमभिधाय तृतीयेन तस्य
चेतनवैलक्षण्यमतएवोपासनार्हत्वञ्चोपपाद्य तदुपासिसिषोत्पादनाय चतुर्थेन जीवस्य जागरादि
याः प्रज्ञाप्य पञ्चमेन तदुपासनप्रकारान् उपदिश्य शेषमपि शेषेषु खण्डेषु समुपवर्णितमिति

**तद्दित्यस्य**, 'यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म' इति दहरपुण्डरीकत्वं
मित्यर्थः । **पौण्डरीकमिति** । पुण्डरीकमित्यपि पाठोऽस्ति । सर्वथा इदमेव हृदयबोध
्यपदम ।

**कुमुदमिवानेकधा विकसितम् ।**

**हृदयस्य दश छिद्राणि भवन्ति ; येषु प्राणाः प्रतिष्ठिताः ।**

---

सदृशावयवविशेषः तिष्ठतीत्यर्थः । हृत्पद्मं मांसविशेषेण परित आवेष्टितत्वात्
पिण्डमध्यस्थितमित्युक्तम् । **कुमुदमिवानेकधा विकसित**मिति । वर्णेन
सन्निभम् । तस्य चन्द्रकान्तसमानत्वं हि योगशास्त्रेषूच्यते । अनेकधा वि
विकासयोग्यम् । **अनेकधा** शब्दादिनानाविषयज्ञानप्रसरानुगुणावकाशमित्यर्थः

तदेव विवृणोति **हृदयस्य दश छिद्राणि भवन्ती**ति । अयं हृद
पद्मकोशसदृशावयवपरः । **छिद्राणि** नाडीमुखसम्बन्धद्वाराणि । **येषु प्राणाः**
**ष्ठिता** इत्यनेन नाडीच्छिद्रत्वं स्पष्टम् । इह बहुवचनान्त**प्राण**शब्देन इन्
विवक्षितानि । यद्वा प्राणापानादयो विवक्षिताः ।

---

**अत्रायं हृदयशब्द** इति । **अत्र** सुबालोपनिषदि । तेन, 'पद्मकोशप्रतीकाशं
श्चाप्यधोमुखम्' इति तैत्तिरीयश्रुतहृदयशब्दव्यावृत्तिः । तस्य पुण्डरीकाकारभागपरत्वात् ।
अनन्तरवाक्ये, **हृदयस्य दशे**त्यत्र यथातैत्तिरीयमर्थस्वीकारात् **अय**मित्युक्तम् । अथव
पदेन उत्तरहृदयपदव्यावृत्ति ; अन्येन पुण्डरीकाकारहृदयाधारमांसपिण्डगर्भकत्वरूपः अ
परत्वसाधको हेतुर्दर्शितः । द्वितीयहृदयपदस्यापि समानार्थकत्वं कस्मान्नेति चेत्—
छिद्राणां वक्षःप्रदेशे अभावात्, तत्रैव भावादिति भाव्यम् । किञ्च, **यस्मिंस्तद्दहर**
तदितिपदं तावत् हृदयमित्यर्थकं सत् दहरस्य हृदयत्वेनान्यत्र प्रसिद्धिं गमयति । एवं
तस्य दश छिद्राणि' इत्येव कस्मान्न पठ्यत इति चेत् — मुख्यहृदयत्वं त
ज्ञापनाय हृदयशब्देन निर्देश इति । किञ्च यदि द्वितीयं **हृदयपदं** वक्षःप्रदेशार्थकम्
हृदयस्येत्यारभ्य **विकसित**मित्यन्तं वाक्यमुपर्येव पाठमर्हति ; प्रकृतानुपयोगादिति हृ
सर्वेन्द्रियकन्दभूतत्वञ्चास्यैव जीवाधारस्य युक्तम् । शेषमुपरिष्टात् । **नाडी**ति । तत्तदि
नाडीत्यर्थः । उपरि प्राणव्यानापानादिनिर्देशानुगुण्यात्, आभ्यन्तरवायावपि दशधा वि
प्रसिद्धत्वात् दशच्छिद्रवर्तिनः प्राणाः तेऽपीत्याशयेनाह **यद्वा प्राणापानादय** इति । श्रुतौ व

स यदा प्राणेन सह संयुज्यते, तदा पश्यति नद्यो नगराणि बहू
वेधानि च । यदा व्यानेन सह संयुज्यते, तदा पश्यति देवांश्च ऋषींश
ाऽपानेन सह संयुज्यते, तदा पश्यति यक्षराक्षसगन्धर्वान् । यदा तूदाने
: संयुज्यते, तदा पश्यति देवलोकान् देवान् स्कन्दं [1] जयश्चेति । य
ानेन सह संयुज्यते, तदा पश्यति देवान् लोकान् धनानि च । य

1. जयन्तश्च.

---

योगदशायां वायुविशेषस्य ज्ञानविकासकारणत्वमाह **स यदे**त्यादिना ।
**ा प्राणेन संयुज्यते, तदा पश्यति नद्यो नगराणि बहूनि विविधानि चे**
ासकत्वेन पूर्वखण्डप्रस्तुतः इह च शरीराद्यधिष्ठातृत्वेन बुद्धिस्थो जीव
इत्युच्यते । **यदे**ति योगकालो विवक्षितः । एकवचनान्तोऽयं **प्राणश**
गाख्यवृत्तिमद्वायुविशेषपरः । **प्राणेन सह संयुज्यते** । मनसा प्राणसंयुक्त
वित इत्यर्थः । यत्र हि मनः, तत्र हि वायुः । **नद्यः** नदीः । **पश्यती**
हितान्यपि नद्यादीनि पश्यतीत्यर्थः । **यदा व्यानेन सह संयुज**
ादिवाक्यानामप्यनया दिशा निर्वाहो वेदितव्यः । **यदा तूदानेने**ति । **देवा**
लोकस्थानिति शेषः । **जयं** जयाभिमानिदेवताम् ; जयन्तं वा । तलोपश्छान्द
ानभूतदेवताप्रदर्शनार्थं स्कन्दाद्युक्तिः । **धनानी**ति । भूमिनिहितानीत्यर्थ

---

ानात् पूर्वं पठनमेतच्छाखीयानां प्राणाहुत्यादौ व्यानस्यैव प्राणानन्तरं ग्रहणात् स्यात् ।
पुरुषस्य प्राणसंयोगः सर्वदैव सर्वस्यास्तीति यदेत्यदिनिर्देशोऽनुपपन्न इति **संयुज्यत** इ
ुक्तमनस्क इत्यर्थाभिप्रायेण योगिजीवपरतया **स यदे**त्यादिवाक्यं नयति **उपासक**
दिना । न च **स यदे**त्यादिकं सर्वं स्वप्नदशावर्णनपरमेवास्तु ; उपरि अथेमा दश नाड्य
सुषुप्तिवाक्यमध्ये **अथात्रैत**दिति अथशब्दवत्र बाधकं भवेदिति वाच्यम् — **अथ द्वि**
**शे** इति स्वप्नकोशस्य द्वितीयतया वर्णनात्, तदुपरि सुषुप्तौ **हृद्याकाशे परे कोशे**
ीयकोशकथनात् प्रथमं प्रथमकोशवृत्तमेव कथ्यत इति प्रतीत्या जागरपरताया एवात्र व
ुदाये ग्राह्यत्वात् । तत्र यदेत्यादिनिर्देशात् देवयक्षादिदर्शनकथनवशाच्च सर्वपुरुषजागर
भवे सिद्धे योगिपरत्वावधारणेति । **प्राणसंयुक्तत्वेन भावित** इत्यत्र स्वयमिति शेषः । 
ते कथनं मनोरूपसहकारिप्रदर्शनार्थम् । ग्राह्यविषयं विमृश्य तदनुरूपे वायुविशे
ोऽवस्थाप्यते चेत्, तद्विषयदर्शनं योगिनो भवतीत्यर्थः ।

**तलोप** इति । जयन्तमिति पाठोऽप्यस्ति ।

**ैरम्भेण सह संयुज्यते, तदा पश्यति दृष्टञ्चादृष्टञ्च श्रुतञ्चाश्रुतञ्च भुः**
**भुक्तञ्च सच्चासच्च । सर्वं पश्यति ; सर्वं पश्यति ।**

**अथेमा दश नाड्यो भवन्ति । तासामेकैकस्यां द्वासप्ततिर्द्वाः**

---

**ैरम्भः** वायुविशेषः । उपरि व्यक्तीभविष्यति । **दृष्टश्रुता**दिकीर्तनं दृष्टान्त
जन्मान्तरे दृष्टं वा । **सर्वं पश्यती**त्यभ्यासआदरकृतः । एवं प्राणादिं
ासङ्गेन तत्प्रशंसा कृता । अयोगदशायामदर्शनं लोकसिद्धत्वादनुक्तम् ।
हृदयकमलस्थस्य जीवात्मनः प्राणेन्द्रियव्यापारवतो जागरावस्था दर्शिता भवति

अथ स्वप्नाद्यवस्थाद्वयं वक्तुं तयोरवस्थयोर्जीवस्य स्थानभूतान् नाडीविशे
**ाथेमा दश नाड्यो भवन्ती**ति । **नाड्यः** प्रधाननाड्यः । **तासा**मिति ।
ाडीसंसृष्टाः अप्रधानसिराः शाखानाड्यः । उक्तानां नाडीनां विनियोगं सा

---

**उपरी**ति । नवमखण्ड इत्यर्थः । **सत्** वर्तमानम् । **असत्** अतीतमनागतञ्च । उ
ास्थेति । **येषु प्राणाः प्रतिष्ठिताः** इति पूर्ववाक्येनैव जागरसामान्यमुक्तप्रायं मन्तव्यम्
ोगकाल एवैवंप्रतीत्या अन्यदा तदभावादपि च जाग्रतो जुगुप्सितत्वं ज्ञापितं भवति ।

दशच्छिद्राधिष्ठितवायुविशेषसहकारेण भवन् जागरविशेष उक्तः । अवस्थान्तरस्थान
ाडीसंबन्धमाह **अथेमा** इति । 'हृदयस्य दशच्छिद्राणी'ति वाक्यात् हृदयस्येत्यस्यौचि
ज्ञः । इमाश्च ज्ञानकर्मेन्द्रियदशकनिबन्धनभूता इति विमृश्यम् । नाडीनां स्वप्नस्थानत्ववत्
ानत्वमपि निर्बाधम् । "तदभावो नाडीषु तच्छ्रुतेरात्मनि च" इति सूत्रे नाडीनां
ानत्वस्वीकारात् । एवञ्च तत्रोदाहृतस्य बृहदारण्यकवाक्यस्य (४.१) तत्परत्वेऽपि कौ
ाह्मणे स्वप्नस्थानपरत्वमपि श्रुतम् । "नाडीनां स्वप्नस्थानत्वात्" इति जगद्वाचित्वाधिकरण
ौषीतकिब्राह्मणगतप्रकृतवाक्याभिप्रायम् । ताश्च सुषुप्तिनाड्यः हितानामिकाः प्रत्येकं द्वा
स्याकशाखानाडीमतया बृहदारण्यके उक्ताः । इहापि तथा श्रवणात् उभयपरमेवेदं वाक
ावः । (एवञ्च तास्वेव नाडीषु स्थानभेदः स्वप्नसुषुप्तिभेदाय भाव्यः ।)

**ानाडीसहस्राणि भवन्ति, यस्मिन्नयमात्मा स्वपिति शब्दानाञ्च करोति**
**अथ द्वितीये स कोशे स्वपिति । तदेमञ्च लोकं पश्यां**
**न् शब्दान् विजानाति स संप्रसाद इत्याचक्षते ।**

---

ति **यस्मिन्नयमात्मा स्वपिती**ति । नाडीसमूहाभिप्रायेण **यस्मि**न्नित्युक्तम्
**ती**तिशब्दोऽयं न सुषुप्तिपरः ; अपि तु सुषुप्तिस्वप्नसाधारणनिद्रापरः । उपरत
न्द्रियव्यापारो यत्र वर्तत इत्यर्थः । स्वप्नसुषुप्तिसाधारणचेष्टामाह **शब्दानाः**
तीति । द्वितीयार्थे षष्ठी । शब्दान् करोतीति । अबुद्धिपूर्वकमवशप्रलपि
तीत्यर्थः । स्वप्ने भयाद्यतिशयात् आक्रोशादिसंभवः । सुषुप्तावपि वातविकारा
प्रलपितसंभवः ।

एवं स्वप्नसुषुप्त्योः साधारणाकारमुक्त्वा स्वप्नावस्थामाह **अथ द्वितीये स को**
तीति । **अथ** जागरानन्तरम् । **कोश**शब्दः स्थानपरः । प्रथमस्थानं हृदयपुण्डरीकम्
स्थितस्य जागरः । यदा तदनन्तरं द्वितीयकोशस्थाने (द्वितीये कोशे = स्थाने ?
नां नाडीसहस्राणां मध्ये कस्मिंश्चिन्नाडीसमूहविशेषे **स्वपिति** निद्रायते, त
स्तुतः **संप्रसादो** जीवात्मा इमञ्च लोकं परञ्च लोकं च(?) पश्यति । जाग्रदवस्थ
जातीयञ्च लोकम् ईश्वरसृष्टं पश्यतीत्यर्थः । 'न तत्र रथा न रथयोगा
नो भवन्ति । अथ रथान् रथयोगान् पथः सृजते । स हि कर्ता' इ
। **पश्यती**ति चक्षुर्व्यापार उक्तः । अथ श्रोत्रव्यापारमाह **सर्वान् शब्दा**
**ना**तीति । इदमीश्वरसृष्टशरीरस्थेन्द्रियान्तरव्यापाराणामपि प्रदर्शनार्थमुक्तम्
**ाचक्षत** इति । स्वप्नावस्थां स्वप्नविदो वदन्तीत्यर्थः ।

---

**समूहे**ति । यच्छब्दार्थभूतासु नाडीषु एकत्वस्य एकवचनोक्तस्य समुदायद्वारा अन्
भावः । **शब्दाना**मिति षष्ठी शब्दमध्ये यं कमपि शब्दमित्यर्थज्ञापनार्थः ; 'एतेषां
(छा॰१.१०) इतिवत् ।

**संप्रसाद** इति । जागरावस्थागतकालुष्यराहित्यपरः संप्रसादशब्दः । 'एष संप्रसादोऽस्
रात् समुत्थाय परं ज्योतिरुपसंपद्य' इति चरमशरीरवियोगसंनिकृष्टो जीवो निर्दिष्ट
। संप्रसादात्—" इति सूत्रे, "शुद्धस्वरूपाभिप्रायेण सूत्रे संप्रसादनिर्देशः कृतः
एतद्भाष्यकृद्भिः प्राकाशि । अतः स्वप्नावस्थजीवमात्रे संप्रसादशब्दनियमाभावात्

**प्राणः शरीरं परिरक्षति । हरितस्य नीलस्य पीतस्य लोहि॰**
**श्वेतस्य नाड्यो रुधिरस्य पूर्णाः ।**

**अथात्रैतद् दहरं पौण्डरीकं कुमुदमिवानेकधा विकसित॰**

---

अथ सुषुप्तिं वक्तुमारभते **प्राणः शरीर**मित्यादिना । सुषुप्तिकाले जीवेच्छाप्र
त्नेनाऽपि परमात्मसंकल्पप्रेरितो मुख्यः प्राणः शरीरं **परिरक्षति** धत्त इत्यर्थः । ॰
चारस्थानभूता नाडीर्विशिनष्टि **हरितस्ये**ति । **हरिता**दिपदानि रुधिरविशेषणा
पत्पीतं **हरितम्** । **लोहितं** शोणवर्णम् । **रुधिरस्य** रुधिरेण नाड्यः पूर्णा भवा
ायासाभावात् नाडीषु रक्तं न्यूनाधिकभावविरहेण व्याप्तमित्यर्थः । पूर्वं न
शेषाः स्वप्नस्थानत्वेनोक्ताः ।

अथ नाडीविशेषाणामेवान्येषां सुषुप्तिस्थानत्वं वक्तुं तेषामपि हृदयक॰
बन्धकथनार्थं हृदयं पुनः प्रस्तौति **अथात्रे**ति । पूर्ववदर्थः । तत्संबन्ध (॰

---

पगवाक्यतायां प्रमाणाभावाच्च, 'स संप्रसादः सर्वान् शब्दान् विजानाती'ति पूर्वेणैकवाक्य
सर्वेन्द्रियव्यापारसंपत्तिसमयेऽपि यः सर्वं न जानाति, स कथमुपरतेन्द्रियः सुप्तः इमं
र्वान् शब्दान् परश्च सर्वं जानीयात्' इत्याशङ्कापरिहाराय संप्रसादत्वविशेषणम् । अकलुष॰
स्य स्वभावः । 'सर्वं ह पश्यः पश्यति' इति किल पश्यत्स्वभावस्य पारिस्थितिः । स जा
थारूपप्रतिबन्धकविरहे प्राचीनकर्मानुगुणप्रसादविशेषात् सर्वं द्रष्टुमलमिति दर्शितं भवति
ाप्निकपदार्थानां वास्तवत्वमपि ख्यापितं भवति; प्रसन्नपुरुषग्राह्यत्वज्ञापनात् । एवमेकवा
याश्च **आचक्षत** इत्येतत्, 'एवं स्वप्नवृत्तं वदन्ती'त्यर्थकं भवतीति स्वप्नवर्णनमत्र समा॰
श्यते इति विमृश्य, **प्राणः शरीर**मित्यादिकं सुषुप्तिपरं व्याख्यातम् । अन्यथा पुनः, '॰
ञन्नवरं कुलायं बहिष्कुलायादमृतश्चरित्वा' (बृ.६.१०), 'हिता नाम हृदयस्य नाड्यो हृ॰
रीततमभिप्रतन्वन्ति । यथा सहस्रधा केशो विपाटितः, तावदण्व्यः पिङ्गलस्याणिम्ना ति
क्लस्य कृष्णस्य पीतस्य लोहितस्येति । तासु तदा भवति' (कौ.४) इति श्रुत्यन्तरानुस
प्नपरत्वमपि **पूर्णाः**इत्यन्तस्य सुवचम् । जागरे शरीरव्यापारायासबाहुल्यात् नाडीनां रु
िता न भवतीति सुषुप्तौ पूर्णतावर्णनं यदत्र सरसमुपपादितम्, तत् स्वप्नेऽपि हि भवितुम
यक्षशरीरस्य प्रयासराहित्याविशेषात् । **अथात्रे**त्यादिकं सुषुप्तिविषयमिति तु निर्विवादम् ।

**अथात्रे**ति । **अत्रे**ति पदं नाडीष्वित्यर्थकम् । तथाच यत् पूर्वोक्तं **दहरं** पुण्डरी॰
त्र भवति, यत्र पुण्डरीके जीवः सुषुप्तो भवतीत्युच्यते । तदभावाधिकरणे, "नाडीपुरी
ादस्वट्वास्थानीयौ" इति श्रीभाष्यानुरोधेन हितानाड्यधिकरणकपुरीतद्गतत्वस्य सुषु
रहृदयकोशेऽवधारणात् । इदमेव नाडीगतं **परे कोशे** इति कथ्यते समनन्तर॰

केशः सहस्रधा भिन्नः, तथा हिता नाम नाड्यो भवन्ति । हृद्याकाशे
ोशे दिव्योऽयमात्मा स्वपिति, यत्र सुप्तो न कञ्चन कामं कामयते, न
। स्वप्नं पश्यति ।

**न तत्र देवा देवलोका यज्ञा वा ।**

---

ाहुल्यमाह **यथा केशः सहस्रधा भिन्नः तथा हिता नाम नाड्यो**
ीति । हृदयसंबद्धा भवन्तीत्यर्थः । तासां हिताख्यानां नाडीनां सुषुप्त्याधार
व्यवहितमिति श्रुत्यन्तरे विशदमर्थमिह दर्शयति **हृद्याकाशे परे कोशे दिव्यो**
**ात्मा स्वपिती**ति । हृदि आकाशेऽवस्थितोऽयमात्मा **परे कोशे** अन्यस्मि
मांसपिण्डशब्देन पूर्वमुक्ते पुरीतदाख्ये स्थाने स्वपितीत्यर्थः । 'हिता ना
ो द्वासप्ततिसहस्राणि हृदयात् पुरीततमभिप्रतिष्ठन्ते । ताभिः प्रत्यवसृप्य पुरीत
' इति हि श्रुत्यन्तरम् । हृदयवेष्टनमांसं पुरीतच्छब्देनोक्तम् । तदिह स्थानान्त
च्यते । हृदये जागरः । नाडीविशेषेषु स्वप्नः । हिताख्यनाडीविशेषान्वि
ाति सुषुप्तिरिति विभागः । **यत्र** तृतीयस्थाने । **न तत्र देवा देवलोका य**

---

**केश इति ।** स्वप्नस्थानभूतानां नाडीनामपि हितानामकत्वस्य सहस्रधापाटितकेशवद्भावस्य
तकिश्रुत्युक्तत्वात् सुषुप्तिनाडीनां तासाञ्चैक्यं वा भेद एव वेति विमृश्यमेतत् । ऐक्येऽपि
ाभेदोपपादनाय **केशः सहस्रधे**त्यादिपूर्वकं पुनस्तन्निर्देश इह घटेत । एवम् **अथेमा द**
्य इति पूर्वमारम्भात् इन्द्रियदशकनिबन्धनभूतास्ता एव स्थानभेदेन स्वप्नसुषुप्तिनिर्वाहिकाः ज
ान्धिन्यः । एतदधिकरणकोपासनमेव चानन्तरे खण्डे प्रस्तोष्यत इति विभाव्यं भवति ।
ालेत्यारभ्य एतद्वाक्यपरामर्शे च पूर्वं **हृदयस्य दश छिद्राणी**ति वाक्ये हृदयस्येति न पु
कम्, किंतु उपक्रान्तहृदयपदसमानार्थमिति, यत् तत्र प्रस्तुतं दहरपुण्डरीकम्, तस्यैव सं
च ज्ञायते । न । एकादशखण्डे दहरं पुण्डरीकं प्रस्तुत्य, 'तस्य मध्ये समुद्रः; समुद्रस्य
ाः; तस्मिन्नाड्यश्चतस्रो भवन्ती' ति नाड्यन्तरचतुष्टयप्रस्तावात् **इहोक्ता** नाड्यः कोशव्यति
नगता इति ज्ञायते । तत् स्थानं स्थूलहृदयं वा दहरपुण्डरीकं वेति परामर्शे, 'हृदयस्य न
यात् पुरीततमभिप्रतिष्ठन्ते' इत्येतदनुसारेणार्थनिश्चयः कार्यः । दश छिद्राणि तु दहर
क नाडीमूलस्थानानि ।

सुषुप्तस्य देवाद्यपेक्षया भेदः **न तत्र देवा** इत्यादिना न वर्ण्यते; जागरेऽपि
स्य सत्त्वात् । अतः, बहुवचनाद्यनुरोधाच्च **न** दृश्यन्त इति वाक्यार्थ एव वक्तव्यः । **न**
दावपि एवमेव वाक्यार्थवर्णनं श्रुत्यभिमतं चेत्, **यज्ञा वा** इति वाकारो न स्यात्
बलात तत्पर्यन्तं काचित् शैली, अथान्येति प्रतीत्या, अध्याहारगौरवपरिहाराय च सुषु

**माता न पिता न बन्धुर्न बान्धवो न स्तेनो न ब्रह्महा [1]नतेजस्का**
**मृतं सलिल एव । इदं सलिलं वनम् ।**

**भूयस्तेनैव मार्गेण जाग्राय धावति स सम्राडिति होवाच ॥**

॥ इति सुबालोपनिषदि चतुर्थः खण्डः ॥

1. न. इति न.

---

त। देचा [देहा] दयः सुषुप्तौ न दृश्यन्त इत्यर्थः। **न मातेत्यादि**। सुषुप्तः पुर
ाता भवति। न पिता भवति। मातृत्वपितृत्वाद्यभिमानरहितो भवतीत्यर्थः। **बन्**
तिसंबन्धवान्। बान्धवः सुहृदादिः। **नतेजस्कायममृत**मिति। **अमृतं** मरणा
तमात्मवस्तु **नतेजस्कायम्**। **तेज**श्शब्दो ज्ञानपरः। **काय**शब्दो निकायपरः
वेधज्ञानसमूहरहितमित्यर्थः। **सलिले**। सलिले, सलिलकार्ये शरीरे वा वर्त
र्थः। सलिलशब्दं विवृणोति **इदं सलिलं वन**मिति। **वनम्**। 'वन ष
कौ'। आत्मनः संभजनीयमिदं शरीरं सलिलकार्यत्वात् सलिलमित्यर्थः। इ
ग्लं **छन्न**मिति पाठे इदं शरीरं **छन्नम्** = सुषुप्तस्य न भासत इत्यर्थः।

पुनः प्रबोधप्रकारमाह **भूय** इति। **तेनैव मार्गेण** निर्गमनमार्गेण
दयनाडीमार्गेण। 'ताभिः प्रत्यवसृप्य पुरीतति शेते' इति श्रुतेः। **सम्रा**
स्वमिभूतः पुरुषः **तेनैव** निर्गमनमार्गेणैव **जाग्राय** जागरणाय **धाव**
ति। हृदयस्थानमिति शेषः। इति होवाचेति आचार्य इति शेषः॥

इति हरितकुलतिलकवाग्विजयिसूनोः श्रीरङ्गराजदिव्याज्ञालब्ध-
वेदव्यासापरनामधेयस्य श्रीसुदर्शनार्यस्य कृतौ
सुबालोपनिषद्विवरणे चतुर्थः खण्डः॥

---

ा भवतीत्याद्यर्थवर्णनम्। **बन्धुः प्रकृतिसंबन्धवा**निति। स्वस्वमातापित्रादिशरीरानुबन्ध
यर्थः। **नतेजस्काय**मिति पाठदर्शनेन धर्मभूतज्ञानसमूहरहितम् इत्यर्थवर्णनम्। अने
**नमाताभवती**त्यादीनां मातृत्वाद्यभिमानराहित्यरूपोऽर्थो व्यञ्जितो भवति। न हि
तो जीवः सुषुप्तौ मातृत्वरहितो भवति। **न**शब्दं विना **तेजस्काय**मित्येव तु पाठो दृश्यते
अपरिणतधर्मभूतज्ञानविशिष्टमित्यर्थः। वस्तुतः ज्ञानस्वरूपमित्येवार्थः। अभिमानाद्यनुप
ात्रेण आत्मनाशो न मन्तव्य इति च **अमृत**मित्यनेन दर्शितम्। देहाभिमानाभावेऽपि
न्धो नापेत इति दर्शयितुं **सलिल एवे**ति। 'सलिल एको द्रष्टे'ति च बृहदारण्यके
३२.)। **तेनैव मार्गेणे**ति। हृदयस्थानस्थितो जागरस्थानात् स्वप्नस्थानद्वारा सुषुप्तिस्थानं
डरीकमध्यमागतो यथागतं बहिरायातीत्यर्थः। **सम्राडि**ति। स्वप्नप्रस्तावे **संप्रसाद**
जाग्रद्भवन् सम्राडित्युच्यते। बृहदारण्यके तु **सम्राडि**ति जनकविषयं संबोधनम्।

(५)

॥ अथ पञ्चमः खण्डः ॥

ानि स्थानिभ्यो यच्छति । नाडी तेषां निबन्धनम् ।

जागराद्यवस्थासु दुःखाभिभूतस्य निर्विण्णस्य चेतनस्यापवर्गार्थम्, दन्तरात्मभूतस्य सर्वस्मात् परस्य निर्दोषस्य कल्याणगुणाकरस्य परमात्मनः न् उपदिशति **स्थानानि स्थानिभ्यो यच्छती**ति । वक्ष्यमाणानि थानानि **स्थानिभ्यः** आदित्यादिभ्यः परमात्मा **यच्छति** प्रयच्छति । ां चक्षुराद्यभिमानित्वं भगवत्संकल्पाधीनमित्यर्थः । "ज्योतिराद्यधिष्ठानं प्राणवता शब्दात्" इति हि सूत्रकारः । **नाडी तेषां निबन्धन**मिति । नम् संबन्धहेतुः । **तेषाम्** आदित्यादीनां चक्षुरादीनाञ्च शरीरान्तर्गत-न चेतनेन संबन्धहेतुर्नाडी । आदित्याद्यधिष्ठितं चक्षुरादिकं नाड्या नाडी हृदयेन संबद्धा । हृदयमात्मना संबद्धमिति तत्तद्देवताधिष्ठिते-त्मनः संबन्धो नाडीद्वारक इत्यर्थः ।

---

रमात्मविषयकोपासिसिषोपजननाय जीवस्य जागराद्यवस्थाक्लेशज्ञापनं कृतम् । शनाडीरूपनिबन्धन — तदनुबन्धिवस्त्वन्तर्यामिपरमात्मोपासनमनन्तरखण्डे वक्ष्यते, भिर्हितानामिकाभिः देहिनां हितं जागरादिभेदेन नानाप्रकारं संभवत् उपवर्णयन् गरितनखण्डशेष इत्यपि ध्येयम् ॥

(५)

ड्यो दर्शिताः । तन्नाडीतदनुबन्ध्यवच्छेदेन परमात्मोपासनमत्रोपदिश्यते । ननु यथ-पर्यायाः सन्तीति नाड्यः चतुर्दश, न तु दशेति प्रतीयते—अथापि मनसः कतया इन्द्रियान्तरनाड्य एव मनोनाड्योऽपि ; एवं बुद्धिचित्ताहङ्काराणामपि मनः श्रीभाष्ये भाषितत्वात् तदर्थमपि न पृथङ् नाड्य इति स्यात् । अतएव हृदयस्य दशं-गुक्तानीति चेत् — अस्तु, किं तेन ? वस्तुतो मनोबुद्ध्यादेः विभिन्नोपासनस्थान-सन्त्येव उक्तनाडीदशकातिरिक्ताः मनःप्रभृतीनां नाडीविशेषाः । अत एव षष्ठ नाम्ना निर्देक्ष्यन्ते । अत एव अहङ्कारादिपदमपि मनोभिन्नपरतया भाष्ये व्याहृय। तु सर्वथा मन एव ।

**तेषां निबन्धन**मिति प्रतिपर्यायमावर्तते । तत्र प्रथमवाक्ये स्थानानां स्थानिनाञ्च तेषामेव पूर्वं निर्देशात् । उपरितनेषु तैः सह विषयाणामपि ।

१. चक्षुरध्यात्मं द्रष्टव्यमधिभूतमादित्यस्तत्राधिदैवतम् । नाडी
निबन्धनम् । यश्चक्षुषि यो द्रष्टव्ये य आदित्ये यो नाड्यां यः प्राणे यो वि
य आनन्दे यो हृद्याकाशे य एतस्मिन् सर्वस्मिन्नन्तरे सञ्चरति, सोऽयम

अथ त्रिविधस्थानसंबन्धिनः परमात्मन उपासनं वक्तुं स्थानत्रैवि
**चक्षुरध्यात्म**मित्यादिना । **आत्मनि** शरीरे वर्तमानं वेदितव्यमध्यात
**भूतेषु** पृथिव्यादिषु वर्तमानं वेद्यम**धिभूतम्** । देवेषु वर्तमानं देवतासु अन्तर्भ
वेद्यम**धिदैवतम्** । **चक्षुरध्यात्म**मिति । शरीरे वर्तमानं चक्षुः परमात्मव्याप्यत
सन्धेयम् । **द्रष्टव्यमधिभूत**मिति । पृथिव्यादिषु वर्तमानं **द्रष्टव्यं** रूपं तथा वे
**आदित्यस्तत्राधिदैवत**मिति । **तत्र** द्रष्टव्यगोचरे चक्षुषि अधिष्ठातृत्वेन दे
वेद्यं तत्त्वम् आदित्य इत्यर्थः । पूर्वं सामान्येनोक्तं नाडीनां संबन्धक
दर्शयति **नाडी तेषां निबन्धन**मिति । नाडीविशेषा वक्ष्यन्ते । हृदयसंबन्द्धा
हृदयस्थेन पुरुषेण चक्षुरादित्यद्रष्टव्यानां संबन्धहेतुरित्यर्थः ।

एवमुक्ते त्रिविधेऽपि स्थले नाड्यादिषु च परमात्मनोऽवस्थानमाह **यश्च**
यादिना । सर्वपर्यायेष्वपि प्राणशब्दो नवमे वक्ष्यमाणवायुविशेषपरः । **वि**
त्वं तत्तद्देवताधिष्ठितैः प्राणाधारैः चक्षुरादिभिरिन्द्रियैः जन्ये जीवात्मनो विज्ञ
**मानन्दे** ज्ञानपूर्वकप्रवृत्तिफलभूते सुखे । अनेन जीवात्मनां ज्ञानानन्दयोः च
नीनां हेतुत्वं परमात्मसंकल्पाधीनमिति दर्शितम् ॥ 'प्रज्ञा च तस्मात् प्र
राणी', 'एष ह्येवानन्दयाती'ति हि श्रुत्यन्तरम् । **हृद्याकाशे** । नाडीसंबन्धः
वेन्द्रियाश्रये हृदि विद्यमानमा**काशं** सुषिरम्; तस्मि**न्** । 'तस्यान्ते सुषिरं सूक्ष्म
ति हि श्रूयते । **एतस्मिन्** इह परिगणिते सर्वस्मिन् वस्तुजाते । तत्राप्य
अन्तर्भागे । यः **सञ्चरति** वर्तते=तिष्ठतीत्यर्थः । सर्वगतस्य परमात्मनो दे
देशान्तरसंयोगरूपसञ्चारासंभवात् । **सोऽयम्** उक्तवैभवविशिष्टः सर्वगत
निविष्टः **आत्मा** परमात्मेत्यर्थः; आदित्यदिक्क्षेत्रज्ञेष्वप्यवस्थानोक्तेः । स नार

**नाडीविशेषा वक्ष्यन्त** इति । षष्ठे खण्डे विरजा, सुदर्शना, जिता, सौम्या, भ
मारा, अमृता, सत्या, मध्यमा, नासीरा, शिशुः, सूर्या, असुरा, भास्वती इति चतुर्दश ना
ध्यन्ते । नवमेऽपि ताः प्रस्तोष्यन्ते ।

पासीत, अजरममृतमभयमशोकमनन्तम् ।

श्रोत्रमध्यात्मं श्रोतव्यमधिभूतं दिशस्तत्राधिदैवतम् ; नाडी तेषां । यः श्रोत्रे यः श्रोतव्ये यो दिक्षु यो नाड्यां यः प्राणे यो आनन्दे यो हृद्याकाशे य एतस्मिन् सर्वस्मिन्नन्तरे सञ्चरति, । तमात्मानमुपासीत, अजरममृतमभयमशोकमनन्तम् ।

नासाऽध्यात्मं घ्रातव्यमधिभूतं पृथिवी तत्राधिदैवतम् ; नाडी धनम् । यो नासायां यो घ्रातव्ये यः पृथिव्यां यो नाड्यां यः विज्ञाने य आनन्दे यो हृद्याकाशे य एतस्मिन् सर्वस्मिन्नन्तरे सोऽयमात्मा । तमात्मानमुपासीत, अजरममृतमभयमशोकमनन्तम् ।

जिह्वाऽध्यात्मं रसयितव्यमधिभूतं वरुणस्तत्राधिदैवतम् ; नाडी धनम् । यो जिह्वायां यो रसयितव्ये यो वरुणे यो नाड्यां यः विज्ञाने य आनन्दे यो हृद्याकाशे य एतस्मिन् सर्वस्मिन्नन्तरे सञ्च- यमात्मा । तमात्मानमुपासीत, अजरममृतमभयमशोकमनन्तम् ।

---

भविष्यति । तम् उक्ताकारविशिष्टमुपासीत । मुमुक्षुरित्यर्थसिद्धम् ; ब्रह्माप्येति । एतन्निर्वाणमनुशासन'मिति प्रकरणात् । अजरममृत- जरामरणनिषेधः सर्वशरीरगतसर्वविकाराभावप्रदर्शनार्थः । अभयमशोक- विभूतहेतुजन्ये दुःखे भयशोकौ । तन्निषेधो जीवात्मगतसर्वदोषा- र्थः । एवमचेतनात् बद्धचेतनाच्च व्यावृत्तिः । अनन्तम् देशकाल- परिच्छेदरहितम् । अनेन मुक्तात् व्यावृत्तिः । एवं चिदचिदात्मक- विशिष्टं विश्वचिदचिद्विलक्षणं परमात्मानं नारायणमुपासीतेत्यर्थः ।

श्रोत्रमध्यात्ममित्यादयः पर्यायाः सर्वे प्रथमपर्यायविवरणेन प्रायशो । श्रोतव्यं शब्दजातम् । दिश इति दिगभिमानिदेवता विवक्षिता । नासेति घ्राणेन्द्रियं विवक्षितम् । इन्द्रियप्रकरणत्वात् । घ्रातव्यो गन्धः । शब्दो देवतापरः ।

जिह्वाशब्दो रसनेन्द्रियपरः । रसयितव्यं माधुर्यादिरसः ।

५. त्वगध्यात्मं स्पर्शयितव्यमधिभूतं वायुस्तत्राधिदैवतम्; नाडी निबन्धनम्। यस्त्वचि यः स्पर्शयितव्ये यो वायौ यो नाड्यां यः यो विज्ञाने य आनन्दे यो हृद्याकाशे य एतस्मिन् सर्वस्मिन्नन्तरे सञ्च ोऽयमात्मा तमात्मानमुपासीताजरममृतमभयमशोकमनन्तम्।

६. मनोऽध्यात्मं मन्तव्यमधिभूतं चन्द्रस्तत्राधिदैवतम्; नाडी निबन्धनम्। यो मनसि यो मन्तव्ये यश्चन्द्रे यो नाड्यां यः प्राणे

---

त्वक् स्पर्शनेन्द्रियम्। **स्पर्शयितव्यम्** स्पर्शविशेषः। **वायुः**। दे

ननु मन्तव्यमधिभूतमिति कथमुच्यते मनश्चन्द्रप्रभृतयो विहित (प्रभृतये हे ?) मन्तव्यकोटिनिविष्टाः। ततश्चाध्यात्माधिभूतादिविभागो न स्यादिति—उच् त्वाध्यात्माधिभूतादिसंकर; तत्र मनःप्रभृतिपदार्थव्यतिरिक्तविषयत्वेन **मन्तव्य** ब्दाः संकोचयितव्याः। यद्वा तुलायां प्रमाणभावप्रमेयभाववत् मनश्चन्द्रादीन् ाकारभेदेनोभयकोटिनिविष्टत्वव्यवहार उपपन्न इति मनः शरीरान्तर्वृत्तित्ववे यात्मं भवतु; विचार्यत्ववेषेण मन्तव्यञ्च भवतु। **अधिभूत**शब्दोऽपि भूतपरि ारीरे अवस्थितत्वादुपपन्नः। देवतारूपस्य चन्द्रादेरपि मन्तव्यत्वमविरुद्धम्; वि नेर्णेतव्यत्वात्। आकाशवर्तित्वादधिभूतत्वञ्चाविरुद्धम्। सर्वेश्वरस्य तु मन्तव्यत्वे ामाभ्यधिकराहित्येन अन्याधिष्ठेयत्वाभावात **मन्तव्य**शब्दः चन्द्रादेः (?) अर्वाचं ंकोचनीयः। एवं सर्वपर्यायेषु संकीर्णव्यवहारपरिहारो द्रष्टव्यः।

---

ननु मनसोऽध्यात्मं गणितस्य, चन्द्रस्य चात्रैवाधिदैवतं गणितस्यापि मन्तव्यत्वात् म वं कथमधिभूतमिति गण्येत इति शङ्कते **ननु मन्तव्ये**ति। न मन्तव्यं सर्वमधिभूत वक्षितम्, किन्तु अध्यात्ममधिदैवतञ्चोक्तादन्यस्य भूतान्तर्गतत्वात् प्रायोवादोऽयमित्या माधत्ते **उच्यत** इति। **तुलाया**मिति। तुलायां = घटे अधिकद्रव्यतोलनापेक्षी प्रथमत ना इष्टकादि समगौरवं परिमाय, तत् इष्टकादि पलादिना सहैकत्र फलके निक्षिप्य फलक क्रेयद्रव्यं निक्षिप्य तोलयति। तत्रेष्टकादि पूर्वं प्रमेयं भवत् पश्चात् प्रमाणमपि भवति। र्थः। तदुक्तं **न्यायसूत्रे**, 'प्रमेयता च तुलाप्रामाण्यवत्' इति। अवश्यञ्च मन्तव्यशब् कोचः कार्यः। 'श्रोतव्यो मन्तव्यः' इति श्रुतस्य परमात्मन इह तदर्थतया अग्राह्यत स्याप्यत्र तेन पदेन ग्रहणे न केवल**मधिभूत**मित्येतदनन्वयमात्रम्, 'यो मन्तव्ये' इत्यु नवाक्योक्ता तस्मिन् परमात्मनः स्थितिरपि न घटेत। अतः संकोचनीयोऽयं चन्द्रादित्व कोच्यतामित्याह **सर्वेश्वरस्ये**ति।

ाने य आनन्दे यो हृद्याकाशे य एतस्मिन् सर्वस्मिन्नन्तरे सञ्चरति
ऽयमात्मा । तमात्मानमुपासीताजरममृतमभयमशोकमनन्तम् ।

७. बुद्धिरध्यात्मं बोद्धव्यमधिभूतं ब्रह्मा तत्राधिदैवतम्; नाडी ते
न्धनम् । यो बुद्धौ यो बोद्धव्ये यो ब्रह्मणि यो नाड्यां यः प्राणे
ाने य आनन्दे यो हृद्याकाशे य एतस्मिन् सर्वस्मिन्नन्तरे सञ्चरति
ऽयमात्मा । तमात्मानमुपासीताजरममृतमभयमशोकमनन्तम् ।

८. अहङ्कारोऽध्यात्ममहङ्कर्तव्यमधिभूतं रुद्रस्तत्राधिदैवतम्; नाड
ं निबन्धनम् । योऽहङ्कारे योऽहङ्कर्तव्ये यो रुद्रे यो नाड्यां यः प्रा
विज्ञाने य आनन्दे यो हृद्याकाशे य एतस्मिन् सर्वस्मिन्नन्त
ञ्चरति, सोऽयमात्मा । तमात्मानमुपासीताजरममृतमभयमशोकमनन्तम्

९. चित्तमध्यात्मं चेतयितव्यमधिभूतं क्षेत्रज्ञस्तत्राधिदैवतम्; नाड
ं निबन्धनम् । यश्चित्ते यश्चेतयितव्ये यः क्षेत्रज्ञे यो नाड्यां यः प्राणे

---

**बुद्धिः** व्यवसायवृत्तेर्मनसोऽनुग्राहकं महत्तत्त्वम् । **बोद्धव्य** निश्चे
ादि । महत्तत्त्वब्रह्मादिनाऽपि ( दीनामपि ? ) बोद्धव्यत्वादिविरोधः पूर्ववद
यः । **ब्रह्मणि** चतुर्मुखे ।

**अहंकारः** अनात्मनि आत्माभिमानवृत्तेर्मनसोऽनुग्राहकं महत्कार्यं तत्त्वम
**हङ्कर्तव्यमधिभूतम्** । भूतपरिणामे देहे वर्तमानः जीवात्मैव स्थूलोऽहमित्या
नविषयत्वादहंकर्तव्यशब्दार्थः । तत्र सविषयेऽहंकारे रुद्रोऽधिदैवतम् । महदभिमा
ुर्मुखपुत्रो रुद्रो महत्कार्यस्याहङ्कारस्याधिदैवतमित्युपपन्नम् । अत एव हि दीक्षि
स्मिन् ब्राह्मणत्वाभिमानेन रुद्रतनुरित्युच्यते ।

चिन्तावृत्तिमत् मन एव हि **चित्तम्** । चिन्ता च स्मरणं वा अपेक्षि
ुत्सा वा । 'एवं सञ्चिन्तयन् विष्णुम्', 'मानसं विष्णुचिन्तनम्' 'चिन्तय
ात्सूतिम्', 'चिन्तयामास को न्वेतत् प्रयुञ्जीयादिति प्रभुः', 'तस्य चिन्त
नस्य महर्षेर्भावितात्मनः' इत्यादिप्रयोगदर्शनात् । **क्षेत्रज्ञो** जीवात्मा स्वयमे
ज्ञ. 'क्षेत्राणि च शरीराणि बीजानि च शुभाशुभे । तानि वेत्ति स योगात्मा

ज्ञाने य आनन्दे यो हृद्याकाशे य एतस्मिन् सर्वस्मिन्नन्तरे सञ्च
ऽयमात्मा । तमात्मानमुपासीताजरममृतमभयमशोकमनन्तम् ।

१०. वागध्यात्मं वक्तव्यमधिभूतमग्निस्तत्राधिदैवतम्; नाडी
बन्धनम्; यो वाचि यो वक्तव्ये योऽग्नौ यो नाड्यां यः प्राणे
ज्ञाने य आनन्दे यो हृद्याकाशे य एतस्मिन् सर्वस्मिन्नन्तरे सञ्च
ऽयमात्मा । तमात्मानमुपासीताजरममृतमभयमशोकमनन्तम् ।

११. हस्तावध्यात्ममादातव्यमधिभूतमिन्द्रस्तत्राधिदैवतम्; नाडी
बन्धनम् । यो हस्ते य आदातव्ये य इन्द्रे यो नाड्यां यः प्राणे
ज्ञाने य आनन्दे यो हृद्याकाशे य एतस्मिन् सर्वस्मिन्नन्तरे सञ्च
ऽयमात्मा तमात्मानमुपासीताजरममृतमभयमशोकमनन्तम् ।

१२. पादावध्यात्मं गन्तव्यमधिभूतं विष्णुस्तत्राधिदैवतम्: नाडी
बन्धनम् । यः पादे यो गन्तव्ये यो विष्णौ यो नाड्यां यः प्राणे
ज्ञाने य आनन्दे यो हृद्याकाशे य एतस्मिन् सर्वस्मिन्नन्तरे सञ्च
रोऽयमात्मा । तमात्मानमुपासीताजरममृतमभयमशोकमनन्तम् ।

---

त्रज्ञ उच्यते' इत्युक्तोऽन्तरात्मा वा । यः क्षेत्रज्ञे—सञ्चरतीत्यत्र, क्षेत्रज्ञश
रमात्मवाचित्वे, स्वस्मिन्नवस्थित इति स्वमहिमप्रतिष्ठितत्वमुक्तं भवति ।

वक्तव्यं शब्दः । अग्निः देवता ।

विष्णुः उपेन्द्रः । त्रिविक्रमत्वात् पादेन्द्रियाद्यधिष्ठातृत्वं तस्य । 'यद्विष्णु
क्रमते', 'विष्णोः क्रमोऽस्यभिमातिहे' त्यादिश्रुतेः । विष्णौ सञ्चरतीति वि
शब्दः इन्द्रानुजत्वेनावतीर्णविग्रहपरः । यः सञ्चरतीति यच्छब्दस्य नारायण
यो विष्णाविति वैय्यधिकरण्यनिर्देशात्; रूपमस्य शुक्ल इति न्यायेन असमानवि
निर्देशे सति विशिष्टवाचिशब्दस्यापि विशेषणमात्रपरत्वोपपत्तेश्च । विष्णुशब्द
विग्रहविशिष्टभगवद्वाचित्वे पूर्ववत् स्वमहिमप्रतिष्ठत्वमर्थः । चतुर्मुखादीनां तु अ
रूपत्वश्रवणाभावात् स्वमहिमप्रतिष्ठितत्वं तत्रानुपपन्नम् । "सृष्टिं ततः करि
वामाविश्य प्रजापते', 'तत्रान्तरात्मा मम च ये चान्ये देहिसंज्ञिताः' इति सा
बृंहणेषु चतुर्मुखादीनां भगवदनुप्रविष्टत्वदर्शनाच्च ।

१३. पायुरध्यात्मं विसर्जयितव्यमधिभूतं मृत्युस्तत्राधिदैवतम्; न
ाषां निबन्धनम्। यः पायौ यो विसर्जयितव्ये यो मृत्यौ यो नाड्यां
ाणे यो विज्ञाने य आनन्दे यो हृद्याकाशे य एतस्मिन् सर्वस्मिन्न
ाञ्चरति, सोऽयमात्मा। तमात्मानमुपासीताजरममृतमभयमशोकमनन्त

१४. उपस्थोऽध्यात्ममानन्दयितव्यमधिभूतं प्रजापतिस्तत्राधिदैवत
ाडी तेषां निबन्धनम्। य उपस्थे य आनन्दयितव्ये यः प्रजापतौ यो ना
ः प्राणे यो विज्ञाने य आनन्दे यो हृद्याकाशे य एतस्मिन् सर्वस्मिन्न
ाञ्चरति, सोऽयमात्मा। तमात्मानमुपासीताजरममृतमभयमशोकमनन्त

एष सर्वज्ञ एष सर्वेश्वर एष सर्वाधिपतिरेषोऽन्तर्याम्येष योनिः सर्व

---

ानन्दयितव्यमिति स्त्रीपुंसशरीरस्थ आत्मा विवक्षितः। अत्र प्रजाप
ब्दः चतुर्मुखव्यतिरिक्तविषयः। 'त्वं रुद्रस्त्वं ब्रह्मा त्वं प्रजापतिः' इति पृथ
्शदर्शनात्; चतुर्मुखस्य महत्तत्त्वाधिष्ठातृत्वप्रतिपादनादर्थान्तरे संभवति त
ुनः प्रतिपादनपरत्वकल्पनायोगाच्च।

एवं समस्तचिदचिद्वस्तुष्ववस्थितस्य भगवतो व्याप्तेः घटादावाकाशव्य
ाम्यव्यवच्छेदार्थम् अन्यत्रासंभावितान् मङ्गळगुणविशेषानाह **एष सर्वज्ञ** इ
याप्यसर्ववस्तुसाक्षात्कर्तेत्यर्थः। **सर्वेश्वरः** साक्षात्कृतस्य सर्वस्य नियन्ता।
**र्वाधिपतिः** नियाम्यस्य स्वामी। न केवलं रक्षकत्वमात्रम**धिपति**शब्द
ातापितृसंरक्ष्यस्य पुत्रस्य तत्पतिकत्वव्यवहाराभावात्। जगच्छरीरकत्वसि
्श्वरशब्दोक्तनियमनमन्तःप्रवेशपूर्वकमिति दर्शयति **एषोऽन्तर्यामी**ति। एषः यो

**तत्पतिकत्वे**ति। न हि पुत्रं प्रति पितुर्मातुश्च पतित्वेन व्यवहार इति। **श्रुतप्रक**
ाशायां तु, 'वृद्धौ च मातापितरौ साध्वी भार्या सुतः शिशुः। अप्यकार्यशतं कृत्वा भ
नुरब्रवीत्' इति मातापितृरक्षके पुत्रे मातरपितरौ प्रति पतित्वव्यवहारप्रसङ्ग इत्युक्तम्।

**सर्वसौख्यैरुपास्यमानः; न च सर्वसौख्या[1]नुपास्यति। वेदशास्त्रै**
**मानः; न च वेदशास्त्राण्युपास्यति। यस्यान्नमिदं सर्वम्; न च योऽ**

**अतः परं सर्वनयनः प्रशास्ता अन्नमयो भूतात्मा**

1. सौख्यान्युपास्यति.

---

सर्वचिदचिच्छरीरकत्वात तस्योपादानमित्यर्थः । **सर्वसौख्यैः** सौख्योपेतैर्देवादिभिरित्यर्थः। **वेदशास्त्रैरिति** । वेदशास्त्राणां भगवदुपासने करणत्वं विवक्षितम् । **वेदशास्त्राणीति** । अशास्त्रवश्य इत्यर्थः । अदनीयम्; संहार्यमित्यर्थः ।

**अतः परमिति** । भूयोऽपि तन्माहात्म्यमुच्यते इत्यर्थः । यद्वा अ गुणकत्वात् **परं** केवलं स एव सर्वस्मादधिक इति वक्ष्यमाणगुणैरन्वयः । स सर्वकार्याणां नेता=निर्वोढा । **प्रशास्ता** प्रशासितृत्वेन निर्वोढा । न तु रा पुरुषवत् प्रशासनीयत्वेन निर्वोढेत्यर्थः । **तमात्मानमित्यात्मशब्दनिर्दिष्ट** त्मनः सर्वान्तरात्मत्वेन आत्मत्वकाष्ठां प्रतिपादयति **अन्नमय** इत्यादिना ॥ भ मरूपदेहोऽ**न्नमयः**। स च सर्वेश्वर इत्यर्थः। **भूतात्मा** भूतानां शरीरकारण

---

**सर्वसौ**ख्यैरित्यत्र बहुव्रीह्यादरणम्, उपरि, 'सर्वसौख्यानुपास्यती' ति पाठ 'सर्वसौख्यान्युपास्यती' ति पाठे तु इहापि कर्मधारय एव। सौख्यैरुपास्यमानत्वं न सौख्यैरस्य क्रियमाणत्वम्। सौख्यभागितया पुंसामतिशयोऽन्यत्र। परमात्मविषये तु सौ तत्संबन्धादतिशयः। अद्भुतानन्दरूपतत्संबन्धात् गुणभूतानामानन्दानामतिशयो भवति

'गुणायत्तं लोके गुणिषु नियतं मङ्गलपदं
विपर्यस्तं हस्तिक्षितिधरपते तत् त्वयि पुनः।
गुणाः सत्यज्ञानप्रभृतय उत त्वद्गततया
शुभीभूयं याता इति हि निरणैष्म श्रुतिवशात् ॥'

इति। **उपास्यतीत्येतत्** उपास्त इत्यर्थे छान्दसम्। असु क्षेपे इति धातुर्वा। **नोपास्यति** पति; न स्वयं स्वसंनिधिं प्रति आनयतीति। सर्वमिदमनायासप्राप्तसर्वसौख्य इत्यर्थाभिप्रा तत्संकल्पाभावेऽपि तस्य तानि भवन्तीत्यर्थकम्; 'इच्छात एव तव विश्वपदार्थसत्ते' त्येत

**अतः पर**मिति। 'ततो यदुत्तरतर' मिति श्वेताश्वतरोपनिषदीव इह **अतः**पदं मिति भावः। **पर**शब्दस्य उत्कृष्टार्थकत्वे **सर्वनयन** इत्यादिपुल्लिङ्गानुरोधेन पर इत्ये अतोऽपि **अत**इति पदमेवं नावधिसमर्पकमिति ध्येयम् । **शरीरकारणभूता**

**य इन्द्रियात्मा मनोमयः संकल्पात्मा विज्ञानमयः कालात्मा**

---

। अन्नमयादिशब्दानां परमात्मसामानाधिकरण्यमात्मशब्दस्वारस्यादवगम्यते ।
मृदात्मको घट इतिवत् आत्मशब्दः स्वरूपमात्रपरः । **प्राणमय इन्द्रियात्मे-**
**क**रीत्यात । न हि प्राणापानादिपञ्चवृत्तिप्राण इन्द्रियस्वरूपः । **प्राणमयः**
ाणशरीरकश्च सः **इन्द्रियात्मा** प्राणवद्धानामपीन्द्रियाणामात्मा । **मनोमयः**
मृतिप्रधानपर्यन्ततत्त्वशरीरक इत्यर्थः । 'भूतात्मा चेन्द्रियात्मा च प्रधानात्मा
मवान् । आत्मा च परमात्मा च त्वमेकः पञ्चधा स्मृतः' इति श्रीविष्णुपुराण-
पबृंहितत्वात् । **संकल्पात्मा** सङ्कल्पशब्दो मनोवृत्तिजन्यज्ञानानां प्रदर्शनार्थः
ाः सङ्कल्पो विचिकित्सा श्रद्धा धृतिरधृतिः ह्रीर्धीर्भीरित्येतत् सर्वं मन एवे'ति
ां मनोमूलानां कामसंकल्पादीनाम् **आत्मा** सत्ताहेतुः **विज्ञानमयः** जीवात्म-
कश्च सः । **कालात्मा** आदित्यादिक्षेत्रज्ञशरीरतया अहोरात्रादिकालचक्र-
हकः । यद्वा आकलनस्य वा आकलयितॄणां वा सर्वेषामात्मा निर्वाहकः ।
र्यामित्वेन स्थितो जीवानामर्थपरिच्छेदसामर्थ्यमापादयतीति यावत् ।

---

**मय इन्द्रियात्मे**त्यादौ प्राणाधीनस्थितिप्रवृत्तिकेन्द्रियादिग्रहणवत् इहापि देहाधीनस्थि
ाकभूतविशेषग्रहणं युक्तं चेत्, भाष्यमिदं तदनुरोधेन नेयम् ।

ननु **अन्नमया**दिशब्दाः तैत्तिरीय इव देहादिमात्रपराः । तेषाञ्च यथाक्रमं भूतादि
हकत्वादात्मत्वं विमृश्यम् । अन्नरसमयस्य देहस्यानेकप्राण्युत्पत्तिहेतुत्वात् अनेकप्राणिसेव्यत्वा
भौतिकस्य सर्वस्य देहोपचयाद्यर्थतया देहशेषिकत्वाच्च भूतात्मत्वं देहस्य । विज्ञानमयस्य
त्मत्वं भूतभविष्यदादिविविधकालसद्भावस्य विज्ञानैकनिरूप्यत्वात् – इत्यत्राह **अन्नमयादि**
**दाना**मिति । तैत्तिरीयेऽपि, 'तस्माद्वा एतस्मादन्नरसमयादन्योऽन्तर आत्मा' इत्या
मयादिपदस्य देहादिमात्रपरत्वेऽपि 'एतमन्नमयमात्मानमुपसंक्रम्य' इत्यादौ विशिष्टपरमात्म
मेवेति ध्येयम् । **आत्मशब्दस्वारस्या**दिति । **सर्वनयनः प्रशास्ते**त्येतत्सामानाधिकरण
**न्नमया**दिपदानां परमात्मपरत्वं सिद्धम् । यदि देहादिमात्रपरत्वप्रत्याशया **प्रशास्ते**त्यनेनै
यत्वत्यागो मन्यते, तदाऽपि **भूतात्मे**त्यादिगत **आत्मशब्द** एव तां प्रत्याशां प्रतिरुणद्धि
: । **भूतात्मे**ति । ग्राह्यात्मा ग्राहकात्मा ग्राह्यग्राहकरूपप्रपञ्चकारणप्रधानात्मा ग्रहीतृजीवा
ायितृहृषीकेशरूपश्च तत्राऽऽत्मा दर्शित इति प्रतीयते ।

आनन्दमयो लयात्मा ।

---

आनन्दमय इत्येतदुपपादयति लयात्मेति ।। लयस्यात्मा । आत्यन्तिकप्रल मोक्षस्य आत्मा सत्ताहेतुः; निर्वाहकः । मोक्षप्रदत्वादिलक्षणादैश्वर्यप्रकर्षात् शयानन्दप्रचुरः परमात्मेत्यर्थः । तैत्तरीयोपनिषदि हि 'अन्योऽन्तर आत्माऽऽन इति आनन्दमयं प्रस्तुत्य, 'यतो वाचो निवर्तन्ते' इत्यन्तेनास्य निरतिशा योगमुपपादयत् वाक्यजातम्, 'सोऽकामयत बहु स्यां प्रजायेय', 'तदनुप्र विज्ञानञ्चाविज्ञानञ्च', 'एष ह्येवानन्दयाति', 'भीषाऽस्माद्वातः पवते जगत्कारणत्व - चिदचिदन्तरात्मत्व - कृत्स्नप्रशासितृत्ववत् अनन्यसाधारण्येन आनन्दयितृत्वेनापि निरतिशयानन्दयोगित्वमुपपादयति ।

ननु चक्षुरध्यात्ममित्यादिपर्यायेषु, 'यः प्राणे यो विज्ञाने य अ इति जीवधर्मस्यानन्दस्य प्रकृतत्वात् तस्येह प्रत्यभिज्ञानात् तद्विकार उक्तोऽय मयः; न तु परमात्मा । आनन्दप्रकर्षस्य चित्तप्रलयरूपस्तैमित्यहेतुत्वात् लयात्मत्व पपन्नमिति चेत्— नैतदुपपद्यते । 'तमात्मानमुपासीत', 'एष सर्वज्ञ एष एष सर्वाधिपतिः' इत्यादिना आत्मत्वेन प्रतिपादितस्य सर्वेश्वरस्य आत्मश भूतेन्द्रियादीनामन्तरात्मतयाऽभिहितस्य जीवानन्दविकारत्वायोगात् । तैत्तरीयोपा 'एष ह्येवानन्दयाती'ति जीवानन्दयितृत्वेनोक्तस्यानन्दमयस्येह प्रत्यभिज्ञानात् । 'य आनन्दे सञ्चरती' ति जीवानन्दस्य तदधीनत्वावगमात् । अत एवानन्द [मय स्यानन्दयितव्यजीवधर्मविकारत्वायोगात्, तत्र च 'एतमानन्दमयमात्मानमुपसंक्रा यानन्दमयस्य प्राप्यत्वोक्त्या ततः प्राप्यान्तरानुक्त्या च परमप्राप्यस्य तस्यैवाऽऽ

---

आनन्दमयो लयात्मेति । प्रलयादौ पूर्वकर्मार्जितान्यादृशलयाः जीवाः र रमानन्दात्मनि परमात्मनि लयार्थं मोक्षे प्रयतन्ते । ईदृशलयनिर्वाहकत्वात् स स्वयमान ति ज्ञायते । अनानन्दमयत्वे ह्यपुरुषार्थत्वात् तत्र लयं न कश्चित् काङ्क्षेत् । किंतु अत्यन्त रेना पौनःपुन्येन सृष्टौ यादृक्षभमानन्दमनुबुभूषुः प्रादुर्भावपर एव स्यादिति भावः ।। कर्षात् निरतिशयानन्दप्रचुर इति । 'युवा स्यात् साधु युवाध्यायकः — स एको ानन्दः' इति श्रवणादस्मन्मते अनुकूलानां सर्वेषामानन्दशब्दवाच्यत्वात् आनन्दमयत्व गत्कारणत्वाद्यनेकविशेषपरं वाक्यं सर्वमपि तस्याऽऽनन्दमयस्य आनन्दांशानां नि वेति भावः ।

**नास्ति, द्वैतं कुतः ?**

---

देन प्रत्यभिज्ञानादात्यन्तिकप्रलयरूपमोक्षनिर्वाहकत्वस्यैव **लयात्मशब्देन** वक्तुं
ात् । अस्यामेवोपनिषदि, 'य आनन्दमेवास्तमेति, तुरीयमेवाप्येति ।
यमेवास्तमेति, तदमृतमभयमशोकमनन्तं निर्बीजमेवाप्येती'ति जीवानन्दस्य
दर्वाचीनत्वेन वक्ष्यमाणत्वात् तुरीयस्य [तुरीयातीतस्य?[ परमप्राप्यतया वक्ष्य-
ाच्च परमप्राप्यतया श्रुतिप्रसिद्धस्यानन्दयस्य तुरीयातीतत्वेन तुरीयादर्वाचीन-
दविकारत्वानुपपत्तेश्च । एवं व्याप्यत्व-निर्वाह्यत्व-तुरीयानतीतत्व-क्षुद्रत्वैः आत्म-
हकत्वपरमप्राप्यत्वतुरीयातीतत्वैश्च विरुद्धस्वभावत्वात् पूर्वापरवाक्यस्थानन्दा-
शब्दौ चातिदूरभिन्नार्थौ । न च जीवानन्दशरीरकः परमात्मेति वाच्यम्—
**वाचो निवर्तन्ते । अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान्**' इति
नसागोचरस्य ब्रह्मसंबन्धित्वश्रवणात्; जीवानन्दस्य स्वसंबन्धित्वेन सर्वप्राणि-
त्रेद्यत्वाच्च भिन्नार्थयोरपि(?) पूर्वापरवाक्ययोरिव आनन्दानन्दमयशब्दयोर्भिन्नार्थत्वं
। तस्मात् **आनन्दमयो लयात्मे**ति वाक्यस्य यथोक्त एवार्थः ।

एवं सर्वान्तरस्यानन्दमयशब्दवाच्यस्य सर्वेश्वरस्य लयात्मत्वप्रसङ्गेन जगदप्य-
भूतस्य तस्य चिदचिद्विलक्षणत्वानुपपत्तिम् तद्गतविकारादिहेयसंस्पर्शनञ्च आशङ्क्य
ति **एकत्वं नास्ति द्वैतं कुत इति** । सर्वजगदुपादानस्य सर्वाप्ययस्थानस्यापि

---

( **अतः पर**मित्यादेरेवमप्यर्थः स्यात्— उक्तरीत्या ग्राह्यग्राहकतदभिमानिदेवता-ग्रहण-
ाद्यन्तर्यामिभूतस्य परमात्मन उपासनायां कृतायाम्, **अतः परम्** उपासनानन्तरं
हकादिरूपान्नमय-प्राणमय-मनोमय-विज्ञानमयक्रमेण आनन्दमये स्वात्मनि लयरूपस्य
निर्वाहको भवति स परमात्मेति । एवञ्च **एकत्वं नास्ती**त्याद्युपरितनवाक्यं मोक्ष-
किञ्चिद्रूपेण वैचित्र्यप्रदर्शनप्रवृत्तमिति । )

ननु परमात्मनः चिदचिद्वैलक्षण्यस्य तृतीयखण्ड एव व्युत्पादितत्वादत्र पुनः किमिति
मेत्यत्राह **लयात्मत्वप्रसङ्गे**नेति । प्रासङ्गिकमेतत्कथनमिति भावः ।

ननु **एकत्वं नास्ती**त्यादिपर्यालोचने शून्यवाद एव श्रुतितात्पर्यमवसीयते । तथा हि—
देमेकत्वं निषिध्यमानं स्वसजातीयरहितस्वरूपम् । सिद्धान्ते तादृशपरमात्मसद्भावेन
ायोगात् । तथा श्रुत्यर्थवर्णने **द्वैतं कुत** इत्येतदसंगतेश्च । सजातीयद्वितीयसद्भावे द्वैतनिषेधा-
। एवञ्च संख्यारूपमेव निषेध्यम । तच्च धर्मिणि सति निषेद्धमशक्यमिति धर्मिनिषेध एव

सर्वेश्वरस्य प्रकृतिपुरुषाभ्यां स्वरूपैक्यं नास्ति। तस्य **द्वैतं कुतः**। चिदचिद्गतभेद कुतः। महदहङ्कारादिकार्यभेदो जन्मजराद्यवस्थाभेदो देवमनुष्यादिजातिभेदः कृष्णादिगुणभेदः गमनागमनादिक्रियाभेदः खुरपुच्छशृङ्गाद्यवयवभेद इति ए सर्वविधं बाह्यं द्वैतम्, सुखदुःखमोहरागद्वेषलोभभयशोकमदमानमत्सरादिव चिद्गतं द्वैतमपि सर्वेश्वरे न प्रसङ्गमर्हतीत्यर्थः।

नन्वेकत्वसंख्याऽपि नास्ति। कुतः सजातीयविजातीयभेद इति अर्थ वाच्यम् — "एष सर्वज्ञ एष सर्वेश्वरः" इत्यादिभिः ज्ञानैश्वर्यादिगुणानां प्रमाण प्रतिपन्नानाम्, कृत्स्नस्य जगतः तद्विभूतित्वस्य च विहितत्वात्। विहि

---

पर्यवसानम्। एवमेकस्यैवाभावे द्व्यादेः का प्रसक्तिरिति **द्वैतं कुत** इत्युच्यते। **मर्त्यं** इत्यादिकमपि तत्तन्निषेधपरं सत् सर्वशून्यत्वमेव ख्यापयति। न भवतीत्यनुक्त्वा न प्रयोगः अत्यन्ताभावं ह्यावेदयति; न तु भेदम्। एवञ्चोपक्रमे, **न सन्नासन्न** इतीदमपि सदादिसर्वनिषेधपरमेव। तृतीयखण्डारम्भे **असदित्येतदपि** अभावार्थकमे प्राचां व्यवहारदर्शनात्। अत एव **निर्वाणमनुशासनमिति** निर्वाणपदमपि साधु सं निर्वाणो दीप इत्यादाविव निर्वाणं ह्यभाव एव। स एवानुशास्यमान इति तदर्थः। अतः एव सुबालश्रुत्यर्थ इतीदृशीमाशङ्कामुपक्षिपति **नन्वित्यादिना**। नन्विति प्रश्नद्योतकम् इत्यन्तेन प्रश्नसमाप्तिः। **इति न वाच्यमिति** तत्खण्डनम्। ननु **विहितस्य** नि **योगादिति** कथम्? एकस्मिन् काले स्थितस्य कालान्तरे निषेधरूपशून्यवादे दोषाभावात् इत्यादिना प्रस्तुतस्यैव **अतः परमित्यादिना**ऽनुवादपूर्वकं पश्चात्काले **लयात्मेति** लयं इत्यस्तु इत्यत्राह **अनेकेत्यादि**। छान्दोग्ये, 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् आहुरसदेवेदमग्र आसीदेकमेवाद्वितीयम्; तस्मादसतः सज्जायत इति। कुतस्तु खलु स्यादिति होवाच' इत्येवं कालविशेषे शून्यमात्रपरिशेष इति वादस्यापि खण्डनेन सद्रूपवस्तु प्रलयेऽपि स्थापनेन सत्कार्यवाददर्शनात् एवम्भूतनानाश्रुतिसिद्धार्थबाधेन शून्यवादस्य वर्णनायोगात्। एवं शून्यवादेऽपि अभावोऽस्ति न वा। नास्ति चेत् सतः सद्भाव इष्टो अभावोऽस्ति चेत्, स एकोऽनेको वा। अभावे संख्या न भवतीति चेत्—तत् अनुभवा अस्ति चेत्, एकत्वं नास्ति द्वैतं कुत इत्यादिकमनुपपन्नमित्यादिकमपीह भाव्यम्।

**विहितस्य च निषेधायोगादिति**। **द्वैतं कुत** इति वाक्यं न सर्वज्ञत्वादिरूपद्वैतनि तथा सति विधायकवाक्यस्यासत्यार्थप्रतिपादकतया अप्रामाण्यापत्तेः। एवमप्रामाणिकार्थप्रति भावस्य पारमार्थिकताया दुर्वचतया स्वयमप्यप्रमाणत्वापत्तेः। विहितायाः क्रियाया विकल्पेन वाक्यद्वयस्य प्रामाण्यम्। वस्तुनि विकल्पायोगात्तु एकतरस्याप्रामाण्यं दुर्वार यत्र यद्विधिः, तदा तत्र तन्निषेधायोगेऽपि देशान्तरे कालान्तरे च तन्निषेधो न

**मर्त्यं नास्ति, अमृतं कुतः? नान्तःप्रज्ञो नबहिःप्रज्ञो नोभयत**

निषेधायोगात् । अनेकवाक्यप्रतिपन्नस्य एकवाक्येन बाधायोगात् । प्रथम
वगतस्य च चरमवाक्येन बाधायोगात् । गुणविशेषविधानस्य सामान्यशब्देन
योगात् । विशेषनिषेधे सामान्यनिषेधसंकोचस्य युक्तत्वाच्च । अतो यथोक्त ए

**मर्त्यं नास्ति अमृतं कुत** इति । मर्त्यत्वं नास्ति; अमृतत्वं कुतः ।
सति हि प्रतिषेधः । मर्त्यत्वमिति सांसारिकस्वभावानामुपलक्षणम् । संस
प्रसङ्गाभावात् परमात्मनो जीवात्मन इव तद्विनाशरूपममृतत्वं नास्तीत्यर्थः ।

एवं चिदचिद्वैलक्षण्यमुक्त्वा कल्याणगुणेषु प्रथमप्रतिपादितं सार्वज्य
तिशयात् प्रपञ्चयति **नान्तःप्रज्ञ** इत्यादिना । अन्तरेव प्रज्ञा यस्य सोऽन्तः
अब्भक्ष इतिवत् अवधारणगर्भोऽयं निर्देशः । **नान्तःप्रज्ञः** । बाह्यमपि जानाति
**नबहिःप्रज्ञः** । न बहिरेव जानाति, अपित्वन्तरपि जानातीत्यर्थः । कूपक
कूपाद्बहिर्न वेत्ति । भूतलस्थः पुरुषः कूपान्तर्गतं न जानाति । सर्वेश्वरस्तु
अपितु सर्वपदार्थानामन्तर्बहिश्च जानातीत्यर्थः । **नोभयतःप्रज्ञः** ।

---

चेत्—तर्हि देशकालविशेषस्वीकारात् कथमेकत्वस्य द्वैतस्य वा निषेधः? कथञ्च सर्वेश्व
नित्यञ्च सर्वज्ञत्वादिकं न कदापि तदधिकरण एव निषेद्धुं शक्यम् । युक्त्यन्तरमाह **अने**
यद्यप्येकप्रमाणवाक्यप्रतिपन्नमप्यशक्यनिषेधम्; अथापि अनेकवाक्यप्रतिपन्नतया भूयसा
विधिरेव बलीयानिति भावः । असञ्जातविरोधत्वादुपक्रमप्राबल्यादप्येवमित्याह **प्रथमे**ति । स
निषेधस्य विहितव्यतिरिक्तविषयकत्वस्यैव युक्तत्वादपि न विहितविशेषनिषेध इत्याह
**विशेषे**ति । विशेषनिषेधे सामान्यनिषेधस्य पर्यवसानादप्येवमित्याह **विशेषनिषेध**
न च विधिस्थल एव छागपशुन्यायेन सामान्यविशेषपरता; न निषेधस्थल इति वा
तत्रापि, 'वार्ताकं न भक्षयेत्,' 'श्वेतवार्ताकं न भक्षयेत्' इत्यत्र विशेषनिषेधपर्य
संप्रतिपन्नत्वात् । निषेधस्य प्रतियोग्यनुयोगिसापेक्षतया द्वैतसिद्धौ सर्वथा द्वैतनिषेध
विशेषजिज्ञासायां विशेषनिषेधस्योपजीव्यत्वात् । लोकेऽपि तथा तात्पर्येण **बहुलं प्रयोगद**

ननु **एकत्वं नास्ती**त्यादेः, आनन्दमये लयं प्राप्तस्य जीवस्य आनन्दमयेन सह
कत्वं न भवति । राज्ञो भृत्यस्येवात्यन्तद्वैतं तु नतराम् । पूर्वमेव तस्यान्तर्यामितया अपृथ
मुक्तस्य **मर्त्यं** मरणादि न भवति । अमृतं तु 'आभूतसंप्लवं स्थानममृतत्वं तु भाष्यते'
नतराम् । कर्माधीनजन्मन एवाभावेन मरणामृतयोरुक्तयोरप्रसक्तेः इत्यर्थोऽस्तु – ना

**नप्रज्ञानघनो नप्रज्ञो नाप्रज्ञः, अपि नो विदितं वेद्यं नास्ति**

परिच्छिन्नरूपाद्यपेक्षया अन्तर्गतत्व (अन्तर्व ?) हिर्भागौ विद्येते, तथापि परमात्मनः
गतत्वात् बहिर्भागो नास्ति ; तदभावात् तदपेक्षान्तर्भागश्च नास्तीति नोभयतः
अपितु सर्वगतः सर्वं जानातीत्यर्थः । **नप्रज्ञानघनः** न घनीभूतज्ञानः । घनत्वं
त्वम् । बाहुल्यञ्च प्रसृमरद्रव्यस्य करतलादिप्रतिहतिकृतम् । यथा रविकिरणादेः । उ
प्रतिहतिहेतुकघनीभावनिषेधात् प्रतिहतिः निषिद्धा भवति । अप्रतिहतज्ञान इत्य
**नप्रज्ञः** प्रकृष्टं ज्ञानं प्रज्ञा । अपरोक्षज्ञानं प्रकृष्टज्ञानम् । इन्द्रिययोगाभ्यासादि
ज्ञानरहित इत्यर्थः । **नाप्रज्ञः** तथाऽपि न प्रकृष्टज्ञानशून्य इत्यर्थः । अपितु
निरपेक्षस्वाभाविकसर्वसाक्षात्कारवानित्यर्थः । **नो विदितं वेद्यं नास्तीति** ।
सर्वेश्वरस्य विदितमतीतज्ञानविषयो नास्ति । **वेद्यम्** आगामिज्ञानविषयश्च नास्ति ।

---

पुराणोक्ताः अन्तःप्रज्ञादिशब्दवाच्या जीवस्य न भवन्ति मुक्तावित्युच्यते, **न प्रज्ञानघन**
दिना मुक्तस्य जाग्रत्सुप्तसुषुप्तवैलक्षण्यमुच्यते । **अपि नो** इत्यादिना च तस्य सार्वज्ञ्यम् ।
**न्निर्वाणमि**ति च, 'निर्वाणमय एवायमात्मा ज्ञानमयोऽखिलः' इत्युक्तरीत्या आनन्दरू
तथाच आनन्दमये लीनस्य सार्वत्रिकसार्वकालिकज्ञानभोगसाम्यात् तदविशेषात् लय
पूर्वोक्तविवरणरूपत्वमुपरितनसंदर्भस्येति चेन्न —

**सर्वनयन** इत्यादेः **लयात्मे**त्यन्तस्य परमात्मपरत्वात्, **नान्तःप्रज्ञ** इत्युप
प्रथमान्तानामपि तत्परत्वौचित्यात् मध्यवाक्यस्यापि तद्विषयकत्वस्यावश्यकत्वात् । अन्यथा
**नास्ति** इति अद्वैतमतनिषेधः ; **द्वैतं नास्ती**ति द्वैतमतनिषेधः ; तेन विशिष्टाद्वैतमत
रित्यादिकथनस्याप्याप्यत्तेः । **नान्तःप्रज्ञ** इत्यादौ अस्तीत्यप्रयोगात् नञो भेद एवार्थः, न
भावः । एवं तादृशतादृशज्ञातृभेदे कथिते सर्वथा अज्ञत्वमापतेदिति **नाप्रज्ञ** इति
कृतः । तर्हि कियत् तज्ज्ञानमित्यत्र सर्वविषयकमिति **अपि नो विदितमि**त्यादिनोच
ननु '**नाप्रज्ञ** इत्यत्र प्रज्ञा नाम प्रमा । अप्रज्ञत्वं भ्रान्तत्वम् । तन्निषेध इत्यर्थोऽस्तु ' इति
अत्यन्ताप्रसक्तनिषेधस्तदा स्यादिति । **अपि नो विदितमि**त्यत्र वर्तमानवेदनविषयनिषेधा

येतन्निर्वाणमनुशासनम् । इति वेदानुशासनम् । इति वेदानुशासनम्

इति सुबालोपनिषदि पञ्चमः खण्डः ॥

---

यं नित्यज्ञानगम्यमित्यर्थः । इत्येतन्निर्वाणमनुशासनम् । एवं सर्वेश्वरस्य गु
भूतिप्रकर्षवैशिष्ट्यविषयमिदमनुशासनं मोक्षहेतुः । इति वेदानुशासनम् वेदपुर
ोपदेशः । अभ्यासः समाप्तिद्योतकः; आदरकृतो वा ॥

इति श्रीहरितकुलतिलकवाग्विजयिसूनोः श्रीरङ्गराजदिव्याज्ञालब्ध-
वेदव्यासापरनामधेयस्य श्रीसुदर्शनार्यस्य कृतिषु
सुबालोपनिषद्व्याख्याने पञ्चमः खण्डः ॥ *

॥ श्रीसुदर्शनार्यमहादेशिकाय नमः ॥

॥ शुभमस्तु ॥

---

* एतदुपरि इदं भाष्यं नोपलभ्यते । तावता एतदुपरि नेयमुपनिषदि
। मन्तव्यम् । प्रत्यक्षविरोधात्; एतद्भाष्यश्रीभाष्यादिविरोधाच्च । उपरितः
ाक्यानि हि तत्रतत्रोदाहृतानीति ।

---

: सर्वनिषेधे तात्पर्यम् । तत् सिद्धं परमात्मनः सर्ववैलक्षण्यप्रतिपादकमिदं सर्वमिति ।
ः सुबालोपनिषदि एकादश खण्डाः शिष्यन्ते । तेषां भाष्यादर्शनात् परिष्कारमात्रं भविष्

विवरणकृतां व्यासार्याणां प्रणम्य पदाम्बुजे
विनतनिखिलाचार्यश्रेणिर्विधित्सति विस्तरम् ।
अनधिगतवान् अन्यां व्याख्यामशेषपरिष्कृति-
प्रवणहृदयः षष्ठात् खण्डात् स्वकीयकृतेर्मनाक् ॥

प्रथमे खण्डे नसन्नासन्नसदसत् किञ्चित् प्रलयकालस्थितं प्रत्यबोधि । तदेव सृष्टिप्र
नेनं प्रलयमुपवर्ण्य, **परस्तान्नसन्नासन्नसदसदिति** अन्ववादि । तत्र, 'दिग्देशका
ताति:' इति पाणिनिस्मरणात् कालार्थकत्वस्यापि संभवात् **परस्ता**दित्यस्य, 'तमः परे
भवती'त्युक्तैकीभावानन्तरकाले इत्यर्थाङ्गीकारे, येन देवेनैकीभावः तमस उक्तः, स एव नसन्न
सदसदित्युक्त इति प्रतीयत एव । तमसस्तत्रैकीभूततया देवस्यैव प्राधान्यात् तस्यैव **नस**
देना ग्रहणौचित्यात् । प्रथमखण्डे **नस**दित्यादिनोक्तादेव, 'तस्मात् तमः संजायत' इ
आविर्भावोक्तेश्च । **परस्ता**दित्यस्य, 'आदित्यवर्णं तमसः परस्तात्' इत्यादिश्रुतिशैलीमनुसृ
परत्वेऽपि, प्रकृतिमण्डले सृष्टिं विधाय विहारपरः परो देवः प्रलये एतद्व्यापारादुपरतः परस्ता
देत्याद्युक्तप्रकारेणावतिष्ठत इत्युक्तं भवति । एतावता स परो देव इति प्रतिपन्नम् । तृतीयखण्
एव चेतनाचेतनवैलक्षण्येन मन्तव्यात्मत्वेनोपदिष्टः । तदेवात्मत्वमुपपादयितुं प्रवृत्य चतु
र्थान्तः तस्य स्थितिं मनसि निधाय जीवस्य जाग्रदाद्यवस्थाः कथयित्वा, तत्र ग्राह्यग्राहकादि
तायमात्माऽस्ति, हृदयाकाशे चेति तादृशात्मोपासनं प्रपञ्चितम् । अथ तस्येतरवैलक्षण्यमु
तम्, 'एष सर्वज्ञ' इत्यादिना ।

'षाड्गुण्याद् वासुदेवः पर इति स भवान् मुक्तभोग्यो बलाढ्यात्
बोधात् संकर्षणस्त्वन् हरसि वितनुषे शास्त्रमैश्वर्यवीर्यात् ।
प्रद्युम्नः सर्गधर्मौ नयसि च भगवन् शक्तितेजोऽनिरुद्धो
बिभ्राणः पासि तत्त्वं गमयसि च तथा व्यूह्य रङ्गाधिराज ॥

करीत्या द्विकद्विकरूपेण विभक्तगुणमध्ये ज्ञानम्, ऐश्वर्यम्, पालनसामर्थ्यञ्च **सर्वज्ञ**
दिना निर्दिश्य तेन व्यूहत्रयमुपक्षिप्य स एवान्तर्याम्यात्मा सर्वसृष्टिस्थितिसंहारकारण
उपपाद्य मुक्तौ लयोऽपि तत्रैवेत्युपरि उपादिष्टम् । स च जगन्निमित्तोपादानभूतो मोक्षप्रद
देव आनन्दमयः, स यश्चायं पुरुषे, यश्चासावादित्ये, पुण्डरीकाक्षः पुरुषोत्तमो नाराय
च तत्र सुबोधमेव । अथापि उक्तोपासनफलभूतपरमपदप्राप्तिप्रकारपरिशीलनार्थमुपरि प्रवृत्तेय
षत् षष्ठ खण्डे परमपदस्वरूपमुपवर्णयन्ती पूर्वोक्तं कारणं नारायण इति च मुक्तकण्ठमाह
तत्स्थानमेव परमं पदमिति प्रतिष्ठापितं भवति । तदा च **परस्तान्नस**दित्यत्र **परस्ता**
र्थोऽपि स्फुटं प्रदर्शितो भवतीति ।

तत्र कोऽसौ देवः परस्तात् स्थितः । यदि च स परस्तात् स्थितः, तदा तदाधारदेशादे
अवगमात् **असदेवेदमग्र आसी**दित्यादि कथम्? अथ सर्वसृष्ट्यारम्भे स देशो नास्ति,
तदाधारकः स देवोऽपि नास्तीति अन्यदेव किञ्चित् जगत्कारणं वक्तव्यम् । कारणं तु ध्येय

॥ अथ षष्ठः खण्डः ॥

**नैवेह किञ्चनाग्र आसीदमूलमनाधारम् ।**
**इमाः प्रजाः प्रजायन्ते दिव्यो देव एको नारायणः ।**

गात् तदेव मुक्तये उपास्यम्, न तु प्रागुक्तो देव इत्याशङ्कायाम् —, न सृष्ट्यारम्भकाले
ार्थासत्त्वम्, नापि तस्माद् देवादन्यः कारणम्, येनान्योपासनं प्रसजेत् । स एव तु
ृस्थितिसंहारकारणमिति दशमखण्डपर्यन्तेन भागेनोपदिश्यते **नैवेहे**ति । वाक्यमिदम्
यधिकरणे **श्रीभाष्ये** उपात्तम् । इह तमोमण्डले । **अमूल**मिति अकारणकोऽप्यपि
ापेक्षनित्यपदार्थान्तरवत् साधारत्वप्रतीतिः स्यात्, तद्व्यवच्छेदाय **अनाधार**मिति ।
स्थितौ च परसापेक्षकार्यवस्तुविलक्षणम्, स्थितौ परसापेक्षनित्यपदार्थविलक्षणञ्च यत्
णम्, तत् इह प्रकृतिमण्डले किञ्चिद्रूपेण नासीदित्यर्थः । तथा च नित्यविभूतौ तस्याने-
तदाऽवस्थानेऽपि प्रकृतिमण्डले तथावस्थानाभावात् **असद्वा इदमग्र असी**दिति प्राकृत
ना दृश्यमानस्यैतन्नामरूपविभागराहित्यवर्णनमुपपन्नम् । **परस्ता**दित्युक्तो देशश्च न
जायते, नापि नश्यति; नापि तस्य प्रकृतं देवं प्रति आधारता; अनाधारकत्वात् ।
स देशोऽपि तद्देवधार्थ एव । कामं तु तदीयो दिव्यमङ्गलविग्रहः तद्देशाधारको भवितु-
तावता न काचित् क्षतिरित्युक्तं भवति । अत्र **किञ्चि**दिति पदं, **इमाः प्रजाः**
**न्त** इति वाक्यविवक्षितकार्यान्तर्गतकिञ्चित्परम् ।

**इमाः प्रजाः प्रजायन्त** इत्यत्र तत इति पूरणीयम् । जनिकारणं स्पष्टं निर्दिशति
**देव एको नारायण** इति । यद्वा प्रजायन्त इत्यन्तस्य पृथग्वाक्यत्वं विनैव निर्वाहे
दो न युक्तः । यदाहुः, 'संभवत्येकवाक्यत्वे वाक्यभेदस्तु नेष्यते' इति । अतः, 'दिव्यो
को नारायणः इमाः प्रजाः प्रजायन्ते' इतीदमेकं वाक्यम् । न च प्रजायन्त इति
ानुपपत्तिः; 'सुवर्णं खदिराङ्गारसवर्णे कुण्डले भवतः' इति विधेयानुसारेणापि
कवचनप्रयोगस्य महाभाष्ये दर्शितत्वात् । उदाहृतश्चेदं **न्यायपरिशुद्धौ** । अत्र **इमा**
कृतपदार्थं निर्दिश्य कारणे तद्वैलक्षण्यं **दिव्य** इत्यादिना दर्शितम् । **दिवि** नित्यविभूतं
**दिव्यः** । **परस्ता**दिति प्रागुक्तविवरणमेतत् । **देव** इति **परे देवे** इति प्रागुक्तपरामर्शः
ेण जननं तस्य लीलायै केवलम् । एवं जायमानोऽपि द्योतमान एव, अकर्मवश्यत्व
यतेऽनेन । ब्रह्मरुद्रादीनामीदृशं देवत्वं नास्तीति **एक** इत्यनेनोक्तम् । अयमेक एव देवः
ं तु जीवत्वात् देवत्वं न पुष्कलमिति च भावः । उपादानातिरिक्तनिमित्तकारणव्यवच्छेद
 इति । देवान्तरशङ्कां दूरत एव निरस्यता नामविशेषेण तं निर्दिशति **नारायण** इति
मार्थविशेषाश्च रहस्यग्रन्थेष्वनुसंधेयाः ।

चक्षुश्च द्रष्टव्यं च नारायणः । श्रोत्रञ्च श्रोतव्यं च नारा

च घ्रातव्यं च नारयणो जिह्वा च रसयितव्यञ्च नारायणः ।
स्पर्शयितव्यञ्च नारायणो मनश्च मन्तव्यञ्च नारायणो बुद्धिश्च
नारायणोऽहङ्कारश्चाहङ्कर्तव्यञ्च नारायणश्चित्तञ्च चेतयितव्यञ्च
वाक् च वक्तव्यञ्च नारायणो हस्तौ चादातव्यञ्च नारायणः ।
गन्तव्यञ्च नारायणः । पायुश्च विसर्जयितव्यञ्च नारायणः ।
नन्दयितव्यञ्च नारायणः ।

धाता विधाता कर्ता विकर्ता दिव्यो देव एको नारायणः

आदित्या रुद्रा मरुतो वसवोऽश्विनावृचो यजूंषि सामानि
राज्याहुतिर्नारायणः ।

उद्भवः संभवो दिव्यो देव एको नारायणः ।

---

पूर्वं ग्राहकेषु चक्षुरादिषु, ग्राह्येषु च द्रष्टव्यादिषु यस्यात्मन उपासनमुक्तम्
नारायण इत्याह चक्षुश्चेत्यादिना । एवञ्च प्रजारूपेणेव चक्षुरादिरूपेण स जात इ
भवति । यद्यपि मनोबुद्ध्यहङ्कारचित्तशब्दाः एकस्यैवान्तःकरणस्यावस्थाभेदविशिष्ट
इत्युक्तं श्रीभाष्ये, 'अध्यवसायाभिमानचिन्तावृत्तिभेदात् मन एव बुद्ध्यहङ्कारचि
पदिश्यते' इति—तथाप्यत्र पूर्वखण्डभाष्यगतिरेवानुसर्तव्या ।

**धाता** सर्वस्य स्रष्टा । **विधाता** श्रुत्यादिरूपशासनकर्ता । **कर्ता** पुण्यपापो
जीवकर्मप्रधानकर्ता । **विकर्ता** तज्जनितजैवसुखदुःखानुरूपलीलारसानुभावी । हेयसु
भवरूपविकारस्तु न तस्य भवति । आरोपस्तु स्यात् । यथोक्तं **नामसह**
"स्वार्थहर्षशोकाद्यभावेऽपि परार्थतत्प्रसक्तिरदोषः" इति । अर्थः = फलम् । प्रसक्तिः =
परफलभूतदुःखाद्यारोपमात्रं भगवता स्वस्मिन् क्रियत इति तदर्थः । आराध्यदेव
पादकवेद-तदाराधनादीनामपि तन्मयत्वमाह **आदित्या** इत्यादिना । **उद्भवः** उत्प
**संभवः** प्रलयस्थानम्; 'प्रभवप्रलयस्थान' मिति गीतोक्तेः । अथवा **उद्भवः** उ
स्वरूपविकारः । **संभवः** चेतनस्य स्वभावविकारो देहप्राप्त्यादिः । लोके मातापि

ता पिता भ्राता निवासः शरणं सुहृद्गतिर्नारायणः ।

राजासुदर्शनाजितासौम्यामोघाकुमाराऽमृतासत्यामध्यमानासीरा-
सूर्यास्वरा ( शिशुसूर्याऽसुराभास्वती ? ) विज्ञेयानि नाडीनामानि
।

र्जति गायति वाति वर्षति वरुणोऽर्यमा चन्द्रमाः कला कलिर्धाता
ापतिर्मघवा दिवसाश्चार्धदिवसाश्च कलाः कल्पाश्चोर्ध्वश्च दिशश्च
यणः ॥

---

ः कर्माधीनः कादाचित्कश्चेति सोपाधिकः ; नारायणस्य तु निरुपाधिक इत्याह माते-
नु न स्वरूपेण मातृत्वादिकमिहोच्यते ; किंतु लोके मात्रादिरूपेण प्रतिपन्नानां
ामिकत्वम् ; **चक्षुश्च द्रष्टव्यञ्चे**त्यादिना अन्तर्यामित्वनिबन्धनस्य सामानाधिकरण्य-
। एवमेव चोपबृंहितमिदं गीतासु—

'पिताऽहमस्य जगतो माता धाता पितामहः ।'
'गतिर्भर्ता प्रभुः साक्षी निवासः शरणं सुहृत्'

इति चेत्—स्वरूपेण मातृत्वादिपरमप्युपबृंहणमस्ति । यथा—

'नारशब्देन जीवानां समूहः प्रोच्यते बुधैः ।
तेषामयनभूतत्वान्नारायण इहोच्यते ॥
तस्मान्नारायणं बन्धुं मातरं पितरं गुरुम् ।
निवासं शरणञ्चाहुर्वेदवेदान्तपारगाः ॥'

एव **नामसहस्रभाष्ये** शरणपदभाषणावसरे एतद्वाक्यमुदात्तम्, 'निवासः शरणं
ारायणः' इति । एतदनुसारेणैव पूर्वं **धाता विधाते**त्यादीनामपि साक्षादेव सामा-
स्वीकृतम्, यत्र बाधः तत्र परं **परम्परये**ति कृत्वा । मात्राद्यनुकूलजनान्तर्या-
ातिकूलान्तर्यामित्वमप्यस्य अविशिष्टमिति क एतद्वर्णनकृतो विशेषः । साक्षादन्वय्यर्थे-
च महिमातिशयः प्रदर्शितो भवति ; अन्येषां मातृत्वादिकमेतदधीनमित्यर्थोऽप्यर्थ-
ति तादृशोपबृंहणभावः ।

न्द्रियकन्दभूतहृदयसंबन्धिन्यो याः चक्षुरादिनाड्य आत्माधारत्वेन प्राङ् निर्दिष्टाः
मिति, तासामपि नारायणात्मकत्वविवक्षया तासां नामानि पठति **विराजे**ति ।
हं वर्षं निगृह्णाम्युत्सृजामि च' इत्युक्तरीत्या सर्वं कार्यं तदधीनमित्युच्यते **गर्ज-**
। प्रधानदेवतानां प्रकृतिप्राकृतानामिव कालपरिणामादीनामप्यविशेषं तदन्तर्यामिकत्व-
ग इति । **कला** चन्द्रकलादिः । **कलिः** अन्तिमयुगदेवता । न केवलमेतत्सर्गा-

पुरुष एवेदं सर्वं यद् भूतं यच्च भव्यम् ।
उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥
तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततः
तद्विप्रासो विपन्यवो जागृवांसः समिन्धते । विष्णोर्यत् परमं पद
तदेतन्निर्वाणानुशासनम् । इति वेदानुशासनम् । इति वेदानुशासन

॥ इति सुबालोपनिषदि षष्ठः खण्डः ॥

---

ातम्, पूर्वोत्तरसर्वसर्गादिगतमपि स इत्युच्यते **पुरुष** इति । एवं तावत् प्राकृतप्रपञ्चा शमुखेन प्रपञ्चं प्रति आत्मत्वं तदीशानत्वादिरूपमुपक्षिप्य **परस्ता**दिति प्रागुक्तपरम मपि तस्य विस्तृणाति **उतेति** । तत्र नामरूपविभागभाजां बहूनां सद्भावादेव एतत्खण्डा ति. निर्देशः तद्व्यावृत्तये कृत इति ध्येयम् । **अमृतत्वस्येशानः** मोक्षप्रदः । यद्वा न ि ं कस्यापि यत्र, तत् स्थानममृतत्वम् । तस्येशान इति । **यत्** अमृतत्वम् अन्ने प्राकृत **नातिरोहति** नातिशयेन भवति । प्रकृतिमण्डलेऽपि प्रत्यक्षितपरतत्त्वानां प्रशमित दिकालुष्याणाम्, 'अमृतत्वञ्चानुपोष्य' इति सूत्रितम्, 'अमृत इह भवती' ति वद्रूपममृतत्वमस्तीति विमृश्य **अति** इति प्रयुक्तम् । यद्वा अमृतत्वाख्यं परं पदम् **अन्नं** गुण्यं षड्गुणाढ्यञ्च द्विधान्नं परिकीर्तितम् । त्रैगुण्यमन्नं बद्धानामितरेषामथेतरत्' इत्य द्रूपेण ज्ञानशक्त्यादिगुणषट्कपूर्णेनान्नेन **अतिरोहति** अधिकं प्रतिक्षणमेधते इत्यर्थः

तस्य स्थानस्य सदा पश्यत्सूरिसंकुलत्वमाह **तदि**ति । **तदि**ति अप्राकृतार्थकम् । तेन वि गोक्त (२.८.) ध्रुवाधारभूत सत्यलोकार्वाचीन-प्राकृतविष्णुपरमपदरूपसंनिकृष्टलोकव्यावृत्ति ति मुक्तव्यावृत्त्या **सूरय** इति नित्यसूरीणामेव ग्रहणम् । परमपदं वर्णयति **दिवी**ति । दि ारिक्षे **आततं** व्याप्तं **चक्षुः** जगच्चक्षुः सूर्य इव ; ज्योतिर्मयमिति यावत् । एवं **मुक्तसे**व्य तदित्याह **तदि**ति । **तत्** तत्र बहुश्रुतिप्रसिद्धे, **विप्रासः**, 'विष्णुं क्रान्तं वासुदेवं विज विप्रत्वं गच्छते तत्त्वदर्शी' इति तत्त्वज्ञानसंपत्त्यधीनविप्रभावाः, 'श्रोत्रियस्य चाक य' इत्युक्ताः क्रमेण प्राप्तपरमपदाः **विपन्यवः** विविधपनायनपरायणाः **जागृव** न्ताविर्भूतबोधाः **समिन्धते** परिपूर्णब्रह्मानुभवपरीवाहभूतकैङ्कर्यार्थोद्दतानन्तादिव्यदेहा दे यदेव विष्णोः **परमं** प्रकृष्टान्तररहितं पदम्, अन्यानि तु विष्णुपदानि अर्वाचीनानीति

एवमिह पूर्वोपदिष्टोपासनप्राप्यं परमपुरुषस्य विष्णोर्नारायणस्य नित्यं स्थानं **अ** दिपूर्वोक्तश्रुत्यविरोधेन श्रावितम् ॥

इति श्रीवात्स्यसच्चक्रवर्ति वीरराघवाचार्यकृतिषु
उपनिषद्भाष्यपरिष्कारे सौबालषष्ठखण्डपरिष्कारः ॥

|| अथ सप्तमः खण्डः ||

**अन्तश्शरीरे निहितो गुहायामज एको नित्यः ;**

**थिवी शरीरम् , यः पृथिवीमन्तरे सञ्चरन् , यं पृथिवी न वेद ; यस्यापः**
**ोऽपोऽन्तरे सञ्चरन् यमापो न विदुः ; यस्य तेजः शरीरं यस्तेजोऽन्तरे**
**यं तेजो न वेद; यस्य वायुः शरीरं यो वायुमन्तरे सञ्चरन् यं वायुर्न वेद;**

---

(७)

ु प्रथमखण्डे, यस्य तमसः प्रलये देवे एकीभावः, तस्मात् भूताद्युत्पत्तिवर्णनात् तमस-
ानत्वं प्रतीयते । देवस्य तु, 'मृत्युमसृजत्' इत्युक्तरीत्या निमित्तत्वम् । तृतीयखण्डे
इत्यत्रापि तस्योपादानत्वं न स्पष्टम् । पञ्चमखण्डे च चक्षुर्द्रष्टव्यादिसर्ववस्तुगततया
त्वेनैव स आत्मा निर्दिष्टः । षष्ठे तु देवे सर्वकार्याभेदवर्णनात् कार्याभिन्नं कारणं प्रतीतं
ानमिति च ज्ञेयं भवति । न च चक्षुरादिषु वर्तमानत्वेन प्रागुक्तस्य तदभेदः संभवति,
ाधिकरणनिर्देशो मुख्यः स्यादित्याशङ्कायाम्—सर्वस्यापि वस्तुनः तं प्रति **शरीरत्वात्** ,
ानाञ्च शब्दानां शरीरिपर्यन्तार्थकत्वस्य लोकवेदसंप्रतिपन्नत्वात् सामानाधिकरण्यं मुख्य-
: तत्तद्वस्तुविशिष्टं ब्रह्म कार्यं कारणञ्च भवतीति हेतोः षष्ठदर्शितमुपादानत्वमप्युपपन्न-
ोधयिषया सर्वस्य तच्छरीरत्वं प्रपञ्चयति सप्तमे **अन्तश्शरीर** इति । जायमानानां
सर्वासां शरीरिस्यान्तः हृदयगुहायामस्य वर्तमानत्वात् अस्य शरीरस्य तत्रत्यस्य
ाश्च तं प्रति शरीरत्वात् , 'इमाः प्रजायन्ते दिव्यो देव एक' इति सामानाधिकरण्य-
। अस्मिन् शरीर इव, येषामिदं संघातरूपम् , तेषु पृथिव्यादिभूत—चक्षुरादिकरणेषु
ापि तच्छरीरत्वमविशिष्टमिति सर्वमपि सामानाधिकरण्यं मुख्यमिति भावः ।

केवलं शरीरतया सर्वप्रतिपन्नवस्तुमात्रे तस्य आत्मतया स्थितिः, कार्यकारणात्मसु
र्थेष्वपि तस्य तथाभाव इति ज्ञापयितुं सृष्टिक्रमव्युत्क्रमेण पृथिव्यादि – प्रधानान्तसर्वविव-
ान्येन केषाञ्चित् तच्छरीरत्वमाह **यस्य पृथिवी**त्यादिना। बृहदारण्यके काण्वमाध्यन्दिन-
भेदेऽपि अन्तर्यामिब्राह्मणे किञ्चिद्भेदेनायमर्थ एव प्रपञ्चितः । एषां पर्यायाणां शरीरात्म-
ादनार्थप्रवृत्तत्वात् **शरीरमिति** तस्य प्रथमतो निर्देशः । तत्र शरीरभावे परमात्मनः
भावदेशवर्तित्वरूप) बहिर्वर्तित्वांशस्याप्रयोजकतया अन्तर्वर्तित्वमात्रमाह **यः पृथिवी-**
**सञ्चरन्** इति । **पृथिवीमन्तरे** अन्तःपृथिव्याम् । सप्तम्यर्थे द्वितीया ; 'य एतस्मिन्
न्तरे संचरती' ति पूर्वानुसारात् । **सञ्चरन्नि**ति तिष्ठन्नित्यर्थकम् ; विभुनः परमात्म-
चलनायोगात् । अन्तर्वर्तित्वञ्च यद्देशावच्छेदेन पृथिव्यादिकमस्ति, तत्र देशे सर्वत्र तेन
नत्वम् , आत्मनोऽन्तरेऽपि स्थितेर्वक्तव्यत्वादित्यन्यत्र विस्तरः । **यं पृथिवी न वेदे**ति ।
ायस्यानुपलम्भमात्रेण न निषेध इति व्यक्तये एतदुक्तिः । ननु देवतारूपपृथिव्याः
ोग्यता स्यात् । अचेतनायास्तु पृथिव्याः तदभावात् किमर्थं **न वेदे**त्युक्तिरिति चेत्—

स्याकाशः शरीरं य आकाशमन्तरे सञ्चरन् यमाकाशो न वेद ; यस्य
रीरं यो मनोऽन्तरे सञ्चरन् यं मनो न वेद ; यस्य बुद्धिः शरीरं
द्धिमन्तरे सञ्चरन् यं बुद्धिर्न वेद ; यस्याहङ्कारः शरीरं योऽहङ्कारम
चरन् यमहङ्कारो न वेद ; यस्य चित्तं शरीरं यश्चित्तमन्तरे सञ्चर
त्तं न वेद ; यस्याव्यक्तं शरीरं योऽव्यक्तमन्तरे सञ्चरन् यमव्यक्तं
द ; यस्याक्षरं शरीरं योऽक्षरमन्तरे सञ्चरन् यमक्षरं न वेद ; य
त्युः शरीरं यो मृत्युमन्तरे सञ्चरन् यं मृत्युर्न वेद ; एष सर्वभूतान्त

---

मात्मवेदनविषये अचेतनतुल्यं चेतनस्याप्यसामर्थ्यमिति ज्ञापनार्थमेतदुक्तिरिति । भूत
नात्रोपलक्षणम् । मनआदिचतुष्टयमप्येकान्तःकरणप्रभेदः । पूर्ववत् महदहङ्कारग्रहणं
कथनमिन्द्रियान्तराणामप्युपलक्षणम् । अत्र आत्मपर्यायो नोक्तः, स बृहदारण्यके,
मनि ' इति, ' यो विज्ञाने ' इति चोक्त इहापि ग्राह्यः । न चाक्षरपदेनेह आत्मनि
ति वाच्यम्—अचेतनमध्यपाठेन तदयोगात् । ' अक्षरात् परतः परः ' इति अक्षरश
तनेऽपि प्रयोगात् । पूर्वम्, ' अक्षरं तमसि लीयत ' इत्युक्त्या अक्षरस्य तमसि लयार्हचे
यत्वावसायाच्च । न हि चेतनोऽचेतने लीयते । न च लीयमानस्य तस्य क्षर
रत्वं कथमिति वाच्यम्—अचेतनसंबन्धिपरिणामान्तरात् पूर्वं न क्षरतीत्येतावता तद्वाच्योयु
तु वा — तमोदशायां तदत्यन्तमस्फुटमभूत् । द्रव्यमिदं चेतनाचेतनात्मकमिति विवेक
ऽस्तीति लक्षणया अक्षरपदेन तदुक्तिरिति । तदुक्तं प्राक् **भाष्य** एव, " चिद्गर्भवा
रशब्द उपचरितः " इति । एवंसति चेतनविशिष्टाचेतनस्य परमात्मशरीरत्वोक्तौ विशेषणं
उक्तं भवतीति कथ्यतामिति चेत्—काममस्तु । एवम् ' अन्तश्शरीरे ' इति प्रथमवाक्ये
मनां शरीरत्वमभिप्रेतं स्यात् ; गुहायामिति जीवग्रहणसंभवात् । एवम्, 'सर्वभूतान्तरात्मा '
माणपदेनापि तत्सिद्धिः । **मृत्युरिति** स्थानप्रमाणात् तम उच्यते । 'तमः परे देव एकीभ
प्रागुक्तमेव, ' मृत्युर्वै परे देव एकीभवतीति प्रसिद्धवन्निर्देक्ष्यते । ततोऽपि मृत्युस्त
मृत्युत्वं स्वयमविलयस्य सतः सर्वाचेतनपरिणामलयकरत्वात् ।

नन्वेतावन्ति चेत् अस्य शरीराणि, तर्हि तस्येदृशशरीरप्रापकाः पाप्मानः परिसंख्
क्याः स्युः, तत्राह **अपहतपाप्मेति** । **दिव्य** इत्यनेन अप्राकृतदिव्यमङ्गलविग्रहस
एतच्छरीरभावोऽपि केवलतदिच्छाकृत इति भावः । इमं प्रपञ्चपरमात्मनोः शरीरात्म
न्तप्रतितन्त्रसिद्धान्तमबुध्यमानाः प्रायो भेदश्रुतित्यागेन अभेदम्, अद्वैतश्रुतीरुपेक्ष्य भेद
माणाः अपक्वबुद्धीन् भ्रामयन्ति । तस्मात् रहस्यमिदं न प्रस्मर्तव्यमिति अत्र श्रद्धाजन

तपाप्मा दिव्यो देव एको नारायणः एतां विद्यामपान्तरतमाय अपान्तरतमो ब्रह्मणे ददौ । ब्रह्मा घोराङ्गिरसे ददौ । घोराङ्गिरा ददौ । रैक्वो रामाय ददौ । रामः सर्वेभ्यो ददौ । इत्येवं निर्वाणानु- । इति वेदानुशासनम् । इति वेदानुशासनम् ॥

इति सुबालोपनिषदि सप्तमः खण्डः

(८)

॥ अथाष्टमः खण्डः ॥

**अन्तश्शरीरे निहितो गुहायां शुद्धः सोऽयमात्मा ।**

---

पक गुरुपरम्परामाह **एतां विद्या**मिति । ददावित्यत्र कर्त्रन्तराकथनात् चतुर्मुखस्यापि रं ग्रहीतृतया वक्ष्यमाणत्वौचित्यात् नारायणः कर्तेत्यवसीयते । तस्य पूर्वप्रकृतत्वाच्च । **स एष** इत्यारम्भं **ददौ** इत्यन्तमेकं वाक्यम्; भेदे प्रमाणाभावात् । श्रीभाष्यादिषु । इत्यन्तमात्रनिर्देशः तावन्मात्रस्य तत्रोपयुक्तत्वात् । न तेन तत्र वाक्यसमाप्तिप्रसक्तिः । रतमायेति । 'अपान्तरतमो नाम वेदाचार्यः स उच्यते' इति तस्यैव सर्ववेदवेदित्वं भणितम् । तत्र हि, 'सांख्यस्य वक्ता कपिलः' इत्यादितत्तन्मतप्रवर्तकमहर्षीनपेक्ष्यास्य ामितोऽस्ति । 'पाञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वयम्' इति ततोऽतिशयितो एव, य इहापान्तरतमस्याचार्यो निर्दिष्टः इति । अपान्तरतमा इति भारतपाठः । एवमत्यन्तरहस्यार्थभूतस्य शरीरात्मभावस्योपदेशेन पूर्वखण्डोक्तं सामानाधिकरण्यं निरूढम् ।

**इति सौबालसप्तमखण्डपरिष्कारः ।**

(८)

नु सत्यस्मिन् शरीरात्मभावे सर्वमेतदुपपद्यते । स एव न स्वीकर्तुं शक्यते ; तथासति यप्रत्यनीकत्वेनाभिमतस्य सकलहेयसंश्रयत्वप्रसङ्गात् । न च **अपहतपाप्मा दिव्य** दुःखहेतुभूतकर्मविरहवचनान्नायं प्रसङ्ग इति वाच्यम्—कर्मणां हि दुःखहेतुत्वम् आत्मनः बन्धापादनेन । तत्र यदि कर्मबलाद्वा अन्यथा वा शरीरसंबन्धविशेषः प्राप्तः, तर्हि भ्रमदर्जनीयम् । अन्तःशरीरे स्वेच्छया नियमनार्थं प्रविष्टस्यापि अपुरुषार्थयोगोऽवर्जनीयः । तद्विमज्जनं हि स्वेच्छाकारितमप्यपुरुषार्थ एव । ततश्चायं प्रश्नः समाधातुमशक्य यते—यः खलु

'एको यस्यास्ति देहः स भवति विविधानन्तदुःखैकभोक्ता
विश्वं देहः प्रभोश्चेत् स कथमतिपतेत् विश्वदुःखानुभूतिम्?'

एवमशङ्कायाम्—'शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः' इति न्यायेन परं तत्त्वमिदं लक्षणं शास्त्रप्रतिपन्नम्, न तत्र सामान्यतोदृष्टन्यायावतार इति तस्य सर्वदोषदूरत्वं वक्तुमष्टमः खण्ड आरभ्यते । **निहितो गुहायां शुद्ध** इति । स्वयमयं निहितः

सर्वस्य मेदोमांसक्लेदावकीर्णे शरीरमध्येऽत्यन्तोपहते चित्रभित्तिप्र
गन्धर्वनगरोपमे कदलीगर्भवन्निस्सारे जलबुद्बुदवच्चञ्चले निःसृत
नमचिन्त्यरूपं दिव्यं देवमसङ्गं शुद्धं तेजस्कायमरूपं सर्वेश्वरमचिन्त्य
न्निहितं गुहायाममृतं विभ्राजमानमानन्दं तं पश्यन्ति विद्वांसः
लये न पश्यन्ति ॥

इति सुबालोपनिषदि अष्टमः खण्डः



---

शरीरे, न मे दुखलेशप्रसक्तिरिति । तदयं शुद्ध एवेत्यर्थः । शरीरस्य दुःखहेतुत्वौ
विशेषणान्यभिधाय तथात्वेऽपि हेयप्रतिभटत्वमुपपादयति **सर्वस्येत्यादिना** । **अत्यन**
तत्तदवयवोपनतैः रोगादिभिः मलमूत्रादिसंगेन चोपप्लुते । **निःसृतम्** निश्शेषेण प्र
अन्तर्बहिर्व्याप्तम् । **अचिन्त्यरूपम्** अनुमानदूराद्भुतमङ्गलविग्रहम् । **असङ्गम्**, 'न मे
स्पृहे' त्युक्तप्रकारम् । **तेजस्कायं** ज्ञानस्वरूपम् । **अरूपं** रूपरसादिहेयरहितः
**अचिन्त्यम्** स्वकीयदिव्यविग्रहवत् स्वयमप्यनुमानदूरम् । **अशरीरम्** स्वकर्माधीनशरीर
विलक्षणम् । **गुहायां** हृदयाकाशे निहितम् **अमृतम्** 'एष ते आत्माऽन्तर्याम्यमृत
अन्तः-स्थितादप्यमृतत्वेनोद्घुष्टम् अत्यन्तभोग्यभूतम् **विभ्राजमानम्** 'अनश्नन्नन्योऽभिचा
इत्युक्तरीत्या विशेषतो द्योतमानम् । न केवलमुक्तिमात्रम्; दर्शनस्यापि संप्रतिपन्नत्व
संदेग्धव्यमित्याह **आनन्दं तं पश्यन्तीति** । **गन्धर्वनगरं** मेघमण्डले उत्प्रेक्षिताः न
काराः । तद्वत् क्षणविशरणशीलस्यापि शरीरस्य चित्रभित्तिप्रतीकाशत्वमिति कश्चिदतिशयो
यथा भित्तेरभावे चित्रं न शक्यं लेखितुम्, तथा शरीराभावे हार्दो न शक्य उपासितुम्
स्तत्र गुहानिहितमुपासितं परिच्छिन्नं लये जाते न पश्यन्तीत्याह **तेन लये न पश्यन्**
इदञ्च लयविषयकजिज्ञासोत्पादनाय आचार्येण प्रस्तुतम् । प्रक्ष्यति चेममेव विषयं समनः
शिष्यो रैक्वः । वस्तुतः, लयपर्यन्तमेवमुपासनस्याऽऽवृत्तिरपेक्षितेति ज्ञापनायैतदुक्तिरिति भा

इति सौबालाष्टमखण्डपरिष्कारः ।



(९)

॥ अथ नवमः खण्डः ॥

अथ हैनं रैक्वः पप्रच्छ — भगवन् ! कस्मिन् सर्वेऽस्तं गच्छन्तीति
स होवाच — चक्षुरेवाप्येति । यश्चक्षुरेवास्तमेति, द्रष्टव्यमेवाप्येति
ष्टव्यमेवास्तमेति, आदित्यमेवाप्येति । य आदित्यमेवास्तमेति, विराज
प्येति । यो विराज (?) मेवास्तमेति, प्राणमेवाप्येति । यः प्राणमेवास्त
, विज्ञानमेवाप्येति । यो विज्ञानमेवास्तमेति, आनन्दमेवाप्येति । य
न्दमेवास्तमेति, तुरीयमेवाप्येति । यस्तुरीयमेवास्तमेति, तदमृत
पमशोकमनन्तं निर्बीजमेवाप्येतीति होवाच ॥

---

(९)

एवं सर्वान्तर्वर्तिनोऽपि सर्वदोषदूरत्वमुपवर्ण्य चक्षुराद्यात्मतया तदुपासनं स्थापितम्
ासीनस्य फलबुभुत्सया लयप्रस्तावानुरोधेन लयमधिकृत्यैव कृतं रैक्वप्रश्नमुपक्षिपति अथ
ाति । सर्वे चक्षुःश्रोत्रादिस्थानभेदेनोपासनप्रवृत्ताः एवं । यो यदुपासनप्रवृत्तः, तस्य तत्रै
। अतः चक्षुरादिपर्यायेषु एकैकत्रापि, 'यश्चक्षुषि यो द्रष्टव्ये' इत्यादिना करण – तद्विषय-
ा – तन्नाडी – तन्निर्वाहकप्राण – तज्जन्यज्ञान – तज्जनितानन्द – तत्कन्दस्थानभूतहृदयाकाश
न्विष्टकान्तर्वर्त्यात्मोपासनविधानात् तत्तद्वस्त्वन्तर्यामिण्येव स स उपासको लीयते । ते
ादस्थ एव पुरुषे लयः संपद्यते इत्याशयेनाह तस्मै स होवाच चक्षुरेवेत्यादिना । अः
ादिपदानि पूर्वखण्डपर्यन्तोपपादितरीत्या, 'चक्षुश्च द्रष्टव्यञ्च नारायणः' इत्यत्रेव परमात्म
ानि । अतः उपासिते चक्षुश्शरीरके परमात्मनि लीयते, तल्लय एव द्रष्टव्यशरीरकपरमात्म
। एवं तत्तदवच्छिन्नात्मनि उपासिते सर्वत्र लयो द्रष्टव्यः । विराजामिति आकारान्त
युक्तः ; पूर्वं तथा नाडीनामनिर्देशात् । अन्यथा तत्पर्यायतया विराट्पदमिदमिति मन्तव्यम्
ामेवाप्येतीति । पूर्वं हृद्याकाशे इत्युक्तमेव स्थानप्रमाणादत्र तुरीयपदेन गृह्यते
ाशब्दश्च 'जाग्रत्स्वप्नात्यलसतुरीयप्रायध्यातृकमवदुपास्यः' इत्यादौ मूर्छिते प्रयुक्तः । जागर
षुप्तिस्थानेषु त्रिषु सत्सु तुरीयं मूर्छास्थानम् । तदा हृदयाद् वियुज्य हृद्याकाश एव जीवे
इति तदाकाशं तुरीयञ्चैकम् । इह च चक्षुरादिपदवत् तुरीयपदमपि परमात्मपर्यन्तम्
ान्तरात्मन एवामृतत्वादिनोपासनस्य प्रागुक्तत्वात् तुरीये लीनस्य तत्र लय उच्यते तद्
ात्यादिना । अत्र निर्बीजपदप्रयोगः लयकाष्ठाभूत – परवासुदेवात्मक – शुद्धपरमात्मस्वरूपस्
ामित्यादिपदविवक्षितत्वज्ञापनार्थः ।

श्रोत्रमेवाप्येति । यः श्रोत्रमेवास्तमेति, श्रोतव्यमेवाप्येति
श्रोतव्यमेवास्तमेति, दिशमेवाप्येति । यो दिशमेवास्तमेति, सुद
मेवाप्येति । यः सुदर्शनामेवास्तमेति, अपानमेवाप्येति । योऽपानमे
मेति, विज्ञानमेवाप्येति । यो विज्ञानमेवास्तमेति, आनन्दमेवाप्येति
आनन्दमेवास्तमेति, तुरीयमेवाप्येति । यस्तुरीयमेवास्तमेति, त
मशोकमभयमनन्तं निर्बीजमेवाप्येतीति होवाच ॥

नासामेवाप्येति । यो नासामेवास्तमेति, घ्रातव्यमेवाप्येति
घ्रातव्यमेवास्तमेति, पृथिवीमेवाप्येति । यः पृथिवीमेवास्तमेति, जि
मेवाप्येति । यो जितामेवास्तमेति, व्यानमेवाप्येति । यो व्यानमे
मेति, विज्ञानमेवाप्येति । यो विज्ञानमेवास्तमेति, आनन्दमेवाप्येति
आनन्दमेवास्तमेति, तुरीयमेवाप्येति । यस्तुरीयमेवास्तमेति, तः
मशोकमभयमनन्तं निर्बीजमेवाप्येतीति होवाच ॥

जिह्वामेवाप्येति । यो जिह्वामेवास्तमेति, रसयितव्यमेवाप्येति
रसयितव्यमेवास्तमेति, वरुणमेवाप्येति । यो वरुणमेवास्तमेति, सौम्या
प्येति । यः सौम्यामेवास्तमेति, उदानमेवाप्येति । य उदानमेवास्त
विज्ञानमेवाप्येति । यो विज्ञानमेवास्तमेति, आनन्दमेवाप्येति । य आ

---

अयं प्रश्नाशयः — यथोपासनं प्राप्तिः तत्क्रतुन्यायसिद्धा । अतो यदुपास्यते तत्र
इति वक्तव्यम् । चक्षुरादिनाशानन्तरञ्च तं न पश्यन्तीत्युक्त्या उपासिते लयः उपासक
सिद्ध्यतीति । समाधेराशयस्तु — चक्षुर्द्रष्टव्यादित्यादीनां बहूनामुपास्यतया बहुषु लय
कथं भवतीत्यपि विमर्शव्यम् । चक्षुरादीनामनेकत्वेऽपि चक्षुराद्यन्तर्यामिण उपास्यस्यै
उपास्यपरिच्छेदार्थमेषामुपयोगेऽपि तस्यैकस्यैव मुख्योपास्यत्वात् तत्रैव लयो वाच्यः । अ
मुपासकः चक्षुरेवाप्येति, न त्वन्यम् । न च द्रष्टव्यादिषु लयः कुतो नेति शङ्काप्रसक्तिः ;
द्रष्टव्यादीनामेकत्वादेतल्लयस्यैव तल्लयरूपत्वात् । एवमुपलभ्यमानकार्यविशिष्टोपासनविधानात्
त्कार्ये लय आवश्यक इति न मन्तव्यम् । कार्यात्मनस्तस्य, निर्बीजस्य च तस्यैकत्वात् नि
प्राप्त्यर्थतयैव एवमुपासनस्य विवक्षितत्वादिति ध्येयम् ।

एवं श्रोत्रमेवेत्यादिपर्यायेष्वपि द्रष्टव्यम् । प्रतिपर्यायं स्त्रीलिङ्गशब्दाः नाडीविशेष
तदनन्तरमप्ययस्थानत्वेन कथिताश्च प्राणविशेषा इति बोध्यम् ।

मेति, तुरीयमेवाप्येति । यस्तुरीयमेवास्तमेति, तदमृतमभयम-
न्तं निर्बीजमेवाप्येतीति होवाच ॥

वचमेवाप्येति । यस्त्वचमेवास्तमेति, स्पर्शयितव्यमेवाप्येति । यः
व्यमेवास्तमेति, वायुमेवाप्येति । यो वायुमेवास्तमेति, मोघामेवा-
यो मोघामेवास्तमेति, समानमेवाप्येति । यः समानमेवास्तमेति,
मेवाप्येति । यो विज्ञानमेवास्तमेति, आनन्दमेवाप्येति । य आनन्द-
मेति, तुरीयमेवाप्येति । यस्तुरीयमेवास्तमेति, तदमृतमभयमशोक-
निर्बीजमेवाप्येतीति होवाच ॥

वाचमेवाप्येति । यो वाचमेवास्तमेति, वक्तव्यमेवाप्येति । यो वक्तव्य-
मेति, अग्निमेवाप्येति । योऽग्निमेवास्तमेति, कुमारामेवाप्येति । यः
मेवास्तमेति, वैरम्भमेवाप्येति । यो वैरम्भमेवास्तमेति, विज्ञानमेवा-
यो विज्ञानमेवास्तमेति, आनन्दमेवाप्येति । य आनन्दमेवा-
, तुरीयमेवाप्येति । यस्तुरीयमेवास्तमेति, तदमृतमभयमशोकम-
र्बीजमेवाप्येतीति होवाच ॥

हस्तमेवाप्येति । यो हस्तमेवास्तमेति, आदातव्यमेवाप्येति । य
व्यमेवास्तमेति, इन्द्रमेवाप्येति । य इन्द्रमेवास्तमेति, अमृता-
ति । योऽमृतामेवास्तमेति, मुख्यमेवाप्येति । यो मुख्यमेवास्त-
विज्ञानमेवाप्येति । यो विज्ञानमेवास्तमेति । आनन्दमेवाप्येति । य
मेवास्तमेति, तुरीयमेवाप्येति । यस्तुरीयमेवास्तमेति, तदमृतमभय-
मनन्तं निर्बीजमेवाप्येतीति होवाच ॥

पादमेवाप्येति । यः पादमेवास्तमेति, गन्तव्यमेवाप्येति । यो
मेवास्तमेति, विष्णुमेवाप्येति । यो विष्णुमेवास्तमेति, सत्यामेवा-
यः सत्यामेवास्तमेति, अन्तर्याममेवाप्येति । योऽन्तर्याममेवा-
. विज्ञानमेवाप्येति । यो विज्ञानमेवास्तमेति, आनन्दमेवाप्येति । य

आनन्दमेवास्तमेति, तुरीयमेवाप्येति । यस्तुरीयमेवास्तमेति, तदमृतम
शोकमनन्तं निर्बीजमेवाप्येतीति होवाच ॥

पायुमेवाप्येति । यः पायुमेवास्तमेति, विसर्जयितव्यमेवाप्येति
सर्जयितव्यमेवास्तमेति, मृत्युमेवाप्येति । यो मृत्युमेवास्तमेति,
मेवाप्येति । यो मध्यमामेवास्तमेति, प्रभञ्जनमेवाप्येति । यः प्रभञ्
वास्तमेति, विज्ञानमेवाप्येति । यो विज्ञानमेवास्तमेति, आनन्दमेवाप्ये
आनन्दमेवास्तमेति, तुरीयमेवाप्येति । यस्तुरीयमेवास्तमेति, तद
भयमशोकमनन्तं निर्बीजमेवाप्येतीति होवाच ॥

उपस्थमेवाप्येति । य उपस्थमेवास्तमेति, आनन्दयितव्यमेवाप्ये
आनन्दयितव्यमेवास्तमेति, प्रजापतिमेवाप्येति । यः प्रजापतिमेवा
ते, नासीरामेवाप्येति । यो नासीरामेवास्तमेति, कुमारमेवाप्येति ।
ारमेवास्तमेति, विज्ञानमेवाप्येति । यो विज्ञानमेवास्तमेति, आन
ाप्येति । य आनन्दमेवास्तमेति, तुरीयमेवाप्येति । यस्तुरीयमेवा
ते, तदमृतमभयमशोकमनन्तं निर्बीजमेवाप्येतीति होवाच ॥

मन एवाप्येति । यो मन एवास्तमेति, मन्तव्यमेवाप्येति ।
तव्यमेवास्तमेति, चन्द्रमेवाप्येति । यश्चन्द्रमेवास्तमेति, शिशुमेवाप्येति
शिशुमेवास्तमेति, श्येनमेवाप्येति । यः श्येनमेवास्तमेति, विज्ञा
ाप्येति । यो विज्ञानमेवास्तमेति, आनन्दमेवाप्येति । य आनन
ास्तमेति, तुरीयमेवाप्येति । यस्तुरीयमेवास्तमेति, तदमृतमभयमशो
न्तं निर्बीजमेवाप्येतीति होवाच ॥

बुद्धिमेवाप्येति । यो बुद्धिमेवास्तमेति, बोद्धव्यमेवाप्येति ।
व्यमेवास्तमेति, ब्रह्माणमेवाप्येति । यो ब्रह्माणमेवास्तमेति, सूर्यामेव
ते । यः सूर्यामेवास्तमेति, कृष्णमेवाप्येति । यः कृष्णमेवास्तमेति
ानमेवाप्येति । यो विज्ञानमेवास्तमेति, आनन्दमेवाप्येति । य आनन्द
स्तमेति, तुरीयमेवाप्येति । यस्तुरीयमेवास्तमेति, तदमृतमभय
कमनन्तं निर्बीजमेवाप्येतीति होवाच ॥

अहङ्कारमेवाप्येति । योऽहङ्कारमेवास्तमेति, अहङ्कर्तव्यमेवाप्येति ।
र्तव्यमेवास्तमेति, रुद्रमेवाप्येति । यो रुद्रमेवास्तमेति, असुरमेवा-
योऽसुरमेवास्तमेति, श्वेतमेवाप्येति । यः श्वेतमेवास्तमेति, विज्ञान-
ति । यो विज्ञानमेवास्तमेति, आनन्दमेवाप्येति । य आनन्द-
ेति, तुरीयमेवाप्येति । यस्तुरीयमेवास्तमेति, तदमृतमभयमशोक-
निर्बीजमेवाप्येतीति होवाच ॥

चित्तमेवाप्येति । यश्चित्तमेवास्तमेति, चेतयितव्यमेवाप्येति । यश्चेत-
मेवास्तमेति, क्षेत्रज्ञमेवाप्येति । यः क्षेत्रज्ञमेवास्तमेति, भास्वती-
ति । यो भास्वतीमेवास्तमेति; नागमेवाप्येति । यो नागमेवास्त-
वेज्ञानमेवाप्येति । यो विज्ञानमेवास्तमेति, आनन्दमेवाप्येति । य
मेवास्तमेति, तुरीयमेवाप्येति । यस्तुरीयमेवास्तमेति, तदमृतमभय-
नन्तं निर्बीजमेवाप्येति होवाच ॥

य एवं निर्बीजं वेद, निर्बीज एव स भवति । न जायते, न
न मुह्यते, न भिद्यते, न दह्यते, न छिद्यते, न कम्पते, न कुप्यते,
ोऽयमात्मेत्याचक्षते ।

नैवमात्मा प्रवचनशतेनापि लभ्यते, न बहुश्रुतेन, न बुद्धिज्ञाना-

---

र्बीजत्वेन परमात्मनिर्देशफलं दर्शयति **य एवं निर्बीजमिति** । **निर्बीज एवेति** ।
हेतुपुण्यपापरहित एव भवतीत्यर्थः । एवञ्च जन्माभावे तदनुषक्ता अन्येऽपि विकारा
भन्त इत्याह **न जायते न म्रियत** इति । **न भिद्यत** इत्यादि च, 'अच्छेद्योऽय-
मक्लेद्योऽशोष्य एव चे'ति गीतम् । निरवयवत्वादसौ न केनापि भूतेन प्रविश्य
। **सर्वदहन** इति । 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते' इति प्रपञ्चहेतुकर्मदाहि-
इत्यर्थः । पञ्चदशखण्डे वक्ष्यमाणं सर्वदहनत्वमपि द्रष्टव्यम् ।

मात्मलाभोपायत्वेन प्रमाणप्रतिपन्नानां वैराग्याभावे अनुपायत्वमाह **नैवमात्मा प्रवचन-**
त्यादिना । 'नायमात्मा प्रवचनेन', 'न वेदयज्ञाध्ययनैर्न दानैः' इत्यादिस्थल इव इहापि
**एवमात्मा** एवम्भूत आत्मा । **प्रवचन**पदेन अध्यापनविवक्षायाम् **बुद्धिज्ञानाश्रित**पदेन

श्रितेन, न मेधया, न वेदैर्न यज्ञैर्न तपोभिरुग्रैर्न सांख्यैर्न योगैर्नाश्रमैः।
रात्मानमुपलभन्ते । प्रवचनेन प्रशंसया व्युत्थानेन तमेतं ब्रा
शुश्रुवांसोऽनूचाना उपलभन्ते । शान्तो दान्त उपरतस्तितिक्षुः सम
भूत्वाऽऽत्मन्येवात्मानं पश्यति । सर्वस्यात्मा भवति, य एवं वेद ॥

इति नवमः खण्डः

(१०)

॥ अथ दशमः खण्डः ॥

अथ हैनं रैक्कः पप्रच्छ—भगवन्! कस्मिन् सर्वे सम्प्रति
भवन्तीति । रसातललोकेष्विति होवाच । कस्मिन् रसातललोका ओ
प्रोताश्चेति । भूर्लोकेष्विति होवाच । कस्मिन् भूर्लोका ओताश्च प्रोता
भुवर्लोकेष्विति होवाच । कस्मिन् भुवर्लोका ओताश्च प्रोताश्चेति । सुव
ष्विति होवाच । कस्मिन् सुवर्लोका ओताश्च प्रोताश्चेति । महर्लोके
होवाच । कस्मिन्महर्लोका ओताश्च प्रोताश्चेति । जनोलोकेष्विति हो
कस्मिन् जनोलोका ओताश्च प्रोताश्चेति । तपोलोकेष्विति होवाच ।

---

मननग्रहणम्; व्यत्यासो वा। बुद्धिः मनसो निरूपणसामर्थ्यम्। ज्ञान तदधीनो
तदाश्रितमालम्बनसंशीलनादीति वा। मेधा ध्यानम्, सांख्यं ज्ञानयोगः। योगैः कर्म
अन्यैः दानहोमादिभिः। आवश्यकः परिकर उच्यते व्युत्थानेनेति। 'पुत्रैषणायाश्च वि
याश्च लोकैषणायाश्च व्युत्थाये' ति प्रयोगात् व्युत्थानं यथार्हं वैराग्यम्; न पुनः योगात् व्यु
सत्यस्मिन् पूर्वोक्तप्रवचनादिकमपि सहकारीति ज्ञापयितुम् प्रवचनेनेति। इदमुक्तमर्दोपल
प्रशंसा उत्तमश्लोकगुणानुवादादिः। व्युत्थायेति निषिद्धवर्जनस्य सर्वस्योपलक्षणम्। तद
शान्त इत्यादिना। आत्मन्येव देह एव। न हि देहाभावे आत्मा द्रष्टुं शक्यते। अ
जीवत्मनि इति वा। एतद्दर्शनफलमाह सर्वस्यात्मा भवति य एवं वेदेति। वेद, पश्यतं

इति सौबालनवमखण्डपरिष्कारः।

(१०)

तमसः परस्तात् परमात्मप्राप्त्या निर्वाणमनन्तरखण्डे वक्ष्यन् तमःप्रकृतिकेऽत्र प्रपञ्चे
लोकस्य तादृशपरमात्मैकप्रतिष्ठितत्वमिह प्राह। तेन सर्वस्य हेयत्वम्, सर्वातिक्रमणेनान्यत्र
समर्थत्वादि तस्य च ज्ञापितं भवति। तथा षष्ठे सत् आरब्धम्, अमूलमनाधारम् इ
अमूलत्वं तेन खण्डेन सर्वोत्पत्तिकारणत्वबोधिना, अव्यवहितपूर्वखण्डेन च लयहेतुत्व
विवृतमासीत्। अनाधारत्वं तु विवरीतुमयं खण्डः। अनेन अनन्तरखण्डवक्ष्यमाणापुनः
नाडीव्यतिरिक्तनाडीप्राप्याश्चाखिला लोका अधिगमिता भवन्तीति।

ओताश्च प्रोताश्चेति । सत्यलोकेष्विति होवाच । कस्मिन् सत्य-
ाश्च प्रोताश्चेति । प्रजापतिलोकेष्विति होवाच । कस्मिन् प्रजा-
ओताश्च प्रोताश्चेति । ब्रह्मलोकेष्विति होवाच । कस्मिन् ब्रह्म-
ाश्च प्रोताश्चेति । सर्वलोका आत्मनि ब्रह्मणि मणय इवौताश्च
। स होवाच—एवमेतान् लोकान् आत्मनि प्रतिष्ठितान् वेद,
भवति । इत्येतन्निर्वाणानुशासनम् । इति वेदानुशासनम् ।
ुशासनम् ॥

इति सुबालोपनिषदि दशमः खण्डः ।

(११)

॥ अथैकादशः खण्डः ॥

। हैनं रैक्वः पप्रच्छ—भगवन्! योऽयं विज्ञानघन उत्क्रामन्, स
ान स्थानमुत्सृज्यापक्रामतीति। तस्मै स होवाच—हृदयस्य मध्ये
ापिण्डम्, यस्मिंस्तद्दहरं पुण्डरीकं कुमुदमिवानेकधा विकसितम् ।
समुद्रः । समुद्रस्य मध्ये कोशः । तस्मिन् नाड्यश्चतस्रो भवन्ति
ाऽपुनर्भवेति । तत्र रमा पुण्येन पुण्यं लोकं नयति । अरमा पापेन

---

ोकपदेन चतुर्मुखस्य तत्पुत्राणां प्रजापतीनाञ्च स्थानात् अन्यस्य तदधीनप्रजावास-
कांशस्य ग्रहणम् । मणय इवेति । सूत्रे इति शेषः । तथा च गीयते, 'मयि
सूत्रे मणिगणा इव' इति । ओताश्च प्रोताश्चेति पूर्णव्याप्तिकथनम् ।

इति सौबालदशमखण्डपरिष्कारः ।

(११)

ऽस्यानाधारस्य नारायणस्य चक्षुराद्यन्तर्यामितयोपासनानि उपवर्ण्य, पूर्वखण्ड-
—तन्मूलप्रकृतिमण्डलातीतस्य षष्ठखण्डसंदर्शितस्य स्थानस्य प्राप्तिरूपमुपासनफलं
दर्शयितुमारभते अथ हैनमिति । नाडीश्चतस्रो नाम्ना निर्दिशति रमेत्यादिना ।
ाप्यं स्थानमाह तत्र रमेत्यादिना । अत एवान्वर्थानि नामानि । मोक्षार्थोपासन-
· ापुनर्भवाख्यनाडीसाध्यगतिमेव विस्तरेण विवक्षुः तत्राप्युपनिषदन्तराधिगता-

पापम्। इच्छया यत् स्मरति, तदभिसम्पद्यते । अपुनर्भवाय कोशं भि कोशं भित्त्वा शीर्षकपालं भिनत्ति। शीर्षकपालं भित्त्वा पृथिवीं भि पृथिवीं भित्त्वाऽपो भिनत्ति । अपो भित्त्वा तेजो भिनत्ति। तेजो भित्त्व भिनत्ति। वायुं भित्त्वाऽऽकाशं भिनत्ति। आकाशं भित्त्वा मनो भिनत्ति । भित्त्वा भूतादिं भिनत्ति। भूतादिं भित्त्वा महान्तं भिनत्ति। महान्तं भि ऽव्यक्तं भिनत्ति। अव्यक्तं भित्त्वाऽक्षरं भिनत्ति। अक्षरं भित्त्वा मृत्युं भि

---

र्थादतिरिक्तमाह **अपुनर्भवायेत्यादिना** । कोशं हृदयकोशम् । **पृथिवीं भिनत्ति** ह्माण्डावरणभूताण्डकटाहतदावरणसमष्टिसलिलादिभेदनपरत्वं कार्याधिकरणश्रुतप्रकाशि क्तम् । अतः शीर्षस्थकपालभेदनात् परं आवरणपृथिवीभेदनात् पूर्वम् अर्चिरादिभि निपर्यन्तैः **स्वस्वस्थाने** अतिवाह्यमानत्वमप्यन्यश्रुतिशतश्रावितमनुसंधेयम् । **मनो** ति । आकाशभेदन–भूतादिरूपाहङ्कारभेदनमध्यपाठात् स्थानात् **मन**शब्दः शब्दतन्मा न्द्रियाणि **तन्मात्रेष्विति** प्रागुक्तरीत्या तत्र सृष्ट्यारम्भे प्रलये च मनआदीन्द्रियस नःपदेन तदुक्तिः । न च तन्मात्रस्य आवरणभावे किं प्रमाणमिति वाच्यम्—अनेनैव वरणत्वानुमानात् । अनावरणत्वेऽपि आकाशकारणत्व–अहङ्कारकार्यत्वसद्भावमात्रेणापि तद् र्णनोपपत्तेः । अस्तु वा सात्त्विकाहङ्कारो **मनः**पदविवक्षितः । आकाशकारणत्वस्य तत्राभा कारणत्वस्य भूतादावभावेऽपि च तत्तदंशभेदनक्रमविवक्षया एवमुपवर्णनसंभवात् । **मृत्यु** रसो विवक्षेत्यपि स्थानप्रमाणादवगतमेव । न चाविनाश्यस्याभेद्यस्य तमसः कथं भेद व्यम्। अप्रतिघातिद्रव्याणां भेदनस्यानपेक्षिततया तत्तदतिक्रमस्यैव तत्तद्भेदनपदविवक्षित

मृत्युभेदनानन्तरं किमिति जिज्ञासायां **परस्तान्नसदित्यादि** वक्ष्यन्, कथं मृत्युभे तरमन्यस्य भेदनं नास्तीति शङ्कानुन्मेषाय, यस्मात् मृत्योः कारणमन्यन्नास्ति, मृत्योः प गीभावात्, तस्मात् तदुपरि भेदनीयं न किञ्चिदिति ज्ञापयितुमाह **मृत्युर्वै** इति । वैश मः परे देव एकीभवती' ति प्रागुक्तं हीति प्रसिद्धिं दर्शयति । अत्र, **मृत्योः परे** मखण्डभाष्ये अनुवादः तत्रतत्र, **अपुनर्भवाय कोशमिति** चतुर्थ्यन्तानुवादवत् लेखकप्र । इति ध्येयम् । **परस्ता**दिति । मृत्योरुपरीत्यर्थः । अत्र **परस्ता**दित्यस्य एकीभावानन्तर ः । एकीभावस्य प्रकरणार्थत्वाभावात् । **एकीभवतीति** इति **इति**शब्देन तस्यहेतु र्पितत्वाच्च । मृत्युभेदानन्तरमित्यर्थस्तु अनन्वयात् नेष्यते । न हि मुमुक्षोरुत्का भूतप्रकृत्यतिक्रमरूपभेदनात् पश्चात् सदसदादिविलक्षणमेवेह प्रकृतिमण्डलेऽस्ति । कभागित्वेऽपि प्रपञ्चस्य सद्भावेन प्रलय इव तावन्मात्रस्थितिकथनायोगात् । ग्देशकालेष्वस्तातिः' इति देशेऽपि स्मरणात् देशपरोऽयमस्तातिः । तत्र मृत्युभेदनादुपरि र्थायोगात् मृत्युदेशादुपरीत्यर्थं आश्रयितव्यः । यद्यपीह, 'नसन्नासन्नसदसत्' इत्यनेन प्र

र्वै परे देव एकीभवतीति परस्तान्नसन्नासन्नसदसत् । इत्येतन्निर्वाणानु-
नम् । इति वेदानुशासनम् इति वेदानुशासनम् ॥

इति सुबालोपनिषदि एकादशः खण्डः

(१२)

॥ अथ द्वादशः खण्डः ॥

ओं नारायणाद्वा अन्नमागतं पक्वं ब्रह्मलोके महासंवर्तके पुनः पक्व-

---

प्रपञ्चरूपसृष्टिप्रलयगोचर — कार्यकारणभावापन्नलीलाविभूतिविलक्षणो भोगविभूतिरूपो देशो
तु युक्तः—अथापि पूर्वम्, 'तस्मात् तमः संजायते' इति **नसदि**त्याद्युक्तस्य तमआविर्भावा
त्वकथनात् नसदादिपदेन परमात्मविवक्षा अवर्जनीयेति ध्येयम् । नित्यविभूतिविशिष्टपरमात्म
मस्तु इति चेत्—काममस्तु । **परस्ता**दिति वाक्ये द्वितीयखण्ड इव अस्तीत्यध्याहारं विहाय
ीति वा प्राप्यत इति वाऽध्याहारे तु **परस्ता**दित्यस्य मृत्युभेदनानन्तरमित्यर्थः स्यात् ।

**इति सौबालैकादशखण्डपरिष्कारः**

(१२)

एवं जगज्जन्मस्थितिध्वंसहेतुर्नारायणाख्यं सर्वान्तरं परं तत्त्वम्, तदुपासनम्, तत्फल
पर्यन्तं स्थानमुत्सृज्यापक्रम्य तदुपरितनदेशविशेषप्राप्तिरूपमुक्तं वर्णितमिति, वक्तव्यं सर्वमुक्त
। उक्तांशान्तर्भूतमेव किञ्चिद्विशदीक्रियते, यथा गीतासु द्वादशाध्यायपर्यन्तोक्तप्रपञ्चनमे
ध्यायैः तथा, **ओं नारायणाद्वा** इत्यादिना [ प्रतिखण्डमश्रूयमाणस्य प्रणवस्यात्र परं श्रवणा
र्थस्यैव पुनर्विशदीकरणार्थमारम्भ इति व्यज्यते । अथवा **ओमि**ति उक्तोपासनमन्त्रनिर्देशः
ते हि **महत् पद**मिति । अथवा **ओमि**ति चतुर्दशखण्ड इव स्थितं न श्रुत्यानुपूर्वीनिविष्टम् ।
खण्डे अयाचितोपनतेन देहधारणं कार्यमित्युपदिश्यते । **व्युत्थानेन तमेतमुपलभ**
प्रागुक्तम् । पुत्रवित्तादिकं परित्यक्तवतो देहधारणस्याप्यशक्यत्वे स्थिते कथं परमात्मशुश्रूष
तराञ्च साक्षात्कारपर्यन्ततदुपलम्भप्रसक्तिरित्यत्र अयाचितोपनतेन वर्तमान उपलभेतेत्युच्
। 'यः सर्वज्ञः सर्ववित्—तस्मादेतद् ब्रह्म नामरूपमन्नञ्च जायते', 'तस्माद्वा एतस्मा
: — ओषधीभ्योऽन्नम्' इत्युक्तरीत्या नारायणसृष्टमेव **अन्नं** प्राकृतं वस्तु तन्ना
लोद्भवेन चतुर्मुखेन व्यष्टिपृथिव्यादिसृष्टिकाले **पक्वं** जीवजातभोगार्हं कृतम् । अथ च
पुत्रे रुद्रे पक्वम् । रुद्र एव **महासंवर्तकः** । संपूर्वकस्य वृतुधातोः प्रलयोऽर्थः । **समित्ये**
। प्रलयकारिषु यमादिषु रुद्रो महानिति स महासंवर्तकः । तस्य चतुर्मुखवरप्रसादलब्ध
ैश्वर्यतया पञ्चभूतात्मकतन्मूर्त्यन्तर्गतत्वादन्नस्य, तस्मिन् अस्य पक्वता । अथ भूतपञ्चकच
गगजवानरूपरुद्रमूर्तिनिविष्टत्वादादित्यस्य, 'आदित्याज्जायते वृष्टिः वृष्टेरन्नं ततः प्रज

मादित्ये पुनः पक्वं क्रव्यादि पुनः पक्वं जालकिलक्लिन्नं पर्युषितं पृ
मयाचितमसंक्लृप्तमश्नीयात्; न कञ्चन याचेत ॥

इति सुबालोपनिषदि द्वादशः खण्डः ।

(१३)

॥ अथ त्रयोदशः खण्डः ॥

बाल्येन तिष्ठासेत् । बालस्वभावोऽसङ्गो निरवद्यो मौनेन पाण्
नेरधिकारतयोपलभ्येत । कैवल्यमुक्तं निगमनं प्रजापतिरुवाच । मह

---

ति अन्नहेतुत्वात् पुनस्तत्र तस्य पक्वता । **क्रव्यात्** राक्षसः मांसभुक् हिंसकः । तस्मिन्
र्वेस्य भगवदर्थत्वविवेकविकलैर्दैवसंपद्रहितैर्वार्तापरैरुत्पाद्यत्वात् । एवम्भूतमिदमन्नं यथा
म्भकालप्रभृतिपक्वत्वेऽपि पर्युषितमिति नोपेक्ष्यते, तथा मनुष्यपक्वमपि यातयामं पर्यु
र्युषितत्वदोषेणोपेक्ष्यं न भवति । तत् **जालकिलक्लिन्नं** चेत् पूतं भवति । जलसमूहो जाल
केलं किरं कीर्यमाणं सत् क्लिन्नं क्लेदभाक् विशीर्णावस्थम् । अर्थान्तरं वा विचार्यम् । **असंक**
दं मे भविष्यतीति वा, भवत्विति वा अनुद्दिष्टं यदृच्छया केनचित् कारुणिकेन आनीय स
ीयात् । वैराग्येण सर्वं त्यक्तवतो देहधारणार्थं गृह्यमाणमिदमेव श्रेयस्करम् । न तु या

**इति सौबालद्वादशखण्डपरिष्कारः ।**

(१३)

देहधारणार्थं कर्म कथितम् । मनःपरिपाकहेतुः कर्म कथ्यते । **बाल्येन तिष्ठ**
। कामचारवादभक्षत्वाभ्यनुज्ञानम् । किं तु माहात्म्यानाविष्कारः । न दम्भशाहित्य
ात्ममहिमगोपनमपि । तदाह **बालस्वभावोऽसङ्गो निरवद्य** इति । 'बाल्यं च पा
नेर्विद्याथ मुनिः' इत्युक्तत्रये शिष्टयोरपि कथनं **मौनेन पाण्डित्येने**ति । मौनं नाम मु
यानव्यतिरिक्तकालेऽपि आलम्बनभूतस्य भगवद्रूपस्य पौनःपुन्येन संशीलनम् । **पाण्**
श्रवणमननाभ्यां यथावदधिगतपरतत्त्वेन पुंसा आप्तोपदेशादुपास्यार्थपरिच्छेदः ।
**पाण्डित्येने**ति इत्थम्भूतलक्षणे तृतीया । मौनपाण्डित्यविशिष्टोऽपि बालस्वभावो नि
ोपलभ्येतेति बालस्वरूपं विवृतं भवति । **कैवल्यमुक्तं निगमनं प्रजापतिरुव**
ादिदमुक्तं **कैवल्यम्** असङ्गत्वादिरूपम्, तदेव **निगमनम्** अवसानभावि, 'अमौनं
नेर्विद्याथ ब्राह्मणः' इत्युक्तब्रह्मोपासननिष्पादकं प्रजापतिरवोचदित्यर्थः । अत उपासनमे
ेवमित्याह **महत् पद**मिति । 'सर्वे वेदा यत् पदमामनन्ति' इति प्रसिद्धम् ओमित्ये

क्षमूले वसेत कुचेलोऽसहाय एकाकी समाधिस्थ आत्मकाम
। निष्कामो जीर्णकामः । हस्तिनि सिंहे दंशे मशके नकुले
गन्धर्वे मृत्यो रूपाणि विदित्वा न बिभेति कुनश्चनेति । वृक्षमिव
; छिद्यमानोऽपि न कुप्येत, न कम्पेत । उत्पलमिव तिष्ठासेत्;
ऽपि न कुप्येत न कम्पेत । आकाशमिव तिष्ठासेत् ; छिद्यमानोऽपि
न कम्पेत । सत्येन तिष्ठासेत् । सत्योऽयमात्मा ।

र्वेषामेव गन्धानां पृथिवी हृदयम् ; सर्वेषामेव रसानामापो हृदयं
रूपाणां तेजो हृदयं सर्वेषामेव स्पर्शानां वायुर्हृदयं सर्वेषामेव
ाकाशं हृदयं सर्वेषामेव ( सर्वासामेव ? ) गतीनामव्यक्तं हृदयं
सत्त्वानां मृत्युर्हृदयम् । मृत्युर्वै परे देव एकीभवतीति । परस्तान्न-
सदसत् । इत्येतन्निर्वाणानुशासनम् । इति वेदानुशासनम् ।
ानुशासनम् ॥

इति सौबालोपनिषदि त्रयोदशः खण्डः ।

---

य **वृक्षमूले** वसेत् । न तु स्थिरं कुटीरमपेक्षेत । **कुचेलः** वस्त्रपरिष्करणानादरः ।
। द्वितीयसद्भावे तदर्थकार्यवैयग्र्यादिना समाधिप्रतिहतिः स्यादिति । सहायत्वेन अक्लस-
हित्यमपि न युक्तमित्याह **एकाकीति** । 'एकस्तपः' इति ह्युच्यते । **आत्मकामः**
मः **आप्तकामः** सञ्जातात्मानुभवः **निष्कामः** वस्त्वन्तराभिलोषोत्पत्तिरहितः
: प्रागुत्पन्नकामनानाशवान् । अथ निर्भयत्वमुच्यते **हस्तिनी**त्यादिना । अननुभाव्यवस्तु-
ग्योत्पत्तावपि प्रसक्तदुःखपरिहारकामना ह्यवर्जनीयेत्यत्राह **हस्तिनी**त्यादि । **वृक्षं**
काष्ठम् । आर्षं वा क्लीबत्वम् । परमात्मैकनिमग्नमनस्को हि प्रह्लाद इव प्रबलं
न दुःखमनुभोक्ष्यते । तस्योचितानुचितसंघटनविघटने हि परमात्मनि आयत्तेते इति
ायस्य द्रढिमा । तदाह **सत्येन तिष्ठासे**दिति । 'एष तु वा अतिवदति यः
ति' इत्यत्रेव **सत्य**मिह ब्रह्म । **सत्योऽयमात्मा** । भगवति निक्षिप्तभरोऽयमात्मा
विनश्यति ; सत्य एवावतिष्ठत इत्यर्थः ।

हस्त्यादिभूताधीनदेहवियोगापत्तावपि मृत्युमण्डले तस्यावर्जनीयत्वात् आत्मनः सत्यस्या-
न खेदप्रसक्तिरित्यशयेनाह **सर्वेषामेवे**ति । गन्धादीनां यथा पृथिव्यादिराधारः, तथा
व्यं तम एव तत्कार्यदेहभाजां **सत्त्वानां** प्राणिनामाधारभूतम् । तस्य च परमात्मना
पे भवतीति अवर्जनीयः सत्त्वनाशः । मृत्योः परस्तात्तु परमपदे नैवमिति भावः ॥

**इति सौबालत्रयोदशखण्डपरिष्कारः ।**

(१४)

॥ अथ चतुर्दशः खण्डः ॥

ओं पृथिवी वान्नमापोऽन्नादाः आपो वान्नं ज्योतिरन्नादं ज्योति
ायुरन्नादो वायुर्वान्नमाकाशोऽन्नाद आकाशो वान्नमिन्द्रियाण्यन्नाद
न्द्रियाणि वान्नं मनोऽन्नादं मनोवान्नं बुद्धिन्नादा बुद्धिर्वान्नमव्यक्त
मव्यक्तं वान्नमक्षरमन्नादमक्षरं वान्नं मृत्युरन्नादः । मृत्युर्वै पर
कीभवतीति । परस्तान्नमन्नासन्नसदसत् । इत्येतन्निर्वाणानुशासनम् ।
दानुशासनम् । इति वेदाशासनम् ॥

इति सुबालोपनिषदि चतुर्दशः खण्डः ।

(१५)

॥ अथ पञ्चदशः खण्डः ॥

अथ हैनं रैक्कः पप्रच्छ—भगवन् योऽयं विज्ञानघन उत्क्राम
न कतरद्वाव स्थानं दहतीति । तस्मै स होवाच—योऽयं विज्ञ

---

(१४)

चतुर्दशे खण्डे, सत्त्वानां मृत्यौ लयः शरीरस्य पाञ्चभौतिकत्वात् भूतद्वारैव
युत्पादनार्थं पूर्वोक्तप्रलयप्रक्रियैवानूद्यते । इन्द्रियाणीति शब्दतन्मात्रग्रहणम् । म
हंकारस्य ; बुद्धिरिति महतः ।

इति सौबालचतुर्दशखण्डपरिष्कारः ।

(१५)

मुमुक्षुर्निष्पन्नोपासनः किं पाञ्चभौतिकदेहलयस्थानभूतपृथिव्यादिलये क्रमेण त
जाते पश्चादेव मुक्तो भवति, किं वा चरमशरीरप्रहाणसमनन्तरमेवेति लयक्रमप्रतिप
खण्डानुसारेण विशये जाते, सत्स्वेव सर्वेषु वस्तुषु ज्ञानाग्निदग्धसर्वकर्मतया कर्मायत्तस
त्व्यदाहिसामर्थ्यसंपन्नस्यास्य विषये सर्वं दग्धबीजप्रायमङ्कुरोद्भेदासमर्थं भवतीति न प्रा
ग्सानक्षणभाविमोक्षप्रतिबन्ध इत्युपपादयितुं पञ्चदशः खण्डः प्रारभ्यते । केन कत
सर्वदाहित्वे संमन्यमाने विद्यामाहात्म्येन दहतीति कारणं सुज्ञानम् । कतिपयमात्रद
तदुचितं कारणान्तरं विमृश्यं स्यादिति कृत्वा प्रश्नवाक्ये केनेत्यस्य घटनम् । एतत
योऽयं विज्ञानघन इति विशेषनिर्देशः । सर्वदाहित्वस्य संमतत्वात् विद्यामाहात्म्यस्य
विज्ञानघन इत्यत एव विज्ञानसंभवात् न कारणं निर्देष्टव्यमस्तीति उत्तरवाक्यमध्ये

न्, प्राणं दहत्यपानं व्यानमुदानं समानं वैरम्भं मुख्यमन्तर्यामं
तं कुमारं श्येनं श्वेतं कृष्णं नागं दहति। पृथिव्यापस्तेजोवाय्वा-
हति। जागरितं स्वप्नं सुषुप्तं तुरीयं च महतां च लोकं परं च लोकं
लोकालोकं दहति। धर्माधर्मं दहत्यभास्करममर्यादं निरालोक-
ं दहति। महान्तं दहत्यव्यक्तं दहत्यक्षरं दहति। मृत्युं दहति।
परे देव एकीभवतीति। परस्तान्नसन्नासन्नसदसत्। इत्येतन्निर्वाणा-
म्। इति वेदानुशासनम्। इति वेदानुशासनम्॥

इति सुबालोपनिषदि पञ्चदशः खण्डः।

(१६)

॥ अथ षोडशः खण्डः ॥

सौबालबीजब्रह्मोपनिषत् नाप्रशान्ताय दातव्या; नापुत्राय;
ाय; नासंवत्सररात्रोषिताय। नापरिज्ञातकुलशीलाय दातव्या;
प्रवक्तव्या।

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ।

---

ःनोपेक्षणमिति ध्येयम्। **प्राणमिति** । प्राणापानादयः चतुर्दश वायुविशेषाः प्रागुक्ता एव।
स्य स्थितमपि कार्याक्षमं करोतीत्यर्थः। **पृथिव्यापस्तेज** इत्यत्र पृथिव्यप्तेज इति
त्। छान्दसो वा प्रयोगः। द्वितीयान्तत्वस्याऽऽवश्यकत्वात्। **लोकालोकम्** भास्करकिरण-
शं कियदंशे, किञ्चिदंशे च तदनपेक्षं स्थानम्। **अभास्कर**मित्यादिना अहङ्कार-
ष्टिग्रहणम्॥

इति सौबालपञ्चदशखण्डपरिष्कारः।

(१६)

तदुपनिषद्विद्यायाः परतत्त्वस्वरूप-प्रतितन्त्रभूतशरीरात्मभावादिविस्पष्टदर्शित्वात् परमं गोप-
व्यते षोडशे खण्डे। **सौबालबीजब्रह्मोपनिषत्** सौबालश्रुत्यन्तमूलकब्रह्मविद्या। **अपु-**
शिष्याय पुत्रशिष्यव्यतिरिक्ताय। **असंवत्सररात्रोषिताय** संवत्सरसंख्याकदिनगण-
लवासपुरुषव्यतिरिक्ताय। **दातव्या** प्रथममुपदेष्टव्या। **प्रवक्तव्या** अर्थविशदीकरणेन
मुपपादयितव्या।

स्य देव इति मन्त्रः **श्वेताश्वतरीये**ऽपि। देवे 'दिव्यो देव एको नारायणः'
क्ते एकस्मिन् अभङ्गुरदेवभावे जगद्व्यापारलीले श्रीमन्नारायणे। **यथा देवे तथा**
'साक्षान्नारायणो देवः कृत्वा मर्त्यमयीं तनुम्। मग्नानुद्धरते लोकान् कारुण्यात्

**तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥**

**इत्येतन्निर्वाणानुशासनम् । इति वेदानुशासनम् । इति वेदानुशासनम्**

इति सुबालोपनिषदि षोडशः खण्डः ।

[ ओं पूर्णमदः—इति शान्तिः ]

**॥ इति शुक्लयजुर्वेदीया सुबालोपनिषत् ॥**

श्रीरस्तु ।

---

त्रपाणिना' इत्युक्तरीत्या देवो नारायण एव गुरुरूपेणावतीर्णः । देवो देवत्वावस्थायां त्र न किञ्चित् कुर्यात्, शस्त्रेण च पातयेत् घातयेच्च । अस्यां पुनरवस्थायां कारुण्यादेव क त्रेण च पाणिना भवपारावारमग्नानुद्धरति चेति अतिशयिताऽपि युज्यते भक्तिरत्र । ती वा भक्तिः कथं न युक्तेति । **एते कथिताः** पञ्चदशभिः खण्डैः कथिता । गुरु हिणस्तु कथिता अप्यर्थाः न प्रकाशन्ते । **एते अकथिताः** इति पदच्छेदे,—गुरुभक्तिः , तदनुग्रहेण अकथिता अप्यर्थाः स्वतः प्रकाशन्त इत्यर्थः । **महात्मन** इति । 'वासु मिति स महात्मा सुदुर्लभः इति गीतम् । वासुदेव इव गुरावपि तादृग्भक्तिशाली तु सु त्मेति भावः । अस्मिन् खण्डे पूर्वं विद्यागोपनस्य पश्चात् गुरुभक्तिप्रकर्षस्य चावश्यकत्वोपदेश ं प्रकाशयेद् धीमान् मन्त्रं यत्नेन गोपयेत्' इतीदमीदृशश्रुत्युपबृंहणमेवेति विज्ञेयम् ॥ १

गुरुणोभयमीमांसावल्लभत्वेन मानितः ।
यः पूर्वोत्तरमीमांसाप्रदीपस्तर्कवारिधिः ॥

विहितानेकसद्ग्रन्थो वात्स्यः श्रीवीरराघवः ।
तेन वेदान्तसौमित्रिमुनिपादाब्जसेविना ॥

श्रीरङ्गरामावरजमुनिसेवात्तसद्धिया ।
ईशाद्युपनिषद्भाष्यपरिष्कारविधायिना ॥

प्राच्यव्याकृतपञ्चांशा सौबालोपनिषत् परा ।
इत्थं षोडशखण्डात्मा परिष्कारेण भूषिता ॥

अनपायदयाम्भोधिरच्छस्फटिकसप्रभः ।
अस्तु लक्ष्मीहयग्रीवो देवस्तृप्तो गतिः सताम् ॥

**इति श्रीवात्स्यसच्चक्रवर्तिवीरराघवाचार्यकृतिषु**
**उपनिषद्भाष्यपरिष्कारे सौबालपरिष्कारः संपूर्णः ॥**

**॥ शुभमस्तु ॥**

श्रीः

# सुबालोपनिषदर्थसंग्रहकारिकाः



सुबालोपनिषत् शुक्लयजुर्वेदे क्वचित् स्थिता ।
एषा षोडशखण्डात्मा वक्ति नारायणं परम् ॥ १ ॥

नसन्नासन्नसदसत् प्रलये वस्तु तद्भवाः ।
समष्टिर्व्यष्टयो ब्रह्मा वर्णाद्याश्चाऽऽद्य ईरिताः ॥ २ ॥

वेदवैदिकवाक्सृष्टिर्यत् किञ्च मिथुनोद्भवम् ।
तत्सृष्टिश्च द्वितीयोक्ता लयक्रमसमन्विता ॥ ३ ॥

तृतीये तस्य चिदचिद्वैलक्षण्यविभावके ।
षडङ्गसाध्यमुदितं मुक्तये तदुपासनम् ॥ ४ ॥

जाग्रत्स्वप्नसुषुप्त्युक्त्या ततो वैराग्यवर्धनम् ।
चक्षुरादीनि करणान्युपादाय चतुर्दश ॥

प्रत्येकमष्टके प्रोक्तं ध्यानं तस्याऽऽत्मनस्ततः ।
नारायणात्म चाशेषं परमञ्च पदं ततः ॥ ५. ६ ॥

शरीरात्मस्वरूपोऽर्थः सप्तमे साम्प्रदायिकः ।
एवं सर्वशरीरित्वेऽप्यनवद्यत्वमष्टमे ॥ ७ ॥

उपासिते लयोऽथोक्तो निर्बीजे विलयात्मकः ।
दशमेऽस्मिन्ननाधारे सर्वाधारत्वमीरितम् ॥ ८ ॥

अपुनर्भवया नाड्या मुक्तिदेशगतिस्ततः ।
वृत्तिस्त्वयाचितेनाथ तिष्ठासा बाल्यधैर्यतः ॥ ९ ॥

मुक्तत्यक्तशरीरादि प्राप्य भूतादिरूपताम् ।
अस्त्या लयादिति व्यक्त्यै अन्ववादि लयक्रमः ॥ १० ॥

स्वबन्धने जगत् सर्वं क्षीणशक्ति वितन्वतः ।
मुक्तिः पञ्चदशे प्रोक्ता गुप्तिर्भक्तिश्च षोडशे ॥ ११ ॥

सौबाले स्पष्टमव्यक्ताद्यचित्तत्त्वं शरीरता ।
नारायणस्य पारम्यं बाल्यतत्त्वादि चोदितम् ॥ १२ ॥

॥ शुभमस्तु ॥

श्रीः

# अग्निरहस्यम् *

माध्यन्दिन — शतपथब्राह्मणे — दशमं काण्डम् ॥

१०-५-२.

यदेतन्मण्डलं तपति, तन्महदुक्थम्, ता ऋचः, स ऋचाँल्लोक
यदेतदर्चिर्दीप्यते, तन्महाव्रतम्, तानि सामानि, स साम्नाँ लोकः।
एष एतस्मिन् मण्डले पुरुषः, सोऽग्निः, तानि यजूँषि, स यजुषाँल्लोक

सैषा त्रय्येव विद्या तपति । तद्धैतदप्यविद्वाँस आहुः —
एषा विद्या तपतीति । वाग्घैव तत् पश्यन्ती वदति ॥ २ ॥

स एष एव मृत्युः, य एष एतस्मिन् मण्डले पुरुषः । अथैत
यदेतदर्चिर्दीप्यते । तस्मान्मृत्युर्न म्रियतेऽमृते ह्यन्तः । तस्मादु न
मृते ह्यन्तः ॥ ३ ॥

* नात्र संपूर्णमग्निरहस्यं व्याख्यायते ; किन्तु यावदपेक्षितम् ।

---

श्रीः

श्रीमद्भ्यो रङ्गरामानुजमहादेशिकेभ्यो नमः ।

## अग्निरहस्यपरिष्कारः

श्रिया सह वृषाचलाञ्चलवनीषु शृङ्गारिणे दयादिगुणसद्मने दनुजलोकसंहारिणे ।
क्रियामयमनोमयक्रतुसमर्च्यभूम्नेऽपि ते मयाऽद्य भगवन्नयं शुभकरोऽस्तु वद्धो

यदेतन्मण्डलं तपतीत्यादिकमिदं ब्राह्मणं यद्यपि भाष्यकृता न व्याख्यातम्-
उत्तरब्राह्मणविषयविचारात्मके पूर्वविकल्पाधिकरणे, ''परेण च शब्दस्य ताद्विध्यं —''
परशब्देन तदुपरितनब्राह्मणस्येव चकारेण तत्पूर्वभूतस्य एतद्ब्राह्मणस्यापि उत्तरब्राह्मण
शेषत्वरहितप्रधानविद्याविशेषप्रतिपादकत्वे दृष्टान्ततयोपात्तत्वात्, तत्पूर्वसूत्रे, ''न सा
पलब्धेर्मृत्युवन्न हि लोकापत्तिः'' इत्यत्र मृत्युवदिति एतद्ब्राह्मणविषयस्य दृष्टान्तीकरण
विकल्पाधिकरणभूतानन्तराधिकरणशरीरेभावाधिकरणादिषु, एतद्ब्राह्मणगतस्य, 'तं य
पासते, तदेव भवति' इति तत्क्रतुन्यायवाक्यस्य असकृदुदाहरणाच्च एतद् ब्राह्मणमपि
द्रष्टव्यं भवतीति सह प्रकाश्यते ।

अस्मिन् अग्निरहस्यब्राह्मणे मण्डलपुरुषे आदौ अग्नित्वभावानां ततो मृत्यु

तदेष श्लोको भवति, अन्तरं मृत्योरमृतमिति । अवरँ ह्येतन्मृत्योर-मृत्यावमृतमाहितमिति । एतस्मिन् हि पुरुष एतन्मण्डलं प्रतिष्ठितं मृत्युर्विवस्वन्तं वस्त इति । असौ वा आदित्यो विवस्वान् । एष । विवस्ते । तमेष वस्ते । सर्वतो ह्यनेन परिवृतः । मृत्योरात्मा ीति । एतस्मिन् हि मण्डल एतस्य पुरुषस्यात्मा । एतदेष श्लोको ॥ ४ ॥

तयोर्वा एतयोः उभयोरेतस्य चार्चिष एतस्य च पुरुषस्यैतन्मण्डलं । तस्मान्महदुक्थं परस्मै न शँसेत्, नेदेतां प्रतिष्ठां छिनदा इति । एतां तिष्ठां छिन्ते, यो महदुक्थं परस्मै शंसति । तस्मादुक्थशंसं भूयिष्ठं ते । प्रतिष्ठां छिन्नो हि भवति । इत्यधिदेवतम् ॥ ५ ॥

अथाधियज्ञम् । यदेतन्मण्डलं तपति, अयँ स रुक्मः । अथ यदेतदर्चि- . इदं तत् पुष्करपर्णमापो ह्येताः आपः पुष्करपर्णम् । अथ य एष ् मण्डले पुरुषः, अयमेव स योऽयँ हिरण्मयः पुरुषः । तदेतदेवैतत्त्रयँ होपधत्ते । तद्यज्ञस्यैवानु सँस्थामूर्ध्वमुत्क्रामति । तदेतदप्येति, तपति । तस्मादग्निं नाद्रियेत परिहन्तुम् । अमुत्र ह्येष तदा भवतीत्यु यज्ञम् ॥ ६ ॥

अथाध्यात्मम् । यदेतन्मण्डलं तपति यश्चैष रुक्मः, इदं तच्छुक्लं- अथ यदेतदर्चिर्दीप्यते यच्चैतत् पुष्करपर्णम्, इदं तत् कृष्णमक्षन् । अथ एतस्मिन् मण्डले पुरुषो यश्चैष हिरण्मयः पुरुषः, अयमेव स योऽयं ऽक्षन् पुरुषः ॥ ७ ॥

स एष एव लोकम्पृणा । तामेष सर्वोऽग्निरभिसम्पद्यते । तस्यै- न्नं योऽयँ सव्येऽक्षन् पुरुषः । अर्द्धमु हैतदात्मनो यन्मिथुनम् । यदा मिथुनेनाथ सर्वोऽथ कृत्स्नः कृत्स्नतायै । तद्यत् ते द्वे भवतो द्वन्द्वँ

मण्डलपुरुषस्याधिदैवतं स्थितस्य अधियज्ञगतहिरण्मयपुरुषैक्यम्, अध्यात्मं दक्षिणाक्षि-

मिथुनं प्रजनम्। तस्मात् द्वे-द्वे लोकम्पृणे उपधीयेते। तस्मादु द्वाभ्
भ्यां चितिं प्रणयन्ति ॥ ८ ॥

स एष एवेन्द्रः, योऽयं दक्षिणेऽक्षन् पुरुषः। अथेयमिन्द्राणी
भ्यां देवा एतां विधृतिमकुर्वन् नासिकाम्। तस्माज्जायाया अ
श्नीयात्, वीर्यवान् हास्माज्जायते। वीर्यवन्तमु ह सा जनयति, यस्
ते नाश्नाति ॥ ९ ॥

तदेतद्देवव्रतँ राजन्यबन्धवो मनुष्याणामनुतमां गोपायन्ति। तस्म
: वीर्यवान् जायतेमृतवाका वयसाँ साक्षिप्रश्येनं जनयति ॥ १० ॥

तौ हृदयस्याकाशं प्रत्यवेत्य मिथुनीभवतः। तौ यदा मिथुनस्या
च्छतोऽथ हैतत्पुरुषः स्वपिति। तद्यथा हैवेदं मानुषस्य मिथुनस्यान्तं गत्वा
वेद इव भवति, एवँ हैवैतदसंविद इव भवति। दैवँ ह्येतन्मिथुनम्
मो ह्येष आनन्दः ॥ ११

तस्मादेवंवित् स्वप्यात्। लोक्याँ हैते एव तद्देवते मिथुनेन प्रिये
त्रा समर्द्धयति। तस्मादु ह स्वपन्तं धुरेव न बोधयेत्, नेदेते देव
थुनीभवन्त्यौ हिनसानीति। तस्मादु हैतत्सुषुपुषः श्लेष्मणामिव मु
ति। एते एव तद्देवते रेतः सिञ्चतः। तस्माद्रेतस इदँ सर्वँ सम्भवति
दं किञ्च ॥ १२ ॥

स एष एव मृत्युः, य एष एतस्मिन् मण्डले पुरुषो यश्चायं दक्षिणेऽक्ष
षः। तस्य हैतस्य हृदये पादावतिहितौ। तौ हैतदाच्छिद्योत्क्रामति।
त्क्रामत्यथ हैतत्पुरुषो म्रियते। तस्मादु हैतत् प्रेतमाहुराच्छेद्यस्येति ॥२३

एष उ एव प्राणः। एष हीमाः सर्वाः प्रजाः प्रणयति। तस्यै
ाः स्वाः। स यदा स्वपित्यथैनमेते प्राणाः स्वा अपियन्ति। तस्मा

---

रुषे तदुभयपुरुषैक्यञ्च प्रदर्श्य, अध्यात्मपुरुषे लोकम्पृणात्वं दक्षिणाक्षिपुरुषे इन्द्रत्वं सव्याक्षि
इन्द्राणीत्वञ्च भावयित्वा, मण्डलदक्षिणाक्षिस्थपुरुषयोर्मृत्युत्वं प्राणत्वञ्चारोप्य तत इदमुच्यते

प्ययः । स्वाप्ययो ह वै । तँ स्वप्न इत्याचक्षते परोक्षम् । परोक्षकामा ।
ः ॥ १४ ॥

स एतैः सुप्तः न कस्य चन वेद । न मनसा सङ्कल्पयति ।
ाऽन्नस्य रसं विजानाति । न प्राणेन गन्धं विजानाति । न चक्षुषा पश्य
श्रोत्रेण शृणोति । एतँ ह्येते तदापीता भवन्ति । स एष एकः सन् प्रजा
था व्याविष्टः । तस्मादेका सती लोकम्पृणा सर्वमग्निमनु विभवति
। यदेक एव, तस्मादेका ॥ १५ ॥

तदाहुः—एको मृत्युर्बहव इति । एकश्च बहवश्चेति ह ब्रूयात्
हासावमुत्र, तेनैकः । अथ यदिह प्रजासु बहुधा व्याविष्टः, ते
वः ॥ १६ ॥

तदाहुः—अन्तिके मृत्युर्दूरा इति । अन्तिके च दूरे चेति ह ब्रूयात
हायमिहाध्यात्मम्, तेनान्तिके । अथ यदसावमुत्र, तेनो दूरे ॥ १७

तदेष श्लोको भवति । अन्ने भात्यपश्रितो रसानाँ संक्षरेऽमृ
। । यदेतन्मण्डलं तपति, तदन्नम् । अथ य एष एतस्मिन् मण्ड
षः, सोत्ता । स एतस्मिन्नन्नेऽपश्रितो भातीत्यधिदैवतम् ॥ १८ ॥

अथाध्यात्मम् । इदमेव शरीरमन्नम् । अथ योऽयं दक्षिणेऽक्ष
षः, सोऽत्ता । स एतस्मिन्नन्ने अपश्रितो भाति ॥ १९ ॥

तमेतमग्निरित्यध्वर्यव उपासते, यजुरिति । एष हीदँ सर्वं युनक्ति
मेति छन्दोगाः । एतस्मिन् हीदं सर्वं समानम् । उक्थमिति बह्वृचाः । ए
ँ सर्वमुत्थापयति । यातुरिति यातुविदः । एतेन हीदँ सर्वं यतम
ामिति सर्पाः । सर्प इति सर्पविदः । ऊर्गिति देवाः । रयिरिति मनुष्या
ेत्यसुराः । स्वधेति पितरः । देवजन इति देवजनविदः । रूपमि
धर्वाः । गन्ध इत्यप्सरसः ।

आदित्यमण्डलमिदं शरीरञ्चान्नम । आदित्यपुरुषो दक्षिणाक्षिपुरुषश्चात्ता । स परमात

तं यथा यथोपासते, तदेव भवति । तद्धैनान् भूत्वाऽवति । तस्मा
।वंवित् सर्वैरेवैतैरुपासीत । सर्वं हैतद्भवति । सर्वं हैनमेतद् भूत्वाऽवति ॥

स एष लोष्टकोऽग्निः । ऋगेका, यजुरेका, सामैका ।
।श्चात्रर्चोपदधाति, रुक्म एव तस्या आयतनम् । अथ यां यजुषा,
व तस्या आयतनम् । अथ याँ साम्ना, पुष्करपर्णमेव तस्या आयतन
वं लोष्टकः ॥ २१ ॥

ते वा एते उभे एष च रुक्म एतच्च पुष्करपर्णमेतं पुरुषमपी
भे हि ऋक्सामे यजुरपीतः । एवं वेकेष्टकः ॥ २२ ॥

स एष एव मृत्युः, य एष एतस्मिन् मण्डले पुरुषो य
क्षिणेऽक्षन् पुरुषः । स एष एवंविद आत्मा भवति । स य
ादस्माँल्लोकात् प्रेति, अथैतमेवात्मानमभिसम्भवति । सोऽमृतो भव
त्युर्ह्यस्यात्मा भवति ॥ २३ ॥

पञ्चमाध्याये द्वितीयं ब्राह्मणम् ॥

---

यथायथोपासते, तदेव भवति । उपासकेन पुरुषेण यादृशवस्त्वाकारावच्छिन्नतया स्वयमुप
र्गति, तादृशवस्त्वाकारावच्छिन्न एव भवन् स यथायथं तमुपासकमिह परत्र च र
क्रतुनयविचारः अस्मच्छान्दोग्यपरिशिष्टे द्रष्टव्यः । शेषं परस्तात् । अयं
ष्टकाग्निर्भाव्यः । ऋग्यजुस्सामोपधेयेष्टकत्वात् अग्नेस्त्रीष्टकता । एकेष्टकश्च भाव्यः । ऋ
ोर्यजुष्यप्ययात् यजुर्मात्रपरिशेषादेकेष्टकत्वम् । एवम्भूतोऽयं मण्डले दक्षिणे अक्षिण च
त्युत्वेन भाव्यः । [सर्वसंहर्तृत्वरूपसामान्यधर्ममादाय मृत्युत्वभावनेति "न सामान्यात् -
ते सूत्रभाष्ये स्थितम् । उत्कृष्टे निकृष्टदृष्टेरयोगात् मृत्युसादृश्यं गायत्रीसादृश्यवत् विवक्षित
ाशयः स्यात् । ] एवं भावितोऽयमात्मा स्वान्तरात्मत्वरूपेण यथावस्थिताकारेणोपास्यते
पासकः प्रेत्यामृतो भवति । तस्य वस्तुत एतदन्तरात्मत्वादिति ।

इति वात्स्यसच्चक्रवर्तिवीरराघवाचार्यकृतिषु
उपनिषद्भाष्यपरिष्कारे अग्निरहस्यभागगत-
**पूर्वब्राह्मणपरिष्कारः ।**

१०-५-३. ※

**नेव वा इदमग्रेऽसदासीन्नेव सदासीत् ।**
**आसीदिव वा इदमग्रे नेवासीत् । तद्ध तन्मन एवास ॥ १ ॥**

भाष्यकोशेषु शुद्धश्रुतिपाठानुपलम्भात् मुद्रितशतपथब्राह्मणकोशमनुसृत्य मूलं मुद्र्यते ।

---

श्रीमते रामानुजाय नमः

पनिषदां भाष्यं रामानुजमतानुगम् । रम्यं कृतं प्रपद्ये तं रङ्गरामानुजं मुनिम् ॥

श्रीरङ्गरामानुजमुनिवरविरचिता

## अग्निरहस्यप्रकाशिका

अतसीगुच्छसच्छायमञ्चितोरःस्थलं श्रिया ।
अञ्जनाचलशृङ्गारमञ्जलिर्मम गाहताम् ॥
व्यासं लक्ष्मणयोगीन्द्रं प्रणम्यान्यान् गुरूनपि ।
क्रियतेऽग्निरहस्यस्य विवृतिर्विदुषां मुदे ॥

**नैव वा इदमग्रे सदासीत् नैवासदासीत्** = इदं जगत् सर्गाद्यसमये सर्वात्मना
म्नामरूपमपि नासीत् । सर्वात्मना स्वस्वरूपेणाप्यसन्नासीत् । विमृष्टा-
चिलवदासीदित्यर्थः ॥

**आसीदिव वा इदमग्रे नेवासीत्** । स्वरूपेण सत्त्वात् सदिव, नामरूप-
ावात् असदिवेत्यर्थः । **तद्ध तन्मन आस** । **तत्** तदा तन्मनः प्रादुर्बभूव ।
काले प्रथमतो मनः सृष्टमित्यर्थः ॥ १ ॥

---

( मनश्चिदाद्यग्निब्राह्मणभाष्यपरिष्कारः )

था ईशावास्यानुवाकः संहितान्तर्गतोऽपि शारीरकोपयुक्तः सर्वैराद्रियते, तथा
र्गतोऽप्यग्निरहस्यभागोऽयमादरणीयः, शारीरके तृतीयतृतीये मनश्चिदाद्यग्निसाध्यस्य
प्र क्रतोरत्र विहितस्य मीमांसनात्, उपनिषदन्तरदर्शितवैश्वानरादिविद्याविधान-
े विभाव्य सूत्रभाष्याद्यर्थावबोधसौकर्यसंपिपादयिषया उपनिषदन्तराणामिव अग्निरहस्य
ार्थं प्रकाशयितुमाचार्यो भाष्यं भाषिष्यमाणः सर्वस्वग्रन्थानुगतं मङ्गलश्लोकमिहापि
अतसीति ।

द्ध तन्मन एवासेति । मनश्चिदादयोऽग्नयो मनोमया इह वक्ष्यन्ते विद्यामयक्रतू-
ा । तत्र मनस एवोपयोगात् सृष्ट्यारम्भे मन एवेह कथितम् । न तावता तत्पूर्वसृष्ट-
ट्तत्कारणानां व्यावृत्तिः । अपेक्षितमात्रेणोपक्रमः श्रुतिशैली ।

तस्मादेतदृषिणाभ्यनूक्तम् । नासदासीन्नो सदासीत्तदानीं
नेव हि सन्मनो नेवासत् ॥ २ ॥

तदिदं मनः सृष्टमाविरबुभूषत् निरुक्ततरं मूर्ततरम् । तद
मन्वैच्छत् । तत् तपोऽतप्यत । तत् प्रामूर्च्छत् ।

तत् षट्त्रिँशतँसहस्राण्यपश्यदात्मनोऽग्नीनर्कान् मन
मनश्चितः ।

---

**तस्मादेतदृषिणाभ्यनूक्तम्** । यत एव सर्गाद्यसमयस्य तादृग्रूपत्व
एव सर्गाद्यसमयस्वरूपं वेदेनाप्यनूक्तम्, नासदासीदिति । उक्तोऽर्थः ।
**सन्मनो नेवासत्** । तस्मिन् समये उत्पन्नमपि मनः किञ्चिदभिव्यक्तनामरूपत्व
न भवति; अत्यन्ताभिव्यक्तनामरूपत्वाभावात् सदपि न भवतीत्यर्थः ॥ २ ।

**तदिदं — मूर्ततरम्** । एवं मनः सृष्टं ईषदभिव्यक्तनामरूपतया
मपि मूर्तमपि निरुक्ततरतया आविर्भवितुमैच्छत् । अत्यन्तनामरूपव्यापारा
मैच्छदित्यर्थः । **तदात्मानं — तपोऽतप्यत** । [ **तत्** मनश्शरीरकपरम
आत्मानं चिन्तयन् संकल्परूपं तपः कृतवानित्यर्थः । [ मनःपरामर्शि **त**
'मृदब्रवी' दित्यादिवत् तदभिमानिदेवतापरं द्रष्टव्यम् । **तत् प्रामूर्छत्**
मनः समुछ्रितं विसृ (स्तृ ?) तमभवदित्यर्थः । 'मूर्च्छा मोहसमुच्छ्राययो
हि धातुः ।

**तत् षट् — मनश्चितः** । तन्मन एव — षट्त्रिंशत्सहस्रदिनात्मकपुरुषा
र्गतैकैकदिनप्रभवमानसवृत्तिसंघाताः अग्नित्वदृष्ट्या उपास्यमाना **मनश्चित**
[ तान् ? ] आत्मनस्संबन्धिनः **अर्कान्** अर्चनीयान् **मनोमयान्** मनोनिष्पाद्या

---

**मूर्ततरमिति** । इष्टकचिताग्निरूपमूर्ततुल्यमनोमयमनश्चिदाद्यनेकाग्निसंपादकत्वादत
तरत्वम् । **मानसवृत्तिसंघाता** इति । ननु मनश्चित्पदस्वारस्यानुरोधेन मनस एवा
तस्यैव तत्तद्दिनावच्छिन्नत्वेन भेदकल्पनया अनेकत्वोपपत्तेरिति चेत् — उपरि, 'सर्वाणि
चिन्वन्त्यपि स्वपते' इति प्राणिप्रयत्नसाध्यत्वस्य स्पष्टमवगमात् मनसस्तदभावात् मनो
ग्रहणम् । एवञ्च भेदकल्पनक्लेशोऽपि नेति ।

'कर्मण्यग्न्याख्यायाम्' इति मनश्चीयत इत्यर्थे क्विप्। श्येनचिदादि-
तौ क्विबन्तो निष्पन्नः। मनश्चितो नामाग्नय इति यावत्।

---

न्तो निष्पन्न इति। अतः इष्टकचितशब्दवत् अयमकारान्त इति न मन्तव्यम्।
श्चित्सु इति प्रयोगोऽप्यस्ति। एवं वाक्चित इत्यादिरपि क्विबन्त एव। सर्वोऽयं
वचनान्तः। न तु इष्टकचितशब्दवत् अकारान्तैकवचनान्तः। इष्टकचित इत्यस्य
इति विग्रहः। 'इष्टकेषीकामालानां चिततूलभारिषु' इत्यनुशासनात् चितशब्दे
दे ह्रस्वः। चितशब्दः तत्र क्तान्तः। मनश्चित्पदं तु श्येनचित्पदवत्, 'कर्मण्य-
' इति सूत्रनिष्पादितम्। तत्र कर्मणीत्यनुवर्तते। कर्मणि उपपदे कर्मकारकरूपार्थे
न् स्यात् अग्निवाचित्वे इति तदर्थः। अग्निरत्र आहवनीयाग्न्याधारस्थण्डिलविशेषः।
चेत् इत्यस्य चितशब्दस्येव चयनकर्मार्थकत्वेऽपि तदुपपदभूतमनःश्येनादिशब्दाः
न चयनकरणवाचकाः; किन्तु चीयमानवस्तुपराः। 'श्येनचितं चिन्वीते'त्यस्य हि
भवति अग्निश्चीयमानः, तमग्निं चिन्वीतेत्यर्थः। आहवनीयाधारभूतस्थलविशेषस्य
नाकारतया निर्माणात् श्येनपक्षिणः चीयमानस्थलस्य चाभेदारोपात् श्येनचित् इति
च्यते। तद्वत् मनश्चित् इत्यत्रापि मनसः, क्रतौ वस्तुतश्चीयमानस्याग्नेश्चाभेदारोपो
त्र, 'षट्त्रिंशतं सहस्राण्यपश्यदात्मनोऽग्नीन्' इति मनस्संबन्धिषु षट्त्रिंशत्सहस्रेषु
त् मनोव्यापारसंघाताः तावन्त एवाग्नय इति मनश्चिदित्यत्र मनःपदं तादृशसंघातपरं
ष्वेकैकसंघातेऽपि चित्याग्न्यभेदारोपः। व्यापारसंघातानामनेकतया अग्न्यनेकत्वकृतं
बहुवचनम्। अत्रायं विशेषः—श्येनचिदित्यादौ श्येनस्य अग्निरूपस्थानस्य च मूर्तत्वात्
तादात्म्यकल्पना श्येनसदृशाकारसंपादनेन क्रियते। इह तु मनोव्यापाराणाममूर्ततया
पादनायोगात् अभेदारोपमात्रम्। तत्रापि क्रतावुपयुज्यमाने स्थलविशेषरूपाग्नौ
मनोव्यापारतादात्म्यभावनेति न मन्तव्यम्; 'मनोमयेषु मनश्चित्सु मनोमय
ति अग्नेर्मनोमयत्ववेदनेन पूर्वोक्तमानसव्यापारसंघाते अग्निरूपस्थलविशेषत्वारोपणपूर्वकं
र्तव्यसर्वकार्यक्रियमाणत्वभावनाया ज्ञापनात्। तथा च मनश्चित इत्यस्य अग्नित्वेन
मानसव्यापारसंघातानित्यर्थः पर्यवस्यति। मूले अग्नीनिति पदं स्पष्टार्थं प्रयुक्तम्।
मेव क्विब्विधानात् चित्पदेनैव तत्सिद्धेः।

ते मनसैवाधीयन्त । मनसाऽचीयन्त । मनसैषु ग्रहा
मनसाऽस्तुवत । मनसाऽशँसन् ।

यत् किं च यज्ञे कर्म क्रियते, यत् किं च यज्ञियं कर्म
तेषु तन्मनोमयेषु मनश्चित्सु मनोमयमक्रियत ।

तद्यत् किञ्चेमानि भूतानि मनसा संकल्पयन्ति, तेषामेव

---

तेषु —। एषु मनश्चिदाद्यग्निषु उपयुक्ताग्न्या(न्या ?)धानचयन
शस्त्राण्यपि मनोनिष्पाद्यान्येवेत्यर्थः । ननु सर्वेषां मनोव्यापाराणाम
क्रोडीकृतत्वात् आधानचयनग्रहणस्तोत्रशस्त्रादिदृष्टिविषयो मनोव्यापारो
शङ्क्यम् — केषाञ्चिद्व्यापाराणामग्नित्वदृष्ट्या क्रोडीकारस्य केषाञ्चित्
ग्न्याधानचयनस्तोत्रादिव्यापारत्वेन क्रोडीकारस्य वा (च ?) संभवात् नानुप

यत् — अक्रियत । यज्ञप्रयोगे यत् प्रधानं कर्म क्रियते, य
युक्तं तदङ्गभूतं कर्म ग्रहणस्तोत्रशस्त्रादिकम्, तत् सर्वं मनोमयेषु मनश्चि
मनोमयमक्रियतेत्यर्थः ।

तद्यत् — कृतिः । तत् तस्मात् लोके सर्वैः भूतैः क्रियम
व्यापाराः सर्वेऽपि एतन्निष्पाद्यानां विद्यामयानां मनश्चितां निष्पादकव्यापा
मनोव्यापारत्वावच्छिन्नेषु सर्वेषु क्रियमाणाया अग्नित्वदृष्टेः सकलमनोव्याप
सर्वेषां मनोव्यापाराणां स्वाध्यस्ताग्निनिष्पादकत्वादिति भावः ।

---

आधानेति । मूले मनसैवाधीयन्त इत्यत्र आधीयन्त इत्येव पदच्छेदात
वक्तुं शक्यम्, नान्यत् । तथैवोपरि, तान्येवादधतीति च वक्ष्यते । आधान
भावनामात्ररूपाणामत्र कथनात् वास्तवाधानचयनादिकं नास्तीति सिद्ध्या क्रत्वन्तर्ग
न मनोव्यापारादिभावना । अत एव वास्तवचयनाद्यभावात् नात्र वास्तवक्रतुरपीति लभ्यते

तर्हि भावितानामग्नि–आधान–चयन–ग्रहणादीनां कुत्रोपयोगः ? किं पूर्वोक्त
भावनीयम्, उतान्यदपीति जिज्ञासायामुच्यते यत् किञ्चेति । यज्ञाख्यं कर्मेति
यज्ञे कर्मेति प्रयोगात् यज्ञपदं, 'न प्रथमयज्ञे प्रवृञ्ज्यात्' इत्यत्रेव प्रयोगपरमि
भावप्रकाशिकायाम् । यद्वा यज्ञपदं यथाश्रुतमेवास्तु । घटकत्वं सप्तम्यर्थः । य
प्रक्षेपाङ्गको देवतोद्देश्यको द्रव्यत्यागः । तथा च यज्ञस्वरूपान्तर्गतमुद्देशत्यागादिरूपं क
कर्मेत्यस्यार्थः । तेन प्रधानकर्मग्रहणम् । अङ्गं सर्वं यज्ञियं कर्मेत्यनेन गृह्यते ।

ानेऽादधति ; तांश्चिन्वन्ति ; तेषु ग्रहान् गृह्णन्ति ; तेषु स्तुवते ;
ंसन्ति । एतावती वै मनसो विभूतिरेतावती विसृष्टिरेतावन्मनः ।
ट्त्रिँ-शत् सहस्राण्यग्नयोऽर्काः । तेषामेकैक एव तावान् यावानसौ
२ ॥

ान्मनो वाचमसृजत । सेयं वाक् सृष्टाऽऽविरबुभूषन्निरुक्ततरा
साऽऽत्मानमन्वैच्छत् । सा तपोऽतप्यत । सा प्रामूर्च्छत् । सा
ात्ँ-सहस्राण्यपश्यदात्मनोऽग्नीनर्कान् वाङ्मयान् वाक्चितः । ते वाचै-

ानेव — शंसन्ति । सर्वाणि भूतानि विदुषा संपाद्येषु मनश्चित्स्वग्निषु
ं आधानचयनग्रहणस्तोत्रशस्त्राणि निष्पादयन्तीत्यर्थः । एतावती—मनः ।
ऽग्नयः । सर्वे तदधीनाः तत्कार्यभूताः एतादृशमाहात्म्यशालिन इत्यर्थः ।

ट्— पूर्वः । षट्त्रिंशत्सहस्रसंख्याकानामर्चनीयानामग्नीनामेषां मध्ये
यग्निः पूर्वोक्तेष्टकचिताग्निसदृश इत्यर्थः । इष्टकचितस्याग्नेः स्वाङ्गिभूत-
यत् फलम्, तदेव मनश्चिदादीनामपि विद्यामयक्रतुद्वारेण फलमित्यर्थः ।
ापि ॥ २ ॥

वाक्चितः वागिन्द्रियव्यापाराः ।

क्चितो वागिन्द्रियव्यापारा इत्यादि । मनश्चिच्छब्दे उक्तया रीत्या वाक्चिदादि-
्युत्पत्तिः प्रदर्शनीयेति, 'आत्मनोऽग्नीनर्कान् वाङ्मयान्' इति वाक्संबन्धिषु वाग्वि-
ात्वकथनबलेन वाक्पदं वाग्व्यापारपरम्, चित्पदं चयनकर्मभूताग्निपरम्, उभयोर-
इत्येव सिद्ध्यति । अथापि अग्निपदसमभिव्याहारादेव वाग्व्यापारेषु अग्न्यभेदलाभात्
दर्शनार्थं तावदुक्तावपि अन्ततः वाग्व्यापारमत्रं वाक्चित्पदेनेह विवक्षितुं युक्तमिति
ुक्तम् । रीतिरियं मनश्चित्पदेऽप्यन्ततो भाव्या, 'अग्नीन्—मनश्चितः' इत्यत्र । 'मनोमयेषु
' इत्यत्र तु अग्निपदान्तराभावात् चित्पदमग्निसमर्पकम् । एवं वाक्चित्सु इत्यादावपि ।
ाक्पदेन वागिन्द्रियव्यापारा ग्राह्या इत्येतज्ज्ञापयिषामात्रेण व्यापारा इत्युक्तिः ।
ादिपूर्वपदविवरणमात्रमेतत् । एवञ्च वाक्चित इत्यस्य द्वितीयान्ततया व्यापारा
प्रथमान्तेन विवरणमिति शङ्काऽपि शमिता भवति ; कृत्स्नविवरणपरत्वाभावादस्येति ।

ाचैवेत्यादि । वाग्व्यापारात्मकेष्वग्निषु वाग्व्यापारात्मकानि कर्माणि वाचैवाक्रियन्त =
ोद्भवान्यासन् । वाग्व्यापारा एव ग्रहसंबन्धिसर्वक्रिया भाव्या इति यावत् । एवमग्रेऽपि ।

वाधीयन्त वाचाऽर्चीयन्त वाचैषु ग्रहा अगृह्यन्त वाचास्तुवत वाचाः
यत्किं च यज्ञे कर्म क्रियते, यत्किं च यज्ञियं कर्म, वाचैव तेषु त
वाक्चित्सु वाङ्मयमक्रियत। तद्यत् किं चेमानि भूतानि वाचा
तेषामेव सा कृतिः। तानेवादधति तांश्चिन्वन्ति तेषु ग्रहान् गृह्णन्ति ते
तेषु शँसन्ति। एतावती वै वाचो विभूतिरेतावती विसृष्टिरेतावतं
षट्त्रिँशत् सहस्राण्यग्नयोऽर्कास्तेषामेकैक एव तावान् यावानसौ पूर्व

सा वाक् प्राणमसृजत। सोऽयं प्राणः सृष्ट आविरबुभूषन्नि
मूर्ततरः। स आत्मानमन्वैच्छत्स तपोऽतप्यत स प्रामूर्च्छत्स षट्त्रि
सहस्राण्यपश्यदात्मनोऽग्नीनर्कान्प्राणमयान्प्राणचितः। ते प्राणेनैव
प्राणेनार्चीयन्त प्राणेनैषु ग्रहा अगृह्यन्त प्राणेनास्तुवत प्राणेनाः
यत्किं च यज्ञे कर्म क्रियते यत्किं च यज्ञियं कर्म प्राणेनैव तेषु तत् प्र
प्राणचित्सु प्राणमयमक्रियत। तद्यत्किं चेमानि भूतानि प्राणेन
तेषामेव सा कृतिः। तानेवादधति तांश्चिन्वन्ति तेषु ग्रहान् गृह्ण
स्तुवते तेषु शँसन्त्येतावती वै प्राणस्य विभूतिरेतावती विसृष्टि
प्राणः। षट्त्रिँशत् —

स प्राणश्चक्षुरसृजत। तदिदं चक्षुः सृष्टमाविरबुभूषन्निरुक्ततरं मू
तदात्मानमन्वैच्छत्तत्तपोऽतप्यत तत्प्रामूर्च्छत् तत्षट्त्रिँशतँस
पश्यदात्मनोऽग्नीनर्कांश्चक्षुर्मयांश्चक्षुश्चितः। ते चक्षुषैवाधीयन्त चक्षुषा
चक्षुषैषु ग्रहा अगृह्यन्त चक्षुषास्तुवत चक्षुषाशँसन् यत्किं च यः
क्रियते यत्किं च यज्ञियं कर्म चक्षुषैव तेषु तच्चक्षुर्मयेषु चक्षुश्चित्सु चक्
क्रियत। तद्यत्किं चेमानि भूतानि चक्षुषा पश्यन्ति तेषामेव सा कृ
तानेवादधति तांश्चिन्वन्ति तेषु ग्रहान् गृह्णन्ति तेषु स्तुवते तेषु शँ
तावती वै चक्षुषो विभूतिरेतावती विसृष्टिरेतावच्चक्षुः। षट्त्रिँशत्–

तच्चक्षुः श्रोत्रमसृजत। तदिदँश्रोत्रँसृष्टमाविरबुभूषन्निरुक्त
तरम्। तदात्मानमन्वैच्छत्तत्तपोऽतप्यत तत्प्रामूर्च्छत्। तत्षट्त्रिँश

द्दात्मनोऽग्नीनर्कांञ्छ्रोत्रमयाञ्छ्रोत्रचितः । ते श्रोत्रेणैवाधीयन्त
ोयन्त श्रोत्रेणैषु ग्रहा अगृह्णन्त श्रोत्रेणास्तुवत श्रोत्रेणाशँसन् ।
ज्ञे कर्म क्रियते यत्किं च यज्ञियं कर्म श्रोत्रेणैव तेषु तच्छ्रोत्रमयेषु
षु श्रोत्रमयमक्रियत । तद्यत्किं चेमानि भूतानि श्रोत्रेण शृण्वन्ति
सा कृतिः । तानेवादधति तांश्चिन्वन्ति तेषु ग्रहान् गृह्णन्ति तेषु
षु शँसन्त्येतावती वै श्रोत्रस्य विभूतिरेतावती विसृष्टिरेता-
[ । षट्त्रिँशत् — ॥ ७ ॥

च्छ्रोत्रं कर्मासृजत । तत्प्राणानभिसममूर्च्छदिमँ संदेघ(?)मन्नसंदेह-
ै कर्मर्ते प्राणेभ्यः । अकृत्स्ना उ वै प्राणा ऋते कर्मणः ॥ ८ ॥

दिदं कर्म सृष्टमाविरबुभूषत् । निरुक्ततरं मूर्ततरम् तदात्मान-
त्तपोऽतप्यत तत्प्रामूर्च्छत् । तत्षट्त्रिँशतँ सहस्राण्यपश्यदात्मनो-
न्कर्ममयान्कर्मचितः । ते कर्मणैवाधीयन्त कर्मणाचीयन्त कर्मणैषु
ह्यन्त कर्मणास्तुवत कर्मणाशँसन् । यत्किं च यज्ञे कर्म क्रियते यत्किं
कर्म कर्मणैव तेषु तत्कर्ममयेषु कर्मचित्सु कर्ममयमक्रियत । तद्यत्किं
भूतानि कर्म कुर्वते तेषामेव सा कृतिः । तानेवादधति तांश्चिन्वन्ति
न्गृह्णन्ति तेषु स्तुवते तेषु शँसन्त्येतावती वै कर्मणो विभूति-
विसृष्टिरेतावत्कर्म । षट्त्रिँशत् — ॥ ९ ॥

त् कर्माग्निमसृजत । आविस्तरां वा अग्निः कर्मणः । कर्मणा ह्येनं
कर्मणेन्धते ॥ १० ॥

ोऽयमग्निः सृष्ट आविरबुभूषत् निरुक्ततरो मूर्ततरः । स आत्मान-
स तपोऽतप्यत स प्रामूर्च्छत् स षट्त्रिँशतँ सहस्राण्यपश्यदात्मनो-

---

कर्मचितः वागिन्द्रियातिरिक्तकर्मेन्द्रियव्यापाराः ।

अग्निचितः जाठराग्निव्यापाराः ।

ोनर्कानग्निमयानग्निचितस्तेऽग्निनैवाधीयन्ताग्निनाचीयन्ताग्निनैषु ग्र
गृह्यन्ताग्निनास्तुवताग्निनाशंसन् यत्किं च यज्ञे कर्म क्रियते यां
यज्ञियं कर्माग्निनैव तेषु तदग्निमयेष्वग्निचित्स्वग्निमयमक्रियत
।किं चेमानि भूतान्यग्निमिन्धते तेषामेव सा कृतिः। तानेवादधति तांि
न्ति तेषु ग्रहान्गृह्णन्ति तेषु स्तुवते तेषु शंसन्त्येतावती वा अग्नेर्विभूा
ावती विसृष्टिरेतावानग्निः । षट्त्रिंशत्सहस्राण्यग्नयोऽर्कास्तेषामेकै
तावान् यावानसौ पूर्वः ॥ ११ ॥

ते हैते विद्याचित एव । तान् हैतानेवंविदे सर्वदा सर्वाणि भूता
न्वन्त्यपि स्वपते ।

---

ते हैते विद्याचित एव । एते मनश्चिदादयः सर्वेऽपि विद्याचि
ार्थाः चित इत्यर्थः । न तु मनश्चिदादीनामेव विद्यारूपचित्त्वं बोध्यते । त
द्धत्वेन विद्याचित एवेत्यवधारणवैयर्थ्यप्रसङ्गात् । अतो विद्याचित एवेत्यर
ामयमानसग्रहादेः क्रियामयद्वादशाहादिक्रत्वर्थत्ववत् विद्यामयस्य मनश्चिदा
क्रस्य क्रियामयक्रत्वर्थत्वस्य प्रतिषेधार्थत्वमेव ॥

तान् ह—स्वपते । एवंविदे विद्यामयक्रतुमते जाग्रते स्वपते च सर्वा
नि सर्वदा अग्निं चिन्वन्तीत्यर्थः । सार्वकालिकसर्वभूतकर्तृकमनोव्यापार
त्वदृष्टिविशिष्टा विद्यावत्पुरुषशेषभूताः चयनरूपा एवासन्नित्यर्थः । अत्र सर्व
कर्तृकसर्वकालव्यापिमनोव्यापाररूपाग्नेः परिमितकालकर्तृकक्रियामयक्रत्वनुप्रवेश
र्थ्यात् विद्यामयक्रतावनुप्रवेशसामर्थ्याच्च मनश्चिद्रूपोऽग्निः न मानसग्रहव
ामयक्रत्वनुप्रवेशी ; अपि तु विद्यामयक्रत्वनुप्रवेशीति द्रष्टव्यम् । ते है

---

तस्य सिद्धत्वेनेति । "वाङ्मनश्चक्षुरादिव्यापाराणामिष्टकादिवत् चयनानुपपत्तेर्मन
देताग्नित्वेन विद्यारूपत्वे सिद्धेपि" इति श्रीभाष्योक्तरीत्या सिद्धत्वेनेत्यर्थः ।

स्वपते इत्येतत् एवंविदे इत्यस्य विशेषणम् ।

या हैवैत एवंविदश्चिता भवन्ति ॥ १२ ॥

१०. ५. ४.

अयं वाव लोक एषोऽग्निश्चितः ।

---

चित **एवे**त्येतद्वाक्यं विवृणोति **विद्यया हैव — भवन्ति** । एवंविदः पुरुषस्य
द्यया विद्यामयेन क्रतुना संबद्धाः मनश्चिदादयः चिता भवन्तीत्यर्थः " इति
ता भाष्यकृतोक्तम् । " अत्र **विद्यये**ति विद्या प्रयोजनतया हेतुः । विद्यार्थं
इत्यर्थः " इति व्यासार्यैर्व्याख्यातञ्च । अत्र **विद्यया हैवेत** इति वाक्यस्य ते
**विद्याचित एवे**ति वाक्यविवरणरूपत्वस्य **भाष्य** एवाविष्कृतत्वात् **विद्याचित**
स्यापि विद्यार्थं चित इति पूर्वोक्त एवार्थ इत्यर्थः ॥

इति मनश्चिदाद्यग्निविद्यामयक्रतुब्राह्मणप्रकाशिका ।

अग्निलोकम्पृणाविषयाण्युपासनान्तराण्युच्यन्ते **अयं वाव — चितः** । ए
ऽग्निरयं **लोकः** भूलोक इत्यर्थः । अग्नौ भूलोकदृष्टिः कर्तव्येति यावत्

---

**विद्यार्थं चित इति पूर्वोक्त एवार्थ** इति । ननु कर्मण्यग्न्याख्यायामिति सूत्रत ए
यदादिवत् विद्याचित्पदमपि निष्पाद्यमिति विद्यार्थं चित इति कथम्? सत्यम्,
पत्र विद्यापदं न मनोव्यापारवाग्व्यापारादिगताग्नित्वभावनापरम् । अग्नित्वभावनाय
ार्थाग्न्यभेदानन्वयात् । **मनश्चितः वाक्चितः** इत्यादिपदैः व्यापारेष्वग्न्यभेदारोपस्यै
त्वात् । चित्पदार्थाग्न्यभेदारोपस्य मनोव्यापारादिगताग्नित्वभावनायां पुनरकर्तव्यत्वाच्च । अत
दं भावनाविषयव्यापारलाक्षणिकं वाच्यम् । अग्नित्वभावनारूपविद्याविषयभूताः व्यापारा
ार्थभूताश्च इत्युक्तं भवति । अत्राप्याम्रेडनमस्ति अर्थस्य । अतो **विद्यापदं** विद्याङ्ग
नोव्यापारादिपरम् । तत्र चित्पदार्थाभेदः विद्याचित्पदेनोच्यते । तथाच त एते अग्नित्वे
न्यमाना विद्यार्थव्यापारा एवेति प्रकृतपूर्ववाक्यार्थः । तत्र विद्यार्थत्वांशस्य **एव**कारेणाव
म् । एवं श्रुतौ **विद्या**पदस्य विद्यार्थव्यापारपरत्वादेव तथैवार्थविवक्षया सूत्रकारेणापि **विद्यै**
। **विद्या**पदप्रयोगः, तत्प्रतिनिर्देशरूपत्वात् पूर्वपक्षे क्रियार्थव्यापाररूपार्थे **क्रिया**पदप्रयोग
येयम् । " विद्ययेतिप्रयोजनतया हेतुः " इति **व्यासार्य**व्याख्यानमपि पर्यवसानमनुरुध्य
वेद्यार्थं चित इति विग्रहाभिप्रायेण । अनुशासनस्यानुरोद्धव्यत्वात् । **श्रीभाष्ये**पि विद्यार्थमिति
त्वा, " **विद्यया** विद्यामयेन क्रतुना संबद्धाः — चिता भवन्ती " त्यर्थभाषणं **विद्याचि**
**विद्या**पदं विद्यासंबद्धार्थे लाक्षणिकमिति स्पष्टं दर्शयति । संबन्धश्चास्मदुपपादितरीत्य
त्वरूप एव । ' विद्यया हैवैते एवंविदश्चिता भवन्ती ' तिवाक्ये **विद्यये**ति इत्थम्भूतलक्ष
। विद्यासंबद्धा एते चिता भवन्तीति भाष्यानुसारेणार्थः । अतः टीकोक्तं प्रयोजनत्वमार्थिकम्

**तस्याप एव परिश्रितो मनुष्या यजुष्मत्य इष्टकाः [ पशवः ददोहा ओषधयश्च वनस्पतयश्च पुरीषमाहुतयः समिधोऽग्निर्लोकम्पृ द्वा एतत् सर्वमग्निमेवाभिसम्पद्यते। तत् सर्वोऽग्निर्लोकम्पृणामभिसम्पद्य**

---

**तस्याप एव परिश्रितः** । 'अश्मन्नूर्जमिति परिषिञ्चती'ति विहिता रिषेचनजलेषु परिश्रिच्छब्दितेषु समुद्रजलदृष्टिः कार्येत्यर्थः । **मनुष्या यजुष्म ष्टकाः** । यजुर्मन्त्रोपधेयेष्टकासु मनुष्यत्वबुद्धिः कर्तव्येत्यर्थः । **पशवः सूददोहा ददोहाः** 'सूदपेदकः दोहाः ता अस्य सूददोहसः' इत्युपधेया इष्टकाः । अग्न्य ददोहेषु पशुत्वबुद्धिः कार्ये इत्यर्थः ।

**ओषधयश्च वनस्पतयश्च पुरीषम्** । इष्टका[1]सन्ध्याच्छादनार्थगोम ोषधिवनस्पतित्वबुद्धिः कार्येत्यर्थः । **आहुतयः समिधः** । स्थण्डिलाग्नौ त्रि णासु आहुतिषु इन्धनत्वबुद्धिः कर्तव्या । **अग्निर्लोकम्पृणा** । भूततृतीयरूपोऽ कंपृणच्छिद्रंपृणेति मन्त्रोपधेया इष्टकेत्यर्थः । 'पृण प्रीणने' इत्येतस दादिकात् लोकं पृणतीत्येतस्मिन्नर्थे मूलविभुजादित्वात् कप्रत्यये, 'लोकस्य वक्तव्यम्' इति मुमागमे स्त्रीत्वात् टापि लोकम्पृणेति रूपसिद्धिः ।

**तद्वा एतत् सर्वमग्निमेवाभिसंपद्यते** । 'अयं वाव लोक' इत्यादिनिर् लोकसमुद्रजलमनुष्यपश्वादिकं सर्वं भूततृतीयम**ग्निमेवाभिसंपद्यते** । अग्निर्ल वतीत्यर्थः। **तत् सर्वोऽग्निर्लोकम्पृणामभिसंपद्यते**। 'एषोऽग्निश्चित'इत्यादिनिर्दि र्वावयवयुक्तोऽग्निः लोकम्पृणामिष्टकां प्राप्य समाप्तो भवतीत्यर्थः । लोकम्पृणा णार्थत्वेन तदन्तत्वादग्निसमाप्तेरित्यर्थः । ततश्च सर्वाभिसंपत्तिकर्मभूते भूततृतीया र्वावयवयुक्तस्थण्डिलाग्न्यभिसंपत्तिकर्म(धर्म)भूतलोकम्पृणादृष्टिरुपपद्यत इति भावः

1. संधिच्छेदन. पा०

---

'**पृण प्रीणने**' इति पाठः शुद्धः; न तु प्रीञ प्रीणन इति । न चात्र दर्शिता प्रक्रि विकल्पाधिकरणान्तिमसूत्रश्रुतप्रकाशिकाविरुद्धेति वाच्यम् – तत्र दृश्यमानस्य टीकापाठ शुद्धत्वात् । लोकम्पृणारूपसुप्रसिद्धेष्टकाविषयत्वात् मूलस्य । लोकम्पृणाया लोकम्पृणात्वम् दम्पृणाशब्द इव चयनभूप्रदेशपूरकत्वरूपार्थे तस्य शब्दस्य व्युत्पत्तिप्रदर्शनेन कामं वर्ण्यताम् क्षितो वाक्यार्थः पुनरयमिति ।

स यो हैतदेवं वेद लोकम्पृणामेनं भूतमेतत्सर्वमभिसम्पद्यते ॥ १

अन्तरिक्षꣳ ह त्वेवैषोऽग्निश्चितः । तस्य द्यावापृथिव्योरेव संधि
श्रितः परेण ह्यन्तरिक्षं द्यावापृथिवी संधत्तः ताः परिश्रितो वयाꣳसि
मस्य इष्टका वर्षꣳ सूददोहा मरीचयः पुरीषमाहुतयः समिधो वाङ्
म्पृणा । तद्वा एतत्सर्वं वायुमेवाभिसम्पद्यते । तत्सर्वोऽग्निर्लो—॥ २

द्यौर्ह त्वेवैषोऽग्निश्चितः । तस्याप एव परिश्रितो यथा हवा इ
: समुच्छ्रित एवमिमे लोका अप्स्वन्तस्तद्या इमाँल्लोकान् परेणापस्त
श्रितो देवा यजुष्मत्य इष्टका यदेवैतस्मिँल्लोकेऽन्नं तत्सूददोहा नक्षत्रा
माहुतयः समिध आदित्यो लोकम्पृणा । तद्वाऽएतत्सर्वमादित्
भिसम्पद्यते । तत्सर्वोग्निर्लो —॥ ३ ॥

आदित्यो ह त्वेवैषोऽग्निश्चितः । तस्य दिश एव परिश्रितस्
श्च त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतान्यादि
: समन्तं परियन्ति रश्मयो यजुष्मत्य इष्टकास्ताः षष्टिश्चैव त्रीणि
नि भवन्ति षष्टिश्च ह वै त्रीणि च शतान्यादित्यस्य रश्मयस्तद्यत्परिश्रि
ष्मतीः प्रत्यर्पयति रश्मींस्तद्दिक्षु प्रत्यर्पयत्यथ यदन्तरादिशश्च रश्मि
सूददोहा अथ यद्दिक्षु च रश्मिषु चान्नं तत्पुरीषं ता आहुतयस्
धोऽथ यद्दिश इति च रश्मय इति चाख्यायते तल्लोकम्पृणा । त
त्सर्वं दिश इति चैव रश्मय इति चाख्यायते । तत्सर्वोऽग्निर्लो—॥ ४

नक्षत्राणि ह त्वेवैषोऽग्निश्चितः । तानि वा एतानि सप्तविꣳश
त्राणि सप्तविꣳशतिः सप्तविꣳशतिर्होपनक्षत्राण्येकैकं नक्षत्रमनूपतिष्ठ
ने सप्त च शतानि विꣳशतिश्चाधिषट्त्रिꣳशत्ततो यानि सप्त च शत

स यो हैतदेवं — सर्वमभिसंपद्यते । एवम् उक्तेन प्रकारेण ए
मग्निम्—लिङ्गव्यत्ययश्छान्दसः—लोकम्पृणां यो वेद, एनं विद्वांसम् एतत्
मभिसंपद्यते । शेषभूततया आश्रयतीत्यर्थः । एवमुत्तरेष्वपि । उत्तरत्रोपयोगमा
र्गो लिख्यते ।

विँ शतिश्चेष्टका एव ताः षष्टिश्च त्रीणि च शतानि परिश्रितः
त्रीणि च शतानि यजुष्मत्योऽथ यान्यधिषट्त्रिँ शत्स त्रयोदशो म
आत्मा त्रिँ शदात्मा प्रतिष्ठा द्वे प्राणा द्वे शिर एव षट्त्रिँ श्यौ त
भवतो द्व्यक्षरँ हि शिरोऽथ यदन्तरा नक्षत्रे तत्स्वददोहा अथ यन्नक्ष
तत्पुरीषं ता आहुतयस्ताः समिधोऽथ यन्नक्षत्राणीत्याख्यायते तल्लोकं
तद्वा एतत्सर्वँ नक्षत्राणीत्येवाख्यायते । तत्सर्वोऽग्निर्लो — ॥ ५ ॥

ता वा एता एकविँ शतिर्बृहत्यः । एकविँ शो वै स्वर्गो
बृहती स्वर्गो लोकस्तदेष स्वर्गं लोकमभिसम्पद्यत एकविँ शं च
बृहतीं च छन्दः ॥ ६ ॥

छन्दाँ सि ह त्वेवैषोऽग्निश्चितः । तानि वा एतानि सप्त छन्द
चतुरुत्तराणि तृचानि तेषाँ सप्त च शतानि विँ शतिश्चाक्षरा
ट्त्रिँ शत्ततो यानि सप्त च शतानि विँ शतिश्चेष्टका एव ताः ष
त्रीणि च शतानि परिश्रितः षष्टिश्च त्रीणि च शतानि यजुष्मत्
ान्यधि षट्त्रिँ शत्स त्रयोदशो मासः स आत्मा त्रिँ शदात्मा प्रति
ाणा द्वे शिर एव षट्त्रिँ श्यौ तद्यत्ते द्वे भवतो द्व्यक्षरँ हि शिरः ॥ ७

तस्यै वा एतस्यै षट्त्रिँ शदक्षरायै बृहत्यै यानि दश प्रथमा
राणि सा दशाक्षरैकपदाथ यानि विँ शतिः सा विँ शत्यक्षरा द्विप
ानि त्रिँ शत्सा त्रिँ शदक्षरा विराडथ यानि त्रयस्त्रिँ शत्सा त्रयस्
दक्षराथ यानि चतुस्त्रिँ शत्सा चतुस्त्रिँ शदक्षरा स्वराडथ यत्सर्वैश्छ
रयमग्निश्चितस्तदतिच्छन्दास्ता उ सर्वा इष्टका एवेष्टकेति त्रीण्यक्षर
पदा गायत्री तेनैष गायत्रोऽग्निर्मृदाप इति त्रीण्यक्षराणि त्रिपदा गाय
ा एवैष गायत्रोऽथ यदन्तरा छन्दसी तत्स्वददोहा अथ यच्छन्दस्स्
पुरीषं ता आहुतयस्ताः समिधोऽथ यच्छन्दाँ सीत्याख्यायते तल्ल
ृणा । तद्वाएतत्सर्वँ छन्दाँ सीत्येवाख्यायते । तत्सर्वोऽग्निर्लो — ॥ ८

ता वा एता एकविँ शतिर्बृहत्यः । एकविँ शो वै स्वर्गो लो

स्वर्गो लोकस्तदेष स्वर्गं लोकमभिसम्पद्यत एकविꣳशं च स्तोमं च छन्दः ॥ ९ ॥

संवत्सरो ह त्वेवैषोऽग्निश्चितः। तस्य रात्रय एव परिश्रितस्ताः त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतानि संवत्सरस्य ऽहानि यजुष्मत्य इष्टकास्ताः षष्टिश्चैव त्रीणि च शतानि भवन्ति ह वै त्रीणि च शतानि संवत्सरस्याहान्यथ या अमूः षट्त्रिꣳशदि- ग्रतियन्ति यः स त्रयोदशो मास आत्माऽर्धमासाश्च ते मासाश्च चतु- तिरर्धमासा द्वादश मासा अथ यदन्तराहोरात्रे तत्सूददोहा अथ यद- ध्वन्नं तत्पुरीषं ता आहुतयस्ताः समिधोऽथ यदहोरात्राणीत्याख्यायते कम्पृणा। तद्वा एतत्सर्वमहोरात्राणीत्येवाख्यायते। तत्सर्वोऽ- — ॥ १० ॥

ता वा एता एकविꣳशतिर्बृहत्यः। एकविꣳशो वै स्वर्गो लोको स्वर्गो लोकस्तदेष स्वर्गं लोकमभिसम्पद्यते एकविꣳशं च स्तोमं च छन्दः ॥ ११ ॥

आत्मा ह त्वेवैषोऽग्निश्चितः। तस्यास्थीन्येव परिश्रितस्ताः षष्टिश्च च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतानि पुरुषस्यास्थीनि ो यजुष्मत्य इष्टकास्ताः षष्टिश्चैव त्रीणि च शतानि भवन्ति षष्टिश्च त्रीणि च शतानि पुरुषस्य मज्जानोऽथ या अमूः षट्त्रिꣳशदिष्टका न्ति यः स त्रयोदशो मास आत्मा प्राणः स तस्य त्रिꣳशदात्मन्विधाः यां द्वे प्राणेषु द्वे शीर्षन्द्व तद्यत्ते द्वे भवतो द्विकपालꣳ हि शिरोऽथ नि पर्वाणि संततानि तत्सूददोहा अथैतत्तूयं येनायमात्मा प्रच्छन्नो वश्वाꣳसमिति तत्पुरीषं यत्पिबति ता आहुतयो यदश्नाति ताः समि- यदात्मेत्याख्यायते तल्लोकम्पृणा। तद्वा एतत्सर्वमात्मेत्येवाख्यायते। ोऽग्निर्लो — ॥ १२ ॥

ता वा एता एकविꣳशतिर्बृह — ॥ १३ ॥

सर्वाणि ह त्वेव भूतानि सर्वे देवा एषोऽग्निश्चितः । आपो
देवाः सर्वाणि भूतानि ता हैता आप एवैषोऽग्निश्चितस्तस्य नाव्
परिश्रितस्ताः षष्टिश्च त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्री
शतान्यादित्यं नाव्याः समन्तं परियन्ति नाव्या उ एव यजुष्मत्य इष्ट
षष्टिश्चैव त्रीणि च शतानि भवन्ति षष्टिश्च ह वै त्रीणि च शतान्
नाव्या अभिक्षरन्त्यथ यदन्तरा नाव्ये तत्स्वददोहा अथ या अमूः ष
शदिष्टका अतियन्ति यः स त्रयोदशो मास आत्मा अयमेव स
हिरण्मयः पुरुषः ॥ १४ ॥

तस्यैते प्रतिष्ठे रुक्मश्च पुष्करपर्णं चापश्चादित्यमण्डलं च
बाहू ताविन्द्राग्नी द्वे स्वयमातृण्णे इयं चान्तरिक्षं च तिस्रो विश्व
एता देवता अग्निर्वायुरादित्य एता ह्येव देवता विश्वं ज्योतिर्द्वादश
स संवत्सरः स आत्मा पञ्च नाकसदः पञ्च पञ्चचूडाः स यज्ञस्ते दे
यद्विकर्णी च स्वयमातृण्णा चाश्मा पृश्निर्यश्चितेऽग्निर्निधीयते स
त्रिँशी लोकम्पृणायै यजुः षट्त्रिँशी सोऽस्यैव सर्वस्यान्नमेवात्मा
सर्वासामपां मध्ये स एष सर्वैः कामैः सम्पन्न आपो वै सर्वे काम
एषोऽकामः सर्वकामो न ह्येतं कस्य चन कामः ॥ १५ ॥

तदेष श्लोको भवति —

विद्यया तदारोहन्ति यत्र कामाः परागताः ।
न तत्र दक्षिणा यन्ति नाविद्वाँसस्तपस्विनः ॥ इति ।

---

**विद्यया तदारोहन्तीति** । अत्र चित्याग्निविद्याप्रकरणे देवयानश्रवणं प्रासङ्गिकम् अ
परविद्याप्रकरणान्वयि स्यात् इति कार्याधिकरणश्रुतप्रकाशिकायामुक्तम् । अत्र अहीन
त्वस्य, 'तिस्र एव साह्नस्योपसदः, द्वादशाहीनस्य' इति ज्योतिष्टोमप्रकरणे द्वादशोपसत्त्व
अहीनपदमुख्यार्थानुरोधेन प्रकृतज्योतिष्टोमानन्वितस्य तस्य द्वादशोपसत्त्वस्य अहीने उ
(३-३-८) पूर्वमीमांसोक्तन्यायादित्यर्थः । तथा च विद्यया देवयानप्राप्तिर्यादृशे अकाम
संपन्ने सति संभाव्या, तादृशमकामत्वं चित्याग्निविद्यया सर्वकामसंपन्नस्य भवति क्रमेण
भिमतः स्यात् ।

हैव तं लोकं दक्षिणाभिर्न तपसाऽनेवंविदश्नुते । एवंविदाँ हैव ॥ १६ ॥

श्रं पुरीषम् चन्द्रमा आहुतयो नक्षत्राणि समिधो यच्चन्द्रमा त्याहुतिस्तत्समिधि वसत्येतद्वा आहुतेरन्नमेषा प्रतिष्ठा तस्मा- क्षीयते एतद्ध्यस्या अन्नमेषा प्रतिष्ठाऽथ यद्देवा इत्याख्यायते पृणा । तद्वा एतत्सर्वं देवा इत्येवाख्यायते ॥ १७ ॥

एतदृचाऽभ्युक्तम् — विश्वे देवा अनु तत्ते यजुरिति । सर्वाणि ह्यत्र स देवा यजुरेव भवन्ति । तत्सर्वोऽग्निर्लोकम्पृणामभिसम्पद्यते । हैतदेवं वेद लोकम्पृणामेनं भूतमेतत्सर्वमभिसम्पद्यते ॥ १८ ॥

ता एताः एकविँशतिर्बृहत्यः । एकविँशो वै स्वर्गो लोको स्वर्गलोकस्तदेव स्वर्गं लोकमभिसम्पद्यत एकविँशं च स्तोमं च छन्दः ॥ १९ ॥

---

## १०. ५. ५.

कुश्रिर्ह वाजश्रवसोऽग्निं चिक्ये । तँ होवाच सुश्रवाः कौष्यो गौतम ! मचैषीः, प्राञ्चमेनमचैषीः प्रत्यञ्चमेनमचैषीर्न्यञ्चमेनमचैषीरुत्तान- चैषीः ॥ १ ।

यद्यु हैनं प्राञ्चमचैषीः, यथा पराच आसीनाय पृष्ठतोऽन्नाद्यमुपा- , तादृक् तत् न हविः प्रतिग्रहीष्यति ॥ २ ॥

यद्यु वा एनंप्रत्यञ्चमचैषीः, कस्मादस्य तर्हि पश्चात्पुच्छम- : ॥ ३ ॥

यद्यु वा एनं न्यञ्चमचैषीः । यथा नीचः शयानस्य पृष्ठेऽन्नाद्यं पयेत तादृक् तन्नैवं हविः प्रतिग्रहीष्यति ॥ ४ ॥

यद्यु वा एनमुत्तानमचैषीः, न वा उत्तानं वयः स्वर्गं वहति, न त्वा स्वर्गं लोकमभिवक्ष्यत्यस्वर्ग्य उ ते भविष्यतीति

स होवाच — प्राञ्चमेनमचैषं प्रत्यञ्चमेनमचैषं न्यञ्चमेनम मेनमचैषँ सर्वा अनु दिश एनमचैषमिति ॥ ६ ॥

स यत्प्राञ्चं पुरुषमुपदधाति । प्राच्यौ स्रुचौ तत्प्राङ् यत्प्रत्यञ्चं कूर्ममुपदधाति प्रत्यञ्चि पशुशीर्षाणि तत्प्रत्यङ् चीयते कूर्ममुपदधाति न्यञ्चि पशुशीर्षाणि नीचीरिष्टकास्तन्न्यङ् चीयते पुरुषमुपदधात्युत्ताने स्रुचावुत्तानमुलूखलमुत्तानामुखां तदुत्ता यत्सर्वा अनु दिशः परिसर्वमिष्टका उपदधाति तत्सर्वतश्चीयते

अथ ह कोषा धावयन्तः निरूढशिरसमग्निमुपाधावय हैक उवाच श्रीर्वै शिरः श्रियमस्य निरौहीत् सर्वज्यानिं ज्यास्य ह तथैवास ॥ ८ ॥

अथ हैक उवाच । प्राणा वै शिरः प्राणानस्य रौहं (क्षिप्रममुं) लोकमेष्यतीति स उ ह तथैवास ॥ ९ ॥

ऊर्ध्वो वा एष एतच्चीयते । यद्दर्भस्तम्बो लोगेष्टाः पु रुक्मपुरुषौ स्रुचौ स्वयमातृण्णा दूर्वेष्टका द्वियजूरेतःसिचौ विश्वज्योतिरषाढा कूर्मोऽथ हास्यैतदेव प्रत्यक्षतमाँ शिरो यच्चतेऽग्नि तस्मान्न निरूहेत् ॥ १० ॥

---

इदञ्च चिन्तितं गुणोपसंहारपादे । तत्र ---

मनश्चिदादयो विद्यामयाग्नयः क्रियामयक्रत्वङ्गत्वक्रिया एव विहितानां फलाकाङ्क्षायां पूर्ववत्, 'असद्वा इदमग्र आसीत्' इतीष्ट प्रस्तुतत्वात् तस्य च क्रत्वव्यभिचारित्वेन क्रतूपस्थापनात् तेन संनिहिततया, सन्निहितेन क्रतुना एकवाक्यतैव गम्यते । न क्रतोरिष्टकचिताग्न्यवरुद्धत्वात् कथं तत्र विद्यामयस्य मनश्चिदादेरग्नेः सम

विकल्पेन समावेशोपपत्तेः । न च—एककार्यत्व एव विकल्पः स्यात्, न
तःग्नेः विद्यामयमनश्चिदाद्यग्नेश्चैककार्यत्वं संभवति ; इष्टकचिताग्नि-
धारणस्य विद्यामयैर्मनश्चिदादिभिः कर्तुमशक्यत्वात् - इति वाच्यम् —
प्रतिषेधात्' इति सूत्रे वार्तिके, 'पशुकामश्चिन्वीते' त्यग्नेः पश्वर्थत्वश्रवणात्
क्षणफले विद्यामयस्यापि साधनत्वसंभवात् विकल्पोपपत्तेः । न च विद्यारूपस्य
न दृष्टमिति वाच्यम् — द्वादशाहे दशमेऽहनि अविवाक्यनामके विहि-
सग्रहस्य विद्यामयस्यापि क्रियामयक्रत्वङ्गत्वदर्शनात । किञ्च, 'तेषामेकैक
न् यावानसौ पूर्वः' इति विद्यामयेषु मनश्चिदादिषु इष्टकचिताग्निकार्याति-
द्देव क्रियामयक्रतूपकारकाः — इति, "पूर्वविकल्पः प्रकरणात् स्यात् क्रिया
", "अतिदेशाच्च" इति द्वाभ्यां सूत्राभ्यां पूर्वपक्षं प्रापय्य सिद्धान्तितम् —
"विद्यैव तु निर्धारणात् दर्शनाच्च" । मनश्चिदादिः विद्यैव = विद्यामय-
त्यर्थः । विद्यारूपत्वस्य पूर्वपक्षेऽपि सत्त्वेन तस्य असाधनीयतया विद्या-
द्यामयक्रतुशेषत्वार्थकत्वस्यैव युक्तत्वात् । निर्धारणात् = 'विद्याचित एव' इति

---

र्तिके — **पश्वर्थत्वश्रवणा**दिति । वार्तिकतः पश्वर्थत्वस्यावगमादित्यर्थः । ननु
तस्थण्डिलविशेषरूपाग्नौ आहवनीयरूपाग्निनिक्षेपेण तत्र होमकरणात् अस्ति स्थण्डिलस्य
ः । ईदृशस्थण्डिलमन्तरेणापि यागः क्रियताम् । तदा उत्तरवेदिमात्रमाहव-
। चयनपक्षे उत्तरवेद्याऽस्य समुच्चयः । तत्र, श्येनचितं चिन्वीत स्वर्गकामः इत्यादि-
स्थण्डिलगतश्येनाकारतादेः फलं स्वर्गादीत्यपीष्यते । अथापि इष्टकचितस्याग्नेरपि
र्थत्वेऽपि आहवनीयाधारतया यागोपकारकत्वात् गुणफलसंबन्धविधावर्णनसंभवात्
इष्टचितेन फलसिद्धिः सुवचा । न हि इष्टकचितस्येवाऽऽहवनीयाधारत्वं विद्यामयस्य
अतः क्रत्वाश्रितत्वस्य दुर्वचत्वे क्रतुमध्यनिवेशायोगात् कथं तेन सह विकल्प इति
षामेकैक एव तावान् यावानसौ पूर्वः' इति वाक्येन इष्टकचितकार्ये विद्यामयविनियोगात्
ग्नधारणस्य साक्षादभावेऽपि तदध्यासमात्रस्य कार्यकारत्वस्वीकारात् । अस्तु वा
इष्टकचितस्याहवनीयाधारत्वमिव विद्यामयस्यापि अदृष्टविधया तत्; वचनबलात् ।
स्यातिभार इति न्यायात् । मानसग्रहस्य मनसैव निष्पाद्यग्रहणासादनस्तोत्रशस्त्रादिक-
स्तोत्रशस्त्रादीनां स्वरूपेणासतां ज्ञानस्य वास्तवस्तोत्रशस्त्रादिवत् क्रतूपकारकल्पनवदिहापि
संभवात । अग्निरहस्ये कर्मकाण्डे एषामनुबन्धादेव प्रकरणात् क्रतूपकारकल्पनं हि
पूर्वपक्ष्याशयात् । **विद्याशब्दस्ये**ति । सूत्रे लाक्षणिकविद्याशब्दप्रयोगः **विद्याचित**
अनुरोधेनेति तदर्थविचारावसरे दर्शितमनुसंधेयम् ।

निर्धारणादित्यर्थः । विद्यामयानामेव मनश्चिदादीनां विद्याचित एवेत्युक्ति
णोऽपि विद्यामयत्वमेव ; न क्रियामयत्व ' मिति प्रतिपादयति । न च
एव क्रतुरिति अत्र न दृश्यत इति वाच्यम् — ' यत किञ्च यज्ञे कर्म ि
किञ्च यज्ञियं कर्मे ' ति वाक्येन यज्ञानां तदङ्गानाञ्च मनोमयत्वप्रतिपादनेन
क्रतोर्दर्शनाच्च विद्यामयक्रतुशेषत्वमेवेत्यर्थः ।

ननु, ' यत् किञ्च यज्ञे कर्म क्रियते यत् किञ्च यज्ञियं कर्म, म
तन्मनोमयेषु मनश्चित्सु मनोमयमक्रियत ' इत्यत्र विद्यामयक्रतुप्रतीतावपि ः
श्रवणात् न विद्यामयक्रतुशेषता ; अपितु पूर्वप्रस्तुतेष्टकचिताग्न्युपस्थितत्व
मयशेषतैवोचिता । अतो विद्यामयक्रतुशेषता बाध्यत इत्यत्राह —

" श्रुत्यादिबलीयस्त्वाच्च न बाधः " । श्रुतिलिङ्गवाक्यानां प्रकरण
यस्त्वेन श्रुत्याद्यवगतस्य विद्यामयक्रत्वन्वयस्य प्रकरणेन न बाधः कर्तुं
' विद्यया हैवेते एवंविदश्चिता भवन्ती ' ति वाक्यगता विद्ययेति
श्रुतित्वेन विवक्षिता । ननु तृतीयायाः शेषत्वश्रुतित्वेऽपि न शेषित्वश्रु
अतो विद्ययेति तृतीयाश्रुत्या न विद्यामयक्रतोः शेषित्वं प्रतिपादयितुं श
चेत्— तर्हि, ' ते हैते विद्याचित एव । विद्यया हैवैते एवंविदश्चिता ग
वाक्यद्वयगत एवकारः श्रुतित्वेन विवक्षितोऽस्तु । ततश्च एवकारश्रुत्या ि

---

विध्यश्रवणादिति । नात्र विद्यामयक्रतुस्वरूपविधायकवाक्याभावो विवक्षित
सद्भावविचारस्य, ' अनुबन्धादिभ्यः ' इत्युपरितनसूत्रे कार्यत्वात् । किन्तु पूर्वमुक्तं ि
प्रति उक्तविधानामग्नीनामङ्गत्वबोधको विधिर्न श्रूयत इति । तथाच विनियोजका
न तदङ्गत्वम् । क्रियामयक्रत्वङ्गत्वं तु प्रकरणरूपप्रमाणाद्भवतीति भावः ।

**न शेषित्वश्रुतित्वमिति** । शेषित्वमुद्देश्यत्वम् ; शेषत्वञ्च तदतिरिक्तकृति
तत् यया विभक्त्या शक्त्योच्यते, सा श्रुतिः । अतो द्वितीयाविभक्तिः शेषित्वे श्रुि
व्रीहीनवहन्तीति । तृतीया तु तदतिरिक्तकरणत्वरूपकारकवाचिनीति अङ्गत्वे श्रुि
व्रीहिभिर्यजेतेति । न च विद्याया अङ्गत्वमिहेष्टम् । अतः करणत्वरूपमर्थमुपेक्ष्य प्रयोजन
विवक्षया हेतौ तृतीयेयम् । स चार्थो लाक्षणिको न करणत्ववत् मुख्य इति न तस्य
मानत्वमिति भावः । इत्थम्भूतलक्षणतृतीयापक्षेऽप्येवं श्रुतित्वाभाव एव ।

मयक्रतुशेषत्वे व्युदस्ते विद्यामयक्रतुशेषत्वमर्थात् सिध्यति   तथा, 'तान्
दे सर्वाणि भूतानी' ति सर्वभूतसर्वकालव्यापिचयनस्य मनसा संपाद्यस्य
तृकक्रियामयक्रत्वनुप्रवेशासामर्थ्यात् सामर्थ्यलक्षणलिङ्गविरोधेन क्रियामय-
ो व्युदस्ते विद्यायक्रतुशेषत्वं सिद्ध्यति । तथा, 'एवंविदे सर्वाणि भूतानि
ति विद्यासमभिव्याहाररूपवाक्यवशादपि विद्यामयक्रतुशेषत्वसिद्धिः । ननु
इति चतुर्थीश्रुत्यैव विद्यायाः शेषित्वावगमात् समभिव्याहारलक्षणवाक्यस्य
तुशेषत्वबोधकत्वं कुतोऽभ्युपेयमिति चेत्—एवंविदे इति चतुर्थीश्रुत्या
शेषित्वबोधनेऽपि विद्यायाः शेषित्वाबोधनेन वाक्येनैव विद्यामयक्रतोः
बोधनीयत्वात् ।

ननु विद्यामयक्रतौ विध्यनुपलम्भात् कथं तच्छेषत्वमित्यत्राह, "अनु-
यः प्रज्ञान्तरपृथक्त्ववद् दृष्टश्च तदुक्तम्" । यज्ञानुबन्धिग्रहस्तोत्र-
ाम्, 'मनसाऽस्तुवत मनसाऽशंसन्' इत्यादिना आम्नातत्वात् तेषाञ्च

---

र्थात् सिद्ध्यतीति । ननु एवकारसमभिव्याहृतेन पदेन यत्र यत्संबन्धो यो बोध्यते,
यतादृशसंबन्धनिषेध एवकारेण क्रियते । यथा भूतल एव घट इत्यत्र घटस्य भूतल-
ोध्यमाने तदन्यवृत्तित्वनिषेधः तत्रैवकारेण । एवञ्चेह यदि विद्याशेषत्वमग्नीनां न
एवकारेण तदन्यक्रियामयक्रतुशेषत्वं न निषिध्येत । यदि च तदर्थं साक्षात् तद् बोध्यते,
त् सिद्धिरिति कथमुच्यत इति चेत्—उच्यते । **विद्याचित एवे**त्यत्र विद्याचिच्छब्दः
मेषां न स्पष्टमाह । तदर्थश्च संदिग्धः । एवकारस्य पूर्वोक्तरीत्या कश्चिदर्थो निश्चितः ।
ाचित्पदस्य यादृशार्थस्वीकारे एवकारवैयर्थ्यं न स्यात् । तादृशोऽर्थः स्वीकार्य इति
एवकारेण विद्येतराङ्गत्वनिषेधे क्रियमाणे तस्य सार्थक्यमित्यवधार्य विद्याचित्पदेन
वाबोधने एवकारेण तदर्थोक्त्यसम्भवात् पूर्वोक्तरीत्या एवकारार्थसिद्ध्यर्थमेव विद्याचित्पदं
ा पश्चादवधार्यते । अतो**ऽर्थात् सिद्ध्यती**त्युक्तम् । 'सिद्ध्यतु नाम तथैव । अथापि
दमेव श्रुतिरस्तु' इति चेन्न—विवक्षितस्यार्थस्य लक्षणयैव लभ्यतया तत्र तस्य श्रुतित्वा-
**एवकार** एव तु श्रुतिः । अन्यसंबन्धनिषेधरूपमुख्यार्थकत्वात् । अतः सूत्रे श्रुतिपदमेव-
ति ।

त्वव्यभिचारित्वात्, क्रियामयस्य च क्रतोरसंभवस्योक्तत्वात् विद्यामयक्रतुविधिरुद्ध
था 'स यदि सोमं बिभक्षयिषेत् न्यग्रोधस्तिभिनीराहृत्य ताः संपिष्य दधन्युन्मृज्य
क्षं प्रयच्छेत्; न सोमम्' इति। अत्र यागार्थद्रव्यसंस्कारभक्षणसंगत्या स्तिभिनी
नीषु ?) यागान्वयकल्पनस्य दृष्टत्वात्। अनुबन्धादीति आदिशब्देन श्रुत्यादयः
ह्यन्ते। प्रज्ञान्तरपृथक्त्ववत्। यथा प्रज्ञान्तरं दहरविद्यादिकं क्रियामयात्
थग्भूतं श्रुत्यादिभिरवगम्यते, एवमनुबन्धादिभिर्विद्यामयः क्रतुः कल्प्यत इ
ष्टश्चानुवादसरूपेषु कल्प्यमानो विधिः। तदुक्तम्, 'वचनानि त्वपूर्वत्वात्'

ननु, 'तेषामेकैक एव तावान् यावानसौ पूर्वः' इत्यतिदेशेन प्रकृ
चेताग्नितुल्यत्वावगमात् क्रियामयक्रत्वनुप्रवेशोऽवगम्यत इति चेत्—तत्राह
ामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः"। न ह्यतिदेशबलात् सर्वथा

---

**क्रतोरसंभवस्ये**ति। क्रतोरेतदङ्गित्वासंभवस्येत्यर्थः। **यथे**त्यादि। **न सो**
त्यत्र एतद् वाक्यं समाप्तम्। उपरि **अत्रे**त्यादि तदुपपादकवाक्यान्तरम्। 'स्ति
लानि। 'तद् यत्रैतत् सोमं क्रीणीयात्, तदेतानि फलानि क्रीणीया' दिति बह्वृचब्रा
ति **सोमनाथीये**। अत एव स्तिभिनीचमसस्य फलचमस इति सौत्रं नामेति द्र
**ष्टत्वा**दिति। अयं भावः — राजन्यवैश्यान्यतरकर्तृके सोमयागे राज्ञे वैश्याय वा य
सोमं भक्ष्यत्वेन दद्यात्; किंतु दधिमिश्रन्यग्रोधफलरसम्। सोमवत् फलान्यप
पिष्य दध्ना संसृज्य तं संपादयेदिति प्रकृतवाक्ये श्रूयते। किमत्र यागं सोमेन क
जमानाय फलरसो भक्षणाय परमुपयोक्तव्यः, किं वा अनेन यागोऽपि कार्य इति म
तीयपञ्चमे, 'फलचमस' इत्यादिभिः सूत्रैः (४७–५१)। सिद्धान्तितश्चैवम्—'न सोमम
ोमरसभक्षणस्य बाधनात् तस्य च यागोपयुक्तद्रव्यसंस्कारकतया प्रतिपत्तिकर्मत्वात् फलरस
ापि प्रतिपत्तिकर्मत्वप्रतीत्या, यागोपयोगाभावे च प्रतिपत्तित्वासिद्धेः एतत्साध्ययागविधिर
ति। अतो यजमानसंबन्धिचमसे गृहीतः फलरसः सोमयागाङ्गत्वेन विधीयते विधिव
ोमबाधेन; सोमद्रव्यकस्य फलद्रव्यकत्वायोगात्। तद्वदिहापि मानसग्रहस्तोत्रश
्यामयक्रतुनिवेशानर्हस्य विद्यामयक्रत्वङ्गत्वस्य एषितव्यतया विधिकल्पनेति। अत्रायं वि
त्र स्थित एव सोमयागे सोमबाधेन फलद्रव्यविनियोगविधिमात्रम्, इह तु विद्यामयक्र
धिरपीति। एवमप्यविशिष्टा विधिकल्पनोभयत्र।

फलचमसस्थलमिदं विधिकल्पनोदाहरणतया वैशद्यार्थमुक्तम्। न त्विह सूत्रे तद्वि
त्र फलचमसयागसंबन्धस्येवात्र विद्यामयक्रतुतत्संबन्धयोरत्यन्ताश्रुतत्वाभावात्। 'यत् कि
मे क्रियते यत् किञ्च यज्ञियं कर्म – मनोमयमक्रियते' ति श्रवणात्। विधिः परं न श्
तः ईदृशस्थलान्तराभिप्रायेण दृष्टश्चेति सूत्रखण्डं व्याख्याति **दृष्टश्चे**त्यादिना।

१०. ५. ६.

## [ वैश्वानरविद्या ]

**अथ हैतेऽरुणे औपवेशौ समाजग्मुः सत्ययज्ञः पौलुषिर्महाशालो ो बुडिल आश्वतराश्विरिन्द्रद्युम्नो भाल्लवेयो जनः शार्कराक्ष्यः ।**

म्; येन क्रियामयकत्वनुप्रवेशः स्यात् । स्वशेषिभूतक्रतुद्वारा फलजनकत्वरूप-
ासामान्यमात्रेणाप्यतिदेश उपपद्यते । 'स एष एव मृत्युर्य एष एतस्मिन् मण्डले
इत्यत्र संहर्तृत्वसामान्यविवक्षयाऽपि मृत्युशब्दः प्रयुक्तः । न तु सर्वथा साम्यं
या । तथात्वे मृत्युवत् मण्डलपुरुषस्यापि मृत्युलोकप्राप्तिः स्यात् । अतो
तसाधर्म्यमात्रेणापि, 'तेषामेकैक एव तावान्' इत्यतिदेशः उपपद्यते ।

"परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः" । परेण च ब्राह्मणेन
े मनश्चिदाद्यभिधायिनः शब्दस्य ताद्विध्यं=तद्विधत्वं=विद्यामयप्रतिपादकत्वमव-
। परस्मिन् हि ब्राह्मणे, 'अयं वाव लोक एषोऽग्निश्चितः । तस्याप एव परिश्रितो
यजुष्मत्य इष्टकाः' इत्यारभ्य, 'सर्वोऽग्निर्लोकम्पृणामभिसंपद्यते स यो हैतदेवं
ोकम्पृणाम् एनं भूतमेतत् सर्वमभिसंपद्यते' इति सर्वभूताभिसंपत्तिफलायाः
यकत्वनङ्गभूताया विद्यायाः प्रतिपादनदर्शनेन मनश्चिदादीनां सांपादिकाग्नीनां
ग्रामयकत्वनुप्रवेशित्वम् । ननु मनश्चिदादीनां क्रियानुबन्धाभावे अग्निरहस्ये
ण्डेऽनुबन्धः किमर्थमित्यत्राह — भूयस्त्वात्त्वनुबन्धः । मनश्चिदादिषु संपादनीया-
ग्रङ्गानां भूयस्त्वात् तत्सन्निधाविहानुबन्धः कृत इति स्थितम् ॥

इति **अग्निब्राह्मणप्रकाशिका** ।

वैश्वानरविद्या प्रस्तूयते **अथ–समियाय** । पुलुषसुतः सत्ययज्ञनामा, महा-
ो जबालासुतः, अश्वतराश्वसुतो बुडिलनामा, भाल्लविसुत इन्द्रद्युम्ननामा, शार्क-
ो जननामा **एते** पञ्चापि महर्षयः उपवेश(शि ?) सुतस्यारुणस्य समीपमागताः ।

---

**मण्डलपुरुषस्यापी**ति । विषयोऽयं पूर्वब्राह्मणस्थितः ।

**उपवेशसुतस्ये**ति । बृहदारण्यकान्ते (८-५.) अरुणः उपवेशिशिष्यत्वेनोक्तः, 'उद्दालको-
:, अरुण उपवेशः, उपवेशिः कुश्रेः' इति ।

'ह वैश्वानरे समासत । तेषाँ ह वैश्वानरे न समियाय ॥ १ ॥

ते होचुः — अश्वपतिर्वा अयं कैकेयः सम्प्रति वैश्वानरं वेद ;

---

सर्वेऽपि महर्षयः वैश्वानरे विश्वेषां नराणां नेतरि परमात्मनि समासत एकं
विचारं कृतवन्तः । तेषाञ्च वैश्वानरविषये बुद्धिर्न समियाय न सङ्गताऽभूत् =
गता । परस्परं विवदमाना एव स्थिता इत्यर्थः ॥ १ ॥

ते — प्रोवाच । केकयसुतः अश्वपतिः अधुना वैश्वानरमुपास्ते, तम

---

ते इति अरुणप्रभृतिसर्वग्रहणम् । सत्ययज्ञादयः पञ्च महर्षयश्छान्दोग्येऽपि निर्दि
अत्र महाशालजाबालस्थाने तत्र प्राचीनशाल औपमन्यवः । तत्र प्राचीनशाल इति ऋषि
प्रायप्रायन्यायानुसारेण भाष्यम् । इह महाशालपदं महागृहस्थार्थकमुक्तम् । महाशालपदमिदं
ते हैते महाशाला महाश्रोत्रियाः' इति सर्वर्षिविशेषणतया प्रयुक्तत्वात् यौगिकमवग
शालोऽयमप्यौपमन्यव एवेति अत्रोपरि औपमन्यवेति संबोधनादेव ज्ञायते । तदयञ्च प्र
लश्चैक इति युक्तम् । परमयं जाबालः छान्दोग्यसत्यकामविद्यादिप्रसिद्धो जाबालश्च य
हैं सत्यकामस्य तस्य उपमन्युः पितेति इतो विज्ञेयम् । अन्योऽप्ययं भवितुमर्हति ।
हर्षयः पञ्चेमे एव छान्दोग्येऽपि निर्दिष्टा इति सुवचम् । एवमश्वपतिः कैकेयोऽप्युभयत्र सम
गोद्दालक आरुणिः गौतम उक्तः ; अत्र तस्य पिता अरुण औपवेशिर्गौतम उक्त इति ।

एवं तत्तदुपास्यांशवर्णनेऽपि वैलक्षण्यं लक्ष्यते — तत्र मूर्धोपासक औपमन्यवः, इ
ज्ञः शार्कराक्ष्यः ; तत्र चक्षुरुपासकः सत्ययज्ञः, इहेन्द्रद्युम्नः ; तत्र प्राणोपासक इन्द्रद्युम्न
डिलः ; तत्र मध्यकायोपासको जनः, इह जाबालः ; तत्र वस्त्युपासको बुडिलः, इह स
ति । गौतमस्तूभयत्र पादोपासक एव ।

एवमुपपादनवैषम्येऽपि तत्तदुपास्याकाराणां सर्वेषां मेलनं वैश्वानरविद्यायामित्येतदुभ
शिष्टम् । अन्यांशस्यार्थवादमात्रत्वात् तद्वैषम्यं नोपास्याकारभेदमावक्ष्यति । कथावैषम्यश
रूपभेदकल्पनया वा विभिन्नवैश्वानरोपासकत्ववर्णनमात्रतात्पर्येण वा परिहार्या ।

यत्तु किञ्चित् उपास्यांशेऽपि वैलक्षण्यं प्रतीयमानम्, यथा तत्र दिव उक्तं सुतेजस्
आदित्यस्योक्तं विश्वरूपत्वस्थाने, दिवस्तु अतिष्ठात्वमिति किञ्चिदिति, — तत्र शब्दभे
अनुसंधेयोऽर्थ एकरूप एवेति श्रुतप्रकाशिकायामेव समाहितमस्ति । प्रादेशमात्रत्वं परमेव
दयितुमशक्यं भिद्यमानं विद्यायां विकल्पेन निविशते इति परिशीलनीयम् । छा
निरूपणसरणौ मूर्धादिपादान्तक्रम आदृतः, इह तु पादादिमूर्धान्तक्रम इत्यपि किञ्चित् ।
त्याद्यङ्गविस्तरश्छान्दोग्ये विशिष्यते । फलभेदशङ्काऽप्येवं परिहार्या ।

ग्रामेति । ते हाश्वपतिं कैकेयमाजग्मुः । तेभ्यो ह पृथगार्हाणि कारयाञ्चकार । स ह प्रातः संजिहान उवाच ... पृथगावसथान् पृथगर्हाणि कारयाञ्चकार ... तीः पृथक्साहस्रान्त्सोमान् प्रोवाच । ते ह प्रातरसंविदाना एव समित्पाणयः प्रतिचक्रमिरे, उप त्वा यामेति ॥ २ ॥

स होवाच-यन्नु भगवन्तोऽनूचाना अनूचानपुत्राः, किमिदमिति । ... चुर्वैश्वानरं ह भगवान्त्सम्प्रति वेद । तं नो ब्रूहीति । स होवाच—सम्प्रति ... न्वा अहं वैश्वानरं वेद । अभ्याधत्त समिधः उपेताः स्थेति ॥ ३ ॥

---

ग्रामेत्युक्त्वा तमाजग्मुः । तेभ्यः प्राप्तेभ्यः प्रत्येकं गृहान् प्रत्येकं पूजाश्च कृत्वा ... सदक्षिणैः सोमैर्यक्ष्ये । युष्मभ्यं च बहुधनं दास्यामि । तावन्तं कालमुषित्वा ... गृह्णन्तु ' इति प्रार्थयामास । ते — त्वा यामेति । ते षडपि महर्षयः अपरेद्युः काले त्वरया परस्परमसंमन्त्र्यैव समिद्भारहस्ताः, ' त्वां शिष्यास्सन्तः उप... ग्राम ' इति प्राप्ताः ॥ २ ॥

स—किमिदमिति । हे पूज्याः भगवन्तः ! श्रुताध्ययनसंपन्नाः तादृश... प्रसूताश्च भवथ । भवतां किमविदितम् ? यदिदं समिद्भारहस्ततया मदुपसर्पणम् ... किं कस्य हेतोः ? ते होचुः — ब्रूहीति । स्पष्टोर्थः । स — स्थेति ... अश्वपतिर्ब्राह्मणानां अब्राह्मणैरुपनयनम् अनुचितमिति मत्वा, हे महर्षयः ! अहं ... नरं जान एव । उपेताः स्थ । यूयं पूर्वमेव स्वाचार्यैः कृतोपनयना एव ... ा उप त्वा यामेत्युक्त्यैव यूयमुपेतप्राया एव = शिष्यत्वेनोपगतप्राया एव ... नेताश्च समिधः स्वस्वाग्निषु प्रक्षिपत । केवलं मैत्र्यैवोपदेक्ष्यामीति भाव... ाचेति ?) ॥ ३ ॥

---

अनुगृह्णन्तु इति प्रार्थयामासेत्यनेन एषां प्रतिग्रहे अत्यन्तनैःस्पृह्यं द्योतितम् । अ... ह असदुद्रव्यबुद्ध्या प्रतिग्रहमुपेक्षेरन्निति शङ्कया राज्ञा तत्परिहारः कृत. —

' न मे स्तेनो जनपदे न कदर्यो न मद्यपः ।

नानाहिताग्निर्नाविद्वान् न स्वैरी स्वैरिणी कुत. ॥ '

इति दर्शितं छान्दोग्ये ।

स होवाचारुणमौपवेशिम्। गौतम। कं त्वं वैश्वानरं वेत्थेति पृथिवी
जन्निति होवाच । ओमिति होवाच । एष वै प्रतिष्ठा वैश्वानरः । एतं
त्वं प्रतिष्ठां वैश्वानरं वेत्थ । तस्मात् त्वं प्रतिष्ठितः प्रजया पशुभिर्
वा एतं प्रतिष्ठां वैश्वानरं वेद, अप पुनर्मृत्युं जयति ; सर्वमायुरे
दौ त्वेतौ वैश्वानरस्य। पादौ ते ग्लास्येताम्, यदि ह नागमिष्य इति ॥

अथ होवाच सत्ययज्ञं पौलुषिम्, प्राचीनयोग्य! कं त्वं वैश्व
थेति। अप एव राजन्निति होवाच। ओमिति होवाच, एष वै रयि वैश्वा
ं हि वै त्वं रयिं वैश्वानरं वेत्थ। तस्मात् त्वं रयिमान् पुष्टिमानसि।
एतँ रयिं वैश्वानरं वेद, अप पुनर्मृत्यं जयति ; सर्वमायुरेति। वस्ति
। वैश्वानरस्य। वस्ति स्त्वाहास्यत्, यदि ह नागमिष्य इति। वस्ति
वेदितोऽभविष्यत् । यदि ह नागमिष्य इति वा ॥ ५ ॥

---

वैश्वानरे विवदमानान् तानालोच्य ज्ञाताज्ञातांशबुभुत्सया तान् प्रत्येकं प्रष्टु
ते । **स होवाच — वेत्थेति** । गौतमगोत्रत्वात् **गौतमेति** संबोधनम् ।
ह **पृथिवीमेव राजन्निति होवाच** । पृथिवीशरीरकात्मानमुपासे इत्युक्तवानित्य
ङ्गीकरोति **ओमिति** । उपदेष्टव्यांशमुपदिशति **एष वै प्रतिष्ठा** — । त्वया उप
नपृथिवीशरीरकवैश्वानरात्मा प्रतिष्ठा । पृथिव्याः सर्वभूताधारत्वात् प्रतिष्ठात्व
श्च सर्वभूताधारत्वलक्षणगुणयोगनिमित्तप्रतिष्ठासंज्ञोऽयं त्वदुपास्यमानः पृथि
रिको वैश्वानरात्मेत्यर्थः । **एतं हि — सर्वमायुरेति** । स्पष्टोऽर्थः । एवं फलप्रद
भ्य तस्य वैश्वानरात्मपादतया वैश्वानरात्मान्वयेऽपि वैश्वानरात्मत्वपर्याप्त्यधि
गत्वं?) न भवति । अतो मत्समीपमागत्य अस्य श्रोतव्यस्यार्थस्याश्रवणे
दौ ग्लानौ भविष्यत इत्याह **पादौ — इति** । एवमुत्तरत्रापि । **पादावविदित**
**विष्यतां यदि नागमिष्य** इति पाठे **अविदितौ** अज्ञातौ=नष्टावित्यर्थः ॥

**अथ होवाच सत्ययज्ञं — । प्राचीनयोग्येति** सत्ययज्ञस्य नामान्त
**येः** धनम् । **वस्तिः** मूलस्थानम् । **अहास्यत्** अत्यक्ष्यत् । 'ओ हाङ् त्या
ष्टं स्पष्टम् ॥ ५ ॥

अथ होवाच महाशालं जाबालम्-औपमन्यव! कं त्वं वैश्वानरं वेत्थेति। शमेव राजन्निति होवाच। ओमिति होवाच, एष वै बहुलो वैश्वानरः। हि वै त्वं बहुलं वैश्वानरं वेत्थ। तस्मात् त्वं बहुः प्रजया पशुभिरसि। एतं बहुलं वैश्वानरं वेद, अप पुनर्मृत्युं जयति; सर्वमायुरेति। आत्मा एष वैश्वानरस्य। आत्मा त्वाहास्यत्, यदि ह नागमिष्य इति आत्मा दितोऽभविष्यत्, यदि ह नागमिष्य इति वा ॥ ६ ॥

अथ होवाच बुडिलमाश्वतराश्विम्—वैयाघ्रपद्य! कं त्वं वैश्वानरं । वायुमेव राजन्निति होवाच। ओमिति होवाच, एष वै पृथग्वर्त्मा रः, एतँ हि वै पृथग्वर्त्मानं वैश्वानरं वेत्थ। तस्मात् त्वां पृथग्रथ-ऽनुयान्ति। यो वा एतं पृथग्वर्त्मानं वैश्वानरं वेद, अप पुनर्मृत्युं ; सर्वमायुरेति। प्राणस्त्वा एष वैश्वानरस्य। प्राणस्त्वाहास्यत्, यदि ह ष्य इति। प्राणस्तेऽविदितोऽभविष्यत्, यदि ह नागमिष्य इति वा ॥ ७

अथ होवाचेन्द्रद्युम्नं भाल्लवेयम्—वैयाघ्रपद्य! कं त्वं वैश्वानरं वेत्थेति। यमेव राजन्निति होवाच। ओमिति होवाच, एष वै सुततेजा वैश्वानरः। वै त्वँ सुततेजसं वैश्वानरं वेत्थ। तस्मात्तवैष सुतोऽद्यमानः पच्यमानो-

---

अथ होवाच महाशालं[1]—। भूतान्तरापेक्षया आकाशस्य विपुलत्वात् बहु-। आत्मा मध्यकाय इत्यर्थः। छान्दोग्ये समानप्रकरणे मध्यकायवाचि-ब्दश्रवणात्। शिष्टं स्पष्टम् ॥ ६ ॥

अथ होवाच बुडिलं—। वायोर्वियद्गतिमत्त्वात् पृथग्वर्त्मत्वम्। त्वां यश्रेणयोऽनुयान्ति। रथपङ्क्तयो नानादेशस्थाः त्वामनुयान्तीत्यर्थः। शिष्टं ॥ ७ ॥

अथ होवाचेन्द्रद्युम्नं—। शोभनं तेजः यस्य स सुतेजाः। सुततेजा इति स एवार्थः। अभिषुतः एष सोमः अद्यमानः पीयमानः पच्यमानः अग्निषु

ऽक्षीयमाणो गृहेषु तिष्ठति । यो वा एतँ सुतनेजसं वैश्वानरं वे
पुनर्मृत्युं जयति; सर्वमायुरेति । चक्षुस्त्वा एतद्वैश्वानरस्य । न
हास्यत्, यदि ह नागमिष्यः । चक्षुस्तेऽविदितमभविष्यत्,
नागमिष्य इति वा ॥ ८ ॥

अथ होवाच जनँ शार्कराक्ष्यम्—सायस ! कं त्वं वैश्वानरं
दिवमेव राजन्निति होवाच । ओमिति होवाच, एष वा अतिष्ठा वै
एतँ हि वै त्वमतिष्ठां वैश्वानरं वेत्थ । तस्मात् त्वं समानानति ति
वा एतमतिष्ठां वैश्वानरं वेद, अप पुनर्मृत्युं जयति; सर्वमायुरेति ।
एष वैश्वानरस्य । मूर्धा त्वाहास्यत्, यदि ह नागमिष्य इति
तेऽविदितोऽभविष्यत्, यदि ह नागमिष्य इति वा ॥ ९ ॥

तान् होवाच । एते वै यूयं पृथग्वैश्वानरान् विद्वाँसः
भवन्त । प्रादेशमात्रमिव ह वै देवाः सुविदिता अभिसम्पन्नाः ।
एनान् वक्ष्यामि, यथा प्रादेशमात्रमेवाभिसम्पादयिष्यामीति ॥

---

हूयमानः । अक्षीयमाणः गृहेषु तिष्ठति । तस्य गृहे सर्वदा
अनुवर्तमाना भवन्तीत्यर्थः ॥ ८ ॥

अथ होवाच जनं — । अतीत्य तिष्ठतीत्यतिष्ठाः । दिवः
अतीत्य स्थितत्वात् अतिष्ठात्वम् ॥ ९ ॥

तान् होवाच — । एतादृशा यूयं वैश्वानरान् पृथक्पृथक्
पृथगेव अन्नं भोग्यजातमनुभवथ । न तु सर्वलोकसर्वभूतसर्वात्मस्थब्रह्म
वोऽस्तीति भावः । प्रादेशमात्रमिव — संपन्नाः । देवाः सूर्य
उपासनया प्रादेशमात्रमभिसंपन्नाः प्राप्ता इव भवन्ति, तदा ते विदिता

द्युसूर्यपृथिव्यादिपरिच्छिन्नस्य कथं प्रादेशमात्रत्वाभिसंपत्तिः ?
तु वः — संपादयिष्यामीति । यथा द्युप्रभृतयः प्रादेशमात्रमभिसं
वक्ष्यामीत्यर्थः ॥ १० ॥

**स होवाच मूर्धानमुपदिशन्, 'एष वा अतिष्ठा वैश्वानर इति; चक्षुषी शन्नुवाच, एष वै सुततेजा वैश्वानर इति, नासिके उपदिशन्नुवाच, एष ग्वर्त्मा वैश्वानर इति, मुख्यमाकाशमुपदिशन्नुवाच, एष वै बहुलो र इति, मुख्या अप उपदिशन्नुवाच, एष वै रयिर्वैश्वानर इति, चुबुकमु न्नुवाच, एष वै प्रतिष्ठा वैश्वानर इति। स एषोऽग्निर्वैश्वानरो यत् पुरुषः**

स ह —। मूर्धानम् **उपदिशन्** कराग्रेण दर्शयन् उवाच। **एष वै**—। प्रसिद्धे कमूर्धनि अतिष्ठासंज्ञकवैश्वानरमूर्धभूतद्युलोकदृष्टिः कर्तव्येत्यर्थः। एवमुत्तरत्रापि म्। **मुख्यमाकाशं** —। **मुख्याकाशः** आस्यान्तर्गताकाशः। **मुख्य** —। अत्रापि **मुख्य**शब्दस्य पूर्ववदर्थः। **चुबुकमुपदिशन्** —। अधराधो वेशेषः **चुबुक**शब्देनोच्यते। ततश्च प्रादेशपरिमिते मूर्धचुबुकान्तराळे त्रैलोक्य कस्य वैश्वानरस्याऽऽत्मनः संपादितत्वात् प्रादेशमात्रत्वम्। यथा एकस्मिन्नग्नी ययागे शाखाभेदेन विहितयोः एकादशद्वादशकपालत्वयोः विकल्पेन अनुष्ठानम् यागभेदः, एवमेकस्यां वैश्वानरविद्यायां छान्दोग्यवाजसनेयकशाखाम्नातप्रादेश वप्रकारविशेषयोः विकल्पेनानुष्ठानम्। नैतावता विद्याभेदः शङ्कनीयः।

**स एषोऽग्निर्वैश्वानरो यत् पुरुषः**। यच्छब्दः प्रसिद्धिपरः। 'सहस्रशी' इत्यादिवेदान्तवाक्येषु प्रसिद्धो यः पुरुषः, स एष वैश्वानरोऽग्निः। अ

---

**प्रादेशमात्रत्वप्रकारविशेषयोरिति**। एतदुपपादनक्रमः छान्दोग्यभाष्यपरिष्का ष्यः। नन्वत्र वैश्वानरविद्यायाम्, 'अप पुनर्मृत्युं जयति, सर्वमायुरेति' इति आयुष्का मरणं विना पूर्णायुःप्राप्तिरूपफलश्रवणात्, छान्दोग्ये तु 'को न आत्मा किं ब्रह्मे' त्यु नुसारेण ब्रह्मविद्यात्वावगमात् ब्रह्मप्राप्तिरूपफलाङ्गीकाराच्चोभयोर्भेदात् प्रादेशमात्रत्वं तत्र स्थितमिति कथं वैकल्पिकत्ववाद इति चेन्न — उपाख्यानशैलीसाम्यात् विश्वलोकशरीरक विधानाच्चैक्यस्य प्रतीयमानतया फलैक्यस्यापि स्वीकारात्। **अप** पुनर्मृत्युं जयतीति मृ यो हि मोक्ष एव भवितुमर्हति। यथा नाचिकेतब्राह्मणोक्तो मृत्योरपजयो मोक्षः। ' रेती' त्येतत्तु मोक्षोपयोगिविद्यानिष्पत्त्यपेक्षितमायुरानुषङ्गिकं दर्शयेत्। यथा छान्द ग्निहोत्रप्रस्तावे, 'तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेने' ति। अत एव न्तप्रत्ययाधिकरणे **श्रीभाष्यम्** — "फलसंयोगोऽप्युभयत्रापि ब्रह्मप्राप्तिरूपोऽविशिष्टः"

**यो हैतमेवमग्निं वैश्वानरं पुरुषविधं पुरुषेऽन्तःप्रतिष्ठितं वेद, अपपुनर्मृ
यति, सर्वमायुरेति ; न हास्य ब्रुवाणश्चन वैश्वानरो हिनस्ति ।। ११ ।**

---

ग्निशब्दः अपर्यवसानवृत्त्याऽग्निशरीरकपरमात्मपरः ।

**स यो–एति ।** द्युप्रभृतिमूर्धादिमत्त्वात् पुरुषविधत्वम् । पुरुषेऽन्तः प्रतिष्ठितत
ःषान्तःप्रतिष्ठितजाठराग्निशरीरके परमात्मन्युपपद्यते । सूत्रितञ्च, "शब्दादिभ्योऽ
ेष्ठानाच्च नेति चेन्न तथादृष्ट्युपदेशादसंभवात् पुरुषमपि चैनमधीयते" इति । 
वक्तव्यं **छान्दोग्योपनिषत्प्रकाशिकायामुक्तम्** ; तत्रैवानुसन्धेयम् ।

**न हास्य ब्रुवाणं चन वैश्वानरो हिनस्ति ।** वैश्वानरविद्यानिष्ठत्वाभावेऽ
ानरविद्याप्रतिपादकोपनिषत्पाठकमपि तत्प्रतिपाद्यः परमात्मा संसाराम्बुधौ
ायतीत्यर्थः ।। ११ ।।

क्षेमाय यः करुणया क्षितिनिर्जराणां भूमावजृम्भयत भाष्यसुधामुदारः ।
वामागमाध्वगवदावदतूलवातो रामानुजः स मुनिराद्रियतां मदुक्तिम् ।।

**इति श्रीमत्तातार्यचरणारविन्दचञ्चरीकस्य वात्स्यानन्तार्यपादसेवा-
समधिगतशारीरकमीमांसाभाष्यहृदयस्य परकाल-
मुनिपादसेवासमधिगतपारमहंस्यस्य
श्रीरङ्गरामानुजमुनेः कृतिषु
अग्निरहस्यप्रकाशिका ।।**

शुभमस्तु ।।

---

**अग्निशब्दोऽपर्यवसानवृत्त्येति ।** ननु किमत्र विनिगमकम् ? अग्निशब्द एव, 'साक्षादप्
थं जैमिनिः' इति दर्शितानयनार्थकोऽस्तु, वैश्वानरपदश्चापर्यवसानवृत्त्या परमात्मपरम् । अ
ग्निपदोक्ते विशिष्टेऽर्थे विशेषणमात्रान्वयि जाठराग्नित्वरूपं वैश्वानरत्वं विशेषभूतम् । पदद्वयम
ौगिकमेव भवतु–इति चेन्न–वैश्वानरपदस्य विद्याप्रक्रमप्रभृति श्रूयमाणतया तत्र, द्युपृथिव्या
रकतया, **दीपोक्तरीत्या** ब्रह्मपदस्थानापन्नतया च जाठराग्निग्रहणासंभवे स्थिते तदा जाठरा
ास्यावश्यकत्वानवगमेन च बाधकत्वात् अनन्यथासिद्धाग्निलिङ्गाभावाच्चोपक्रमे वैश्वानरप
ाकमित्यवधारणात् । अग्निपदमप्यत्र श्रूयमाणं यौगिकं भवत्विति तु न शङ्क्यम्–अन्त
ष्ठितत्वरूपलिङ्गस्यात्र, प्राणाहुत्याधारत्वरूपस्य च लिङ्गस्य च्छान्दोग्ये प्रतीयमानतया लो
द्वस्योदर्याग्नेरपि ग्राह्यत्वादिति ।

**छान्दोग्योपनिषत्प्रकाशिकायामिति ।** वैश्वानाधिकरणसूत्राणां प्रायश्छान्दोग्यवाक्यग्रहणे
त्वात् तत्रैव तदधिकरणरचना कृता । एवं तृतीयतृतीयगतं भूमज्यायस्त्वाधिकरणम
रचयित्वा दर्शितमिति ध्येयम् ।

## १.१०.६.

## शाण्डिल्यविद्या

त्यं ब्रह्मेत्युपासीत। अथ खलु क्रतुमयोऽयं पुरुषः। स यावत्क्रतुरयम्
ाकात् प्रैति, एवंक्रतुर्हामुं लोकं प्रेत्याभिसंभवति। स आत्मानमुपासीत
ं प्राणशरीरं भारूपमाकाशात्मानं कामरूपिणं मनोजवसं सत्य-
सत्यधृतिं सर्वगन्धं सर्वरसं सर्वा अनु दिशः प्रभूतं सर्वमिदमभ्यात्त-

---

ेः। अग्निरहस्यान्तर्गतस्य शाण्डिल्यविद्याभागस्य शारीरके तृतीयतृतीये **समानाधि-**
ारितत्वात् स भागोऽपि व्याख्याय प्रकाश्यते। समानाधिकरणरचनाप्रकारो बृह-
(७-६-१.) पनिषद्भाष्यपरिष्कारयोर्द्रष्टव्यः। एतच्छाण्डिल्यविद्यावाक्यार्थवर्णन-
क्रमपि छान्दोग्यो (३-१४.) पनिषद्भाष्यपरिष्कारयोर्यथावद् द्रष्टुमुचितम्। अतो नात्र
**सत्य**मित्यस्य निर्विकारमिति प्रसिद्धोऽर्थः। तदर्थादरणे ब्रह्मोपासनस्य सत्यत्वज्ञान-
ानन्दत्वामलत्वरूपस्वरूपनिरूपकधर्मविशिष्टतयैव सर्वत्रोपास्यतायाः आनन्दाद्यधिकरण-
नात्र वाक्ये किञ्चिद् विधेयमस्तीति **स आत्मानमुपासीते**ति वाक्य एव सर्वगुण-
मात्मोपासनविधानमिति नात्र पक्षे क्लेशः। यदा तु **सत्य**पदं छान्दोग्ये, 'सर्वं खल्विदं
कसमानार्थकत्वसिद्धये, बृहदारण्यके (७-४.), 'तदेतत् त्र्यक्षरं सत्यमिति। स
रम्, तीत्येकमक्षरम्, यमित्येकमक्षरम्' इत्यत्रोक्तरीत्या चेतनाचेतनसर्वनियन्तृ
मेष्यते, तदा उक्तविधसत्यत्वविशिष्टब्रह्मोपासने प्रथमवाक्येन विहिते, **स आत्मान-**
क्येन प्राप्तोद्देशेनानेकगुणविधाने **वाक्यभेद** इति शङ्का प्राप्नोति। तत्र प्रथमवाक्ये
त्पत्तिविधिः, **एवंक्रतुर्हे**ति वाक्येऽधिकारविधानम्, '**स आत्मान**'मिति वाक्ये
ानम्। संभवति च प्रयोगान्वयितयाऽपि गुणानां विधानमिति छान्दोग्ये भाष्यानुसारेण
प्रपञ्चितमनुसंधेयम्। **सत्य**मित्यारभ्य सर्वं वा, **यथाव्रीहिर्हि**रित्यादिकं वा, **एष म**
ादिकमेव वा शाण्डिल्यानुसंधानमस्तु। सर्वथा अप्राप्तं सर्वमुपासनान्वयितया स्वीकार्यं
ोक्तसर्वकामत्वादिगुणान्तरवदित्यलमधिकेन। अक्षरार्थस्तावत्—क्रतुरुपासनम्। **एवंक्रतुः**
पासनवान्। उपासनप्रचुरो हि पुरुषः। तस्मादुपासनानुगुणफलभाक्त्वात् यत्प्रकारकोपासन-
लोकं विसृजति, अमुत्र लोके तत्प्रकारप्राप्तिमान् भवति। अतः परिशुद्धमनोग्राह्यं सर्व-
कं भास्वररूपमव्याकृताकाशस्याप्यात्मभूतमिच्छागृहीताभिमतदिव्यमङ्गलविग्रहं मनोवेग-
[illegible] सर्वगन्धं सर्वरसं सर्वदिग्व्यापिनं स्वीकृतसर्वकल्याणगुणं

**मवाकमनादरम्, यथा व्रीहिर्वा यवो वा श्यामाको वा श्यामाक एवमयमन्तरात्मन् पुरुषो हिरण्मयः, यथा ज्योतिरधूमम् एवं दिवो ज्यायानाकाशात् ज्यायानस्यै पृथिव्यै ज्यायान् सर्वेभ्यो : स प्राणस्यात्मा। एष म आत्मा। एतमित आत्मानं प्रेत विष्यामीति यस्य स्यादद्धा न विचिकित्साऽस्तीति ह स्माह शा एवमेतदिति ॥ २ ॥**

इति अग्निरहस्यम् ( यावदपेक्षितम् )

श्रीरस्तु

---

ब्रह्मादिस्तम्बपर्यन्तसर्वजगत्तृणीकरणेन जोषमासीनमवाप्तसमस्तकामतया आदर्तव्य रहितं परमात्मानमुपासीतेति। **यथा व्रीहि**रित्यादिना अणीयस्त्वमुपासनार्थं कवि हिरण्मयविग्रहदृष्टान्त उच्यते **यथा ज्योतिरधूम**मिति। स्वाभाविकं ज्य ज्यायानिति। **अद्धा** निश्चयः। यस्य, अहमेवम्भूतं प्राप्स्यामीति दृढोऽध्यवसायः प्राप्स्यत्येव। न तत्र संशयोऽस्तीति।

भाष्यादौ विस्तरो द्रष्टव्यः; यत एतद्विषयकं सर्वत्रप्रसिद्ध्यधिकरणं समानाधि

श्रीमद्वेदान्तसौमित्रिरङ्गलक्ष्मणयोगिनोः।
शिष्येणैवं विनीतेन वात्स्यसच्चक्रवर्तिना॥

ईशाद्युपनिषद्भाष्यपरिष्कारविधायिना।
**श्रीवीरराघवेणाग्निरहस्यञ्च परिष्कृतम्॥**

**इति वात्स्यसच्चक्रवर्तिवीरराघवाचार्य-**
कृतिषु उपनिषद्भाष्यपरिष्कारे
**अग्निरहस्यभाष्यपरिष्कारः।**

शुभमस्तु

— ॐ —

श्रीः

## अग्निरहस्यभागार्थसंग्रहकारिकाः



शारीरके शतपथब्राह्मणाग्निरहस्यगम् ।
समानाधिक्रियापूर्वविकल्पाधिक्रियाद्वये ॥ १ ॥

वैश्वानराधिक्रियायामपि यस्माद् विचारितम् ।
तस्मात् तदंशमात्रस्य संग्रहः क्रियतेऽधुना ॥ २ ॥

सर्वसंहरणान्मृत्युरित्युक्तं पुरुषं परम् ।
आदित्यमण्डलादिस्थमुक्त्वा ध्येयं विमुक्तये ॥ ३ ॥

खण्डान्तरे ततः प्रोक्तः क्रतुर्विद्यामयोऽद्भुतः ।
पुंसा स्वायुर्गतैकैकदिनसंभविषु स्वयम् ॥ ४ ॥

मनोवाक्चक्षुरादीनां व्यापारेषु विभाव्यते ।
यत्र चित्याग्निराधानस्तोत्रशस्त्रग्रहादि च ॥ ५ ॥

अथ चित्याग्निसंबद्धाः विद्याः काश्चन दर्शिताः ।
वैश्वानरात्मविद्योक्ता छान्दोग्ये विस्तृता हि या ॥ ६ ॥

एतत् सर्वं पञ्चमेऽथ षष्ठे प्रोक्ता यथायथम् ।
शाण्डिल्यविद्या छान्दोग्यबृहदारण्यकस्थिता ॥ ७ ॥

शुभमस्तु

---

### शोधनम्

:०. पुटे. परिष्कारे - प्रण प्रीणने इति शोधनीयम् ।

श्रीः

# महोपनिषत् ।

[ओम् आप्यायन्त्विति शान्तिः ।]

अथातो महोपनिषदं व्याख्यास्यामः । तदाहुः — एको

---

श्रीः

श्रीमद्भ्यो रङ्गरामानुजमहादेशिकेभ्यो नमः ।

## महोपनिषत्परिष्कारः ।

नारायणं निखिलचेतननिर्विशेषं नाथं चतुर्मुखमहेशमुखस्य हेतुम् ।
नानाविधागमनुतं निखिलात्मभूतं नारायणाद्रिनिलयं नियतं नमामि ॥

श्रीभाष्ये, 'एको ह वै नारायण आसीन्न ब्रह्मा नेशानः' इति वाक्यस्य नारायण
प्रतिपादनार्थमुदाहरणात्, अस्य च वाक्यस्यात्र महोपनिषदि दर्शनात् इयमादरणीयेति स्थि

आचार्यतल्लजैश्च श्रीमद्वेदान्तदेशिकैः **सच्चरित्ररक्षायां सुदर्शनपाञ्चजन्यधार**
र्थं प्रत्यबोधि —, "एतेन महोपनिषदः कैश्चिदनुदाहृतत्वचोद्यमपास्तम् । कति कति
भाष्यकारादिभिरनुपात्ता उपनिषदः । न केवलं भगवद्रामानुजमुनिभिरेव महोपनिष
अपि तु तत्परमाचार्यैर्भगवद्यामुनमुनिभिरपि पुरुषनिर्णये समुपात्ता । न चैवमेकसिद्धान्त
दुपादानम्; अपितु तद्विरुद्धसन्मात्रब्रह्मभेदाभेदनिष्णातैः यादवप्रकाशैरपि भगवद्गीताभा
ष्ये । तथा तन्मतानुसारिभिर्नारायणार्यैरपि तत्त्वनिर्णये श्रुतितात्पर्यनिर्णयाधिकारे सो
नानाविधश्रुतिशिखरनिकरोदाहरणावसरे महोपनिषदाद्यान्, 'एक एव नारायणः' इत्य
चतुरो मन्त्रानुदाहृत्य, 'एषा चोपनिषत्, 'एतौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधजौ
दादर्शितपन्थानौ सृष्टिसंहारकारकौ' इत्यादिभिरितिहासैः, 'तत्क्रोधसंभवो रुद्रः
पितामहः', 'यस्य प्रसादजो ब्रह्मा रुद्रश्च क्रोधसंभवः' इत्यादिभिः पुराणैश्चोप
त्युक्तम्" इति ।

अनेन ब्रह्मरुद्रकारणतया नारायणप्रतिपादिकाया महोपनिषदः प्रामाण्यमास्थेयमिति

परंतु केयं महोपनिषदिति किञ्चिद् विचारणीयं लक्ष्यते, यदत्र सच्चरित्ररक्षासूक्तौ
निषदाद्यतया चत्वारो मन्त्राः, 'एक एव नारायणः' इत्याद्या नारायणार्योदाहृततया
अस्यां महोपनिषदि न लक्ष्यन्ते । न केवलमेतावत् । अत्रैव ग्रन्थे पूर्वं परमेश्वरसंहित
दाहरणावसरे, 'स्नापयेद् ब्रह्मसूक्तस्थैर्मन्त्रैरष्टभिरेव च' इति, 'दक्षिणे तु भुजे विप्र
लक्ष्मिमगेन वै' इति, 'यद्वा सर्वस्य वशिनमित्याद्यैर्मनुभिः क्रमात् । महोपनिषदन्तःस्थैर्दि
कलशाष्टकैः । एक एव नारायण इति मध्यगतेन तु' इति चोदाहृत्यैवं विवृतम् — अ
सूक्तमिति महोपनिषन्मध्यगताः सहस्रशीर्षा इत्याद्याः एकोनविंशतिर्मन्त्राः । तत्रोपरित

रण आसीत्। न ब्रह्मा नेशानो नापो नाग्नीषोमौ नेमे द्यावापृथिवी
क्षत्राणि न सूर्यो न चन्द्रमाः। स एकाकी न रमेत। तस्य
अन्तःस्थस्य यज्ञस्तोममुच्यते। तस्मिन् पुरुषाश्चतुर्दश जायन्ते। एका
। दशेन्द्रियाणि। मन एकादशं तेजः। द्वादशोऽहंकारः। त्रयो-
ः प्राणः। चतुर्दश आत्मा। पञ्चदशी बुद्धिः। भूतानि पञ्च
त्राणि। पञ्च महाभूतानि। स एकः पञ्चविंशतिः पुरुषः। तत्पुरुषं
निवेश्य। नास्य प्रधानसंवत्सरा जायन्ते। संवत्सरादधिजायन्ते।

---

'सर्वस्य वशिन' मित्याद्याः। तत्र, 'दक्षिणे तु भुजे विप्रः' इति पञ्चमो मन्त्रः
एव नारायण' इति महोपनिषदाद्यो मन्त्रः—इति। न चैते मन्त्राः अस्यां महोपनिषदि
द्यत्वे लक्ष्यन्ते। तस्मादन्या काचित् महोपनिषदानुपूर्वी अवश्यमेव गवेषणीयाऽस्ति।

अथाप्यस्यामपि महोपनिषदि श्रीभाष्योदाहृतवाक्योपलम्भात् नारायणपारम्यस्य निर्वि-
ं प्रतिपादकत्वाच्चैतत्प्रकाशनमपि स्थाने।

एको ह वै नारायण इति सृष्ट्यारम्भे नारायणमात्रसद्भावश्रवणात्, नारायणपदस्य श्रियः-
दत्वात्, ब्रह्मेशानादेः तदा सद्भावप्रतिषेधाच्च नारायणपारम्यं निर्विचिकित्सम्। **यज्ञ-
मुच्यते**। आराधनोपयोगिवस्तुव्यूह उच्यते उपरितनवाक्यैरित्यर्थः। उपरि देहेन्द्रि-
यातत्कारणादिकथनात्। **पुरुषाश्चतुर्दश जायन्ते** इत्यस्य विवरणम् **दशेन्द्रिया-**
देना। **एका कन्ये**त्यस्य विवरणम् पञ्चदशी बुद्धिरिति। **आत्मे**ति शरीरमुच्यते। **स
पञ्चविंशतिः पुरुषः**। मनआदीनां बहूनामेषां स्वामी जीव एको भवति। एकैकस्यापि
मानि बहूनि पृथक्पृथगुपकरणानीत्यर्थः। अत्र, 'जगति जीव एक एवास्ती'ति न विवक्षितम्।
एतेषां बहूनां स्वामी एको जीवो भवतीत्यर्थज्ञापनमात्रं चिकीर्षितम्। पुरुषस्य पञ्चविंशत्वं
तिविधप्रकृतिप्राकृतपदार्थाधिकत्वात्। **तत् पुरुषं पुरुषो निवेश्ये**ति। **पुरुषो**
ः **पुरुषं** जीवं **निवेश्य तत्** पूर्वोक्तं मनआदिकमेकसंघातापन्नं करोतीति शेषः।

**नास्य प्रधानसंवत्सरा जायन्ते**। **संवत्सर**शब्दः प्रजापतौ चतुर्मुखे तत्रतत्र
े। तस्य संवत्सररूपायुर्गणनया सृष्टिव्यग्रत्वात्। प्रजापतिरूपः संवत्सरः प्रधानभूतो
ते जीवाः **अस्य** परमात्मनः सकाशात् साक्षान्न जायन्ते तस्मात् प्राक्। किन्तु संवत्स
जापतेः **अधि** ऊर्ध्वं जायन्ते।

अथ पुनरेव नारायणः सोऽन्यत्कामो मनसाऽध्यायत ।
यानान्तःस्थस्य ललाटात् त्र्यक्षः शूलपाणिः पुरुषो जायते बिभ्रच्छ्रि
शः सत्यं ब्रह्मचर्यं तपो वैराग्यं मन ऐश्वर्यं सप्रणवा व्याहृतय ऋग्
ामाथर्वाङ्गिरसः सर्वाणि छन्दांसि ; तान्यङ्गे समाश्रितानि । तस्मादी
हादेवो महादेवः ।

अथ पुनरेव नारायणः सोऽन्यत्कामो मनसाऽध्यायत ।
यानान्तःस्थस्य ललाटात् स्वेदोऽपतत् । ता इमाः प्रतता आपः ।
तेजो हिरण्मयमण्डम् । तत्र ब्रह्मा चतुर्मुखोऽजायत । सोऽध्यायत् पूर्
खो भूत्वा ; भूरिति व्याहृतिर्गायत्रं छन्द ऋग्वेदोऽग्निर्देवता ।
ाभिमुखो भूत्वा ; भुवरिति व्याहृतिस्त्रैष्टुभं छन्दो यजुर्वेदो वायुर्दे
त्तराभिमुखो भूत्वा ; स्वरिति व्याहृतिर्जागतं छन्दः सामवेदः
वता । दक्षिणाभिमुखो भूत्वा ; महरिति व्याहृतिरानुष्टुभं छन्दोऽथर्व
ोमो देवता ।

सहस्रशीर्षं देवं सहस्राक्षं विश्वशंभुवम् ।
विश्वतः परमं नित्यं विश्वं नारायणं हरिम् ॥

---

नारायणापेक्षया निकृष्टस्यापि महादेवस्य चतुर्मुखापेक्षयाऽप्यतिशयो विद्यते । अत
ेषु ब्रह्मणः पारम्यपक्षे निविष्टा नैव लक्ष्यन्ते लोके । विवादस्तु नारायणस्य महादे
तरस्य पारम्यमित्येवेत्याशयेन चतुर्मुखात् प्रागेव महादेवं महापुरुषलक्षितजन्मभूमानं श्रु
थेति । एतावताऽस्य ब्रह्मापेक्षया पूर्वोत्पन्नत्वं न मन्तव्यमिति ज्ञापनाय पूर्वं नास्ये
क्यन् ।

देवतेति वाक्येषु अजायन्तेत्यध्याहारः । भूत्वेत्यत्र अध्यायदित्यस्यानु
सहस्रशीर्षमित्यादि प्रथमान्तं कल्प्यम् । यद्वा द्वितीयान्तमेव ; उपजीवतीत्य

विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवति ।
पतिं विश्वेश्वरं देवं समुद्रे विश्वरूपिणम् ॥

पद्मकोशप्रतीकाशं लम्बत्याकोशसन्निभम् ।
हृदयं चाप्यधोमुखं संतत्यै सीत्कराभिश्च ॥

तस्य मध्ये महानर्चिर्विश्वार्चिर्विश्वतोमुखम् ।
तस्य [1]मध्ये वह्निशिखा अणीयोर्ध्वा व्यवस्थितः ॥

तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः ।
स ब्रह्मा स ईशानः सेन्द्रः सोऽक्षरः परमः स्वराट् ॥

**इति महोपनिषत् ।***

**॥ शुभमस्तु ॥**

---

1. मध्ये पुरुषः ।

* एतावत्पर्यन्ता महोपनिषत् बहुपरिग्रहेण प्रामाण्यं निर्विवादं लभते । एतदुपरितना
ध्यायाः विस्तृता अनुष्टुप्छ्लोकात्मकाः शुकजनकनिदाघादिनानापुरुषवृत्तान्तनिबन्धरूपाः पुरा
ोमनुरुन्धानाः अविस्रम्भादनावश्यकत्वाच्च न प्रकाश्यन्ते । अन्नायमपि कश्चिदभ्यूहः प
ते । तदाहुरित्यारभ्यैव महोपनिषत् भाव्या । तद्व्याख्यानार्थं प्रवृत्तेन **अथातो महोपनिष
ाख्यास्यामः** इत्युपक्रम्य महोपनिषदं समस्तां **तदाहुरि**त्यादिना यथामति पठित्वा सै
ारार्थस्य स्वामिसंहितस्य जिज्ञापयिषया शुकादिवृत्तान्तमयैः पञ्चभिरध्यायैः सामान्य
ख्यायीति । अवश्यमन्या काचिदानुपूर्वी महोपनिषदोऽस्तीति परिष्कारेऽदर्शयाम । **उपल
ऽप्यानुपूर्वी प्रकाशयिष्यते ।**

---

वात् । **विश्वमेवेदं पुरुषः** इति तु प्रधानवाक्यमध्यगतमवान्तरवाक्यम् । **सीत्कराभिरि**
ाभिरित्यर्थे। अष्टोत्तरोपनिषत्कोशे अशुद्धिबाहुल्यं सम्यगवधारितम् । अतस्तत्रतत्र यथावस्थि
ोऽप्यन्विष्य ग्राह्यः । सहस्रशीर्षमित्यादेरर्थो नारायणानुवाके तैत्तिरीयगते विशदं द्रष्टव्यः

**इति श्रीवात्स्यसच्चक्रवर्ति-वीरराघवाचार्य-**

कृतिषु उपनिषद्भाष्यपरिष्कारे

**महोपनिषत्परिष्कारः ।**

शुभमस्तु ।

श्रीः

श्रीमते नारायणाय नमः

# नारायणोपनिषत् ॥

[ ओम् सह नाववत्विति शान्तिः । ]

ओम्। अथ पुरुषो ह वै नारायणोऽकामयत, प्रजाः सृ
नारायणात् प्राणो जायते ; मनः सर्वेन्द्रियाणि च ; खं वायुर्ज्यो
पृथिवी विश्वस्य धारिणी । नारायणात् ब्रह्मा जायते । नार
जायते । नारायणादिन्द्रो जायते । नारायणात् प्रजापतिः प्र
नारायणाद् द्वादशादित्या रुद्रा वसवः । सर्वाणि च्छन्दांसि नार
समुत्पद्यन्ते । नारायणात् प्रवर्तन्ते । नारायणे प्रलीयन्ते । ए
शिरोऽधीते[1] ॥ १ ॥

1. शिरोऽधीते इति चतुर्षु स्थलेष्वपि, 'शिरो योऽधीते' इत्यधीयते.

---

श्रीः

श्रीमद्भ्यो रङ्गरामानुजमहादेशिकेभ्यो नमः ।

## नारायणोपनिषत्परिष्कारः ।

श्री श्रीनिवासकरुणैकनिरूढभूम वेदान्तलक्ष्मणयतीन्द्रकटाक्षलक्ष्यम् ।
श्रीरङ्गलक्ष्मणमुनिं प्रणिपत्य मूर्ध्ना नारायणोपनिषदञ्च परिष्करोमि ॥

वेदेषु सर्वेष्वपि पठ्यमाने पुरुषसूक्तेऽन्यत्र च पुरुष इति यः प्रसिद्धः पुरुषोत्तम
नारायण इत्यपि नानाम्नायप्रसिद्धः । भगवन्मन्त्रेषु व्यापकमन्त्रास्त्रयः प्रधानभूताः
तमस्तु श्रीमदष्टाक्षरनामा नारायणमन्त्रः । विष्णुगायत्री च विष्णुनारायणवासुदेवपदेषु
पदमेव प्रथमतो गृह्णाति । वासुदेवपदमपेक्ष्य विष्णुपदं विश्वतः श्रुतिषु प्रयुक्तम् ।
नारायणपदमेवाधिकतरमभ्यस्यते । नारायणपदस्य निरङ्कुशो महिमा निखिलापेक्षिता
क्षमता च रहस्यग्रन्थतो यथावदधिगन्तव्यौ। तदियं नारायणोपनिषत् निखिलवे
निरवधिकप्रभावनारायणमन्त्रोपास्यतया च तमेव पुरुषं नारायणं प्रतिबोधयितुं तस्य ब्र
सर्वजगत्कारणत्वं सर्ववस्त्वात्मभावञ्च यथावत् प्रथममाह — **अथ पुरुष** इत्यादिन
रुद्रादीनां प्रजानां प्राण-करण-पञ्चभूतमयकलेबरकलितजनितया प्रथमतः प्राणाद्यु
नारायणादाह **नारायणा**दिति । अत्र निमित्तवदुपादानत्वस्यापि विवक्षितुं युक्तत्वात् न
पदानि यथार्हं चेतनाचेतनात्मकसूक्ष्मविशेषणविशिष्टपराणि भाव्यानि । एवं नारायणस्य स
त्वमधिगमितम् । (१)

थ नित्यो नारायणः । ब्रह्मा नारायणः । शिवश्च नारायणः ।
ारायणः । कालश्च नारायणः । दिशश्च नारायणः । विदिशश्च
ऊर्ध्वं च नारायणः । अधश्च नारायणः । अन्तर्बहिश्च नारायणः ।
वेदं सर्वम्, यद् भूतं यच्च भव्यम् । निष्कलङ्को निरञ्जनो
निराख्यातः शुद्धो देव एको नारायणः । न द्वितीयोऽस्ति
एवं वेद, स विष्णुरेव भवति । एतद्यजुर्वेदशिरोऽधीते ।। २ ।।

मित्यग्रे व्याहरेत् । नम इति पश्चात् । नारायणायेत्युपरिष्टात् ।
क्षरम् ।। नम इति द्वे अक्षरे । नारायणायेति पञ्चाक्षराणि ।
यणस्याष्टाक्षरं पदम् । यो ह वै नारायणस्याष्टाक्षरं पदमध्येति,
सर्वमायुरेति ; विन्दते प्राजापत्यं रायस्पोषं गौपत्यम् ।

---

र्वोपादानत्वाद्युपयुक्तं शरीरात्मभावनिबन्धनं सार्वात्म्यं तस्याऽऽह **अथ नित्य** इति ।
ेषु जन्मस्थितिलयहेतुत्वपुरस्सरं सार्वात्म्यमुद्घुष्यते 'सन्मूलाः सोम्येमाः सर्वाः
नाः सत्प्रतिष्ठाः ऐतदात्म्यमिदं सर्व' मिति; 'सर्वं खल्विदं ब्रह्म तज्जलानिति'
त्यो **नारायण** इत्यस्य ब्रह्मादिवत् स न नश्यतीत्यर्थः । अथवा उपरितन-
, नित्यसूर्यात्मा नारायण इत्यर्थो ग्राह्यः । **विष्णुरेव** विष्णुसमः । (२)

दुपासनोपयुक्तं मन्त्रमाह **ओमिति** । **अष्टाक्षरं पद**मिति । पद्यते प्रतिपाद्यते
र्थमयं प्रमेयमनेनेति पदमिदं वाक्यरूपमेव ग्राह्यम् । तथा च प्रयोगः, 'कार्या-
पदात् प्रत्ययतः श्रुतेः' इति । इमानि श्रुतिवाक्यानि मनसिकृत्य च श्रीमति
पद्यं न्यबन्धि,—

'तारं पूर्वं तदनु हृदयं तच्च नारायणाये-
त्याम्नायोक्तं पदमवयतां सार्थमाचार्यदत्तम् ।' इति ।

च्च = नानाश्रुतिप्रसिद्धञ्च नारायणेति तृतीयं पदमवयतामिति व्याख्यान्ति । तथा
णवमवयतां तदनु हृदयं नमःपदमवयताम्, अथ तत् नारायणेति च पदमवयतामिति
ोऽन्वयक्रमः । अत्रान्यविधेऽन्वय एव औचित्यं पश्यन्ति, यथा—पूर्वं तारं भवति ;
ः पश्चात् हृदयं भवति । तच्चेत्यत्र **अनु** इत्येतदनुकृष्यते । तच्चानु = नमः—
ारायणेति पदं भवति । **इत्याम्नायोक्तम्** 'ओमित्यग्रे व्याहरेदि'त्यादिप्रकृतश्रुत्या
दं 'नारायणस्याष्टाक्षरं पद'मिति पदशब्दोपात्तं मन्त्रमवयतामिति । ननु तारमिति
ार्थे अप्रसिद्धमिति चेन्न—तथा सति श्रुताविव श्लोकेऽपि, तारं व्याहरेदिति

ततोऽमृतत्वमश्नुते ततोऽमृतत्वमश्नुत इति । एतत् सा
ऽधीते ॥ ३ ॥

प्रत्यगानन्दं ब्रह्म पुरुषं प्रणवस्वरूपम् । अकार उव
इति । तानेकधा समभरत् तदेतदोमिति । यमुक्त्वा मुच्
जन्मसंसारबन्धनात् । ओम् नमो नारायणायेति मन्त्रोपासको वैः
गमिष्यति । तदिदं पुण्डरीकं विज्ञानघनम् । तस्मात्तडिदाभमात्

ब्रह्मण्यो देवकीपुत्रो ब्रह्मण्यो मधुसूदनः[2] ।
ब्रह्मण्यः पुण्डरीकाक्षो ब्रह्मण्यो विष्णुरुच्यते ॥ इति

सर्वभूतस्थमेकं नारायणं कारणपुरुषमकारणं परं ब्रह्मोम् ।
शिरोऽधीते ॥ ४ ॥

1. भुवनलोकं. 2. मधुसूदनौ.

---

पदाध्याहारसंभवात् । तदनु इति च समस्तं पदमस्तु । तदेकदेशस्य अनु
विभज्यानुषङ्गोऽस्तु । वस्तुतस्तु तारपदं नपुंसकं प्रसिद्धमेव । यथा अथर्वशिरसि,
यः प्रणवः — सोऽनन्तः योऽनन्तः तत् तारम् ' इति, ' अथ कस्मादुच्यते त
दुच्चार्यमाण एव गर्भजन्मव्याधिजरामरणसंसारमहाभयात् तारयति, त्रायते च,
तारम् ' इति च स्पष्टं नपुंसकमेव निर्दिष्टम् । (३)

प्रणवे अक्षरविभागं दर्शयति **प्रत्यगिति** । अकारोकारमकारात्मकं
प्रत्यगानन्दब्रह्म प्रतिपादयतीत्यर्थः । अकारवाच्यब्रह्मैकशेषभूतः प्रत्यगात्मेति प्रणवार्थे
च तदतिशयावहत्वं तदानन्दहेतुव्यापारकारिणि प्रत्यगात्मन्यस्तीति भवति ब्रह्म प्रत्
शालि । अतः तत् प्रत्यगानन्दम् । अथवा **प्रत्यक्** = स्वस्मै स्वयं प्रकाशमानम् । उकारोः
लक्ष्मीवाचको वा । **पुण्डरीकं** शुभ्रम् । उत्कृष्टं वा । यथा बृहदारण्यके आदि
आह–( ८. ३. ) — ' दिशामेकपुण्डरीकमसि । अहं मनुष्याणामेकपुण्डरीकं भूय
**तडिदाभमात्रं** कार्त्स्न्येन ज्योतिर्मयम् । तमसः परस्तात् स्थिते वैकुण्ठभुवने तम
न प्रसक्तिः । तदीयज्योतिर्मयत्वपरिशीलने प्रकृतिरियं तमोवत् अन्धकारवत् अध्यव
तम इत्युच्यते । **नारायणमिति**, **गमिष्यती**त्यत्रान्वेति । (४)

प्रातरधीयानो रात्रिकृतं पापं नाशयति । सायमधीयानो दिवसकृतं शयति । तत् सायं प्रातरधीयानो पापोऽपापो भवति । माध्यंदिन-ाभिमुखोऽधीयानः पञ्चमहापातकोपपातकात् प्रमुच्यते । सर्ववेद-पुण्यं लभते । नारायणसायुज्यमवाप्नोति, श्रीमन्नारायणसायुज्य-ति, य एवं वेद ।

[ ओम् सह नाववत्विति शान्तिः ॥ ]

इति नारायणोपनिषत् ॥

श्रीरस्तु

---

दचतुष्टयशिरसां निर्दिष्टनामध्ययनस्य फलं दर्शयति प्रातरिति । 'तदन्तर्भावात् त्वां न त्ते श्रुतिरपि' इति न्यायेन नारायणाभिधायि पदं सर्वं तद्वक्षःस्थलनित्यवासया श्रिया । नारायणमाहेति अष्टाक्षरमन्त्रे उकारस्यान्यार्थकत्वेऽपि लक्ष्मीरुक्तप्राया; किमुत लक्ष्मीपरत्वे 'उद्धृता विष्णुना लक्ष्मीरुकारेणोच्यते तथे'ति स्मरणादित्याशयेन रायणेत्युक्तम् ।

इति वात्स्यचक्रवर्ति-वीरराघवाचार्य-
कृतिषु उपनिषद्भाष्यपरिष्कारे
नारायणोपनिषत्परिष्कारः ।

शुभमस्तु ।

श्रीः

[ येनोपनिषदां भाष्यं रामानुजमतानुगम् ।
रम्यं कृतं प्रपद्ये तं रङ्गरामानुजं मुनिम् ॥ ]

श्रीरङ्गरामानुजस्वामिविरचितं

# पुरुषसूक्तभाष्यम्

* अतसीगुच्छसच्छायमञ्चितोरःस्थलं श्रिया ।
अञ्जनाचलशृङ्गारमञ्जलिर्मम गाहताम् ॥

प्रसङ्गात् पुरुषसूक्तभाष्यमपि लिख्यते (?) ।
यतः प्रपञ्चसंभूतिविभूतिपरिभूतयः ।
पुरुषाय नमस्तस्मै परस्मै विस्मयात्मने ।
तं प्रणम्यादिपुरुषं जगतामादिकारणम् ।
दुर्ज्ञानं पौरुषं सूक्तं व्याकरोमि यथामति ।

ोपाद्ये पुराणे —

'इदं पुरुषसूक्तं हि सर्ववेदेषु पठ्यते ।
अतः श्रुतिभ्यः सर्वाभ्यो बलवत् समुदीरितम् ।
इदं पुरुषसूक्तं हि यजुष्यष्टादशर्चकम् ।
ऋग्वेदे षोडशर्चं स्यात् पञ्च वाजसनेयके ।
सामवेदे तु सप्तर्चं तथैवाथर्वणेऽपि च ।'
वेदेषु याजुषं वेदमवलम्ब्य वदाम्यहम् ।
मदर्वाचीनतां प्रेक्ष्य नोपेक्षन्तां मनीषिणः ।
श्रुतिषु प्रबला [मन्त्रा?] स्तेष्वप्यध्यात्मवादिनः ।
तत्रापि पौरुषं सूक्तं न तस्मात् विद्यते परम् ।

---

* अस्य श्लोकस्य मातृकायामभावेऽपि अस्य प्रागः श्रीरङ्गरामानुजस्वामिप्रण
ग्रन्थोपक्रमे उपलम्भादौचित्यादिह घटनं कृतम् । अशुद्धिबहुलैव मातृकाऽत्रोपलब्धा ।
यथाशक्ति शोधनं कृत्वा प्रकाश्यते । मद्रनगरप्राच्यमातृकाकोशालये मातृका द्रष्टव्या ।

अत्र **प्रसङ्गा**दित्युपक्रमात् इतः प्राक् प्रणीतं किमिति विमृश्यम् । अन्तेऽपि द्रष्टव्य

( ऋषिच्छन्दोदेवताविनियोगफलप्रदर्शनम् )

---

वान् शौनकः —

.... पुरुषसूक्तस्य ऋषिर्नारायणः स्मृतः ।
छन्द आनुष्टुभं सूक्तं तिस्रोऽन्त्यास्त्रिष्टुभो मताः ।
परमव्योमवासी च पुरुषो देवताऽभवत् ।
प्रथमां विन्यसेत् वामे द्वितीयां दक्षिणे करे ।
तृतीयां वामपदे च चतुर्थीं दक्षिणे तथा ।
पञ्चमीं वामजानौ तु षष्ठीं दक्षिणके तथा ।
सप्तमीं वामकट्यां तु अष्टमीं दक्षिणे तथा ।
नवमीं नाभिदेशे तु दशमीं हृदये तथा ।
एकादशीं कण्ठदेशे द्वादशीं वामबाहुके ।
त्रयोदशीं दक्षिणे तु आस्यदेशे चतुर्दशीम् ।
अक्ष्णोः पञ्चदशीं न्यस्य षोडशीं मूर्ध्नि विन्यसेत् ।
एवं न्यासविधिं कृत्वा पञ्चाङ्गानि समालभेत् ।
प्रायश्चित्ते जपे चैव विष्णोराराधने तथा ।
मोक्षे वश्येऽग्न्युपस्थाने सुपुत्रप्रापणेऽपि च ।
सर्वकामफलावाप्तावारोग्ये मृत्युनाशने ।
एतेष्वर्थेष्विदं सूक्तं मुनयो विनियुञ्जते ।

ा .... द्राघूलः — ' यत्रयत्र कर्मभ्रेषो यजुर्भ्रेषो वा, तत्रतत्र पुरुषं ध्यायेत् ।
ुच्चरेत् । पूर्णत्वात् पुरुष इति विज्ञायते ।

---

ब्रह्मयज्ञे जपेत् सूक्तं पौरुषं चिन्तयन् हरिम् ।
स सर्वान् जपते वेदान् साङ्गोपाङ्गान् द्विजोत्तम ।
जप्त्वा तु पौरुषं सूक्तं मुच्यते गुरुतल्पगः ।

सकृज्जप्त्वास्यवामीयं शिवसङ्कल्पमेव च ।
जप्त्वा तु पौरुषं सूक्तं मुच्यते गुरुतल्पगः ।

बोधायनम् — मातृदुहितृस्नुषास्वसृसवर्णाविधवागमनादौ जले निमज्जन् पुरुषं सूक्तं त्रिरुच्चारयेत्, तदानीमेव पूतो भवति । विष .... .... . पवित्राणि यथाशक्ति जपेत् विशेषतः .... .... शब्दाभ्यां सदृशीमि—

ऋग्विधाने शौनको वदति —

‘ पुरुषस्य हरेः सूक्तं सर्वपापप्रणाशनम् ।
वक्ष्ये पुरुषसूक्तस्य विधानं चार्चनं प्रति ।
आद्ययाऽऽवाहयेद्देवमृचा तु पुरुषोत्तमम् ।
द्वितीययाऽऽसनं दद्यात् पाद्यं चापि तृतीयया ।
चतुर्थ्याऽर्घ्यं प्रदातव्यं पञ्चम्याऽऽचमनीयकम् ।
षष्ठ्या स्नानं प्रकुर्वीत सप्तम्या वस्त्रमेव च ।
यज्ञोपवीतमष्टम्या नवम्या गन्धमेव च ।
दशम्या पुष्पदानं स्यादेकादश्या तु धूपकम् ।
द्वादश्या दीपदानं स्यात् त्रयोदश्या हविस्तथा ।
चतुर्दश्याऽञ्जलिं कुर्यात् पञ्चदश्या प्रदक्षिणम् ।
षोडश्योद्वासनं कुर्याद्देवमाराधयेद्धरिम् ।
स्नाने वस्त्रे निवेद्ये च दद्यादाचमनीयकम् ।
दद्यात पुरुषसूक्तेन यः पुष्पाण्यप एव वा ।
अर्चितं स्याज्जगदिदं तेन सर्वं चराचरम् । ’

मोक्षे योगवासिष्ठे — *

‘ संसारान्मोक्षमिच्छन् यः संत्यजेदेषणात्रयम् ।
निस्पृहः सर्वकामेभ्यः समलोष्टाश्मकाञ्चनः ।
गुरोः पादौ तु संगृह्य स्वाचम्य प्रयतो भवेत् ।

* ज्योतिरधिकरणश्रुतप्रकाशिकायां योगवासिष्ठात् वचनान्तरमुदाहृतम् ।

नमश्च पावनं कृत्वा सन्त्यजेदेवणालयम् ।
ततो गच्छन् हरेर्वेश्म पावनं सुमनोहरम् ।
ततो मनोगतान् कामान् सर्वान् त्यक्त्वा प्रसन्नधीः ।
अनिकेतः स्थिरमतिरादिदेवे जनार्दने ।
येन केन चिदाच्छन्नो येन केनचिदाशितः ।
मेघच्छन्न इवादित्यो भस्मच्छन्न इवानलः ।
आत्मानं गूहमानस्तु सर्वभूतदयान्वितः ।
निर्ममो निरहङ्कारः समदुःखसुखः क्षमी ।
एकान्ती यतचित्तात्मा त्यक्तसर्वपरिग्रहः ।
ध्यायन्नारायणं देवं हृदयाम्भोजमध्यगम् ।
दिग्देशकालावस्थाद्यैरनवच्छेद्यवैभवम् ।
सर्वदा पौरुषं सूक्तं मनसैव जपेच्छुचिः '॥ इति ।

गवासिष्ठे —

'यः पौरुषस्य सूक्तस्य जानात्यर्थं यथा तथा ।
स जन्मनीह मुक्तस्स्यात् पुराणेषु च दर्शनात् ।
विष्णुः पुरुषसूक्तार्थः पुरुषोऽध्यवसीयते ।'

ाध्याये —

'सर्वं वशं मम भवेदिति सञ्चिन्तयन् मुनिः ।
जपेत्तु पौरुषं सूक्तं प्रणिपत्य जनार्दनम् ।
यद्वशे वर्तते कृत्स्नं चराचरमिदं जगत् ।
वशे भवति तस्येदं जगत् सर्वं मुनेरपि ॥' इति ।

यः — 'सहस्रशीर्षा पुरुष इत्युपहितां पुरुषेण नारायणेन यजमान ते ।'

म् = इष्टकाभिः कृतोपधानामित्यर्थः ।

वाधूलसूत्रे — नारायणदृष्टेन पुरुषदैवतेनोपहितां चितिमुपतिष्ठमान इह पुरुषो भवेदिति —

आयुष्मत्पुत्रावाप्तौ ऋग्विधाने —

' पुलेच्छुर्ब्राह्मणः शुद्धः सुप्रसन्नमना भवेत् ।
पौरुषेण च सूक्तेन जुहुयादाज्यमन्वहम् ।
पायसान्नं चरुं कृत्वा तेनैव जुहुयाच्छुचिः ।
हुतशिष्टं चरुं शुद्धमश्नीयाताञ्च दम्पती ।
एवं त्रिंशद्दिनादूर्ध्वं गर्भो भवति सुस्थितः ।
सर्वलक्षणसंपन्नः पुत्रो भवति पावनः ' इति ।

श्रीशास्त्रे — सर्वकामावाप्त्यादिषु पुरुषसूक्तसमाराधनेन अचिरात् सर्वान् वाप्नोतीति ॥

( पुरुषसूक्तावतारणम् )

एवं छन्दांस्यृषीन् देवं विनियोगं तथा फलम् ।
उक्त्वा तु पौरुषं सूक्तमवतारयितुं यते ।

श्रीशास्त्रे — पुरुषसूक्तसंहितायां भगवान् सनत्कुमारो नारदमुनये भः मुपदिशन् पुरुषसूक्तमवतारयामास । तत्र नारदः परिपप्रच्छ, सर्वव्यापिनः किमर्थं शरीरपरिग्रह इति । तत्राह —

' पुरा नारायणो देवः कृपया परयाऽन्वितः ।
देवतिर्यङ्मनुष्यादीन् वीक्ष्य संसारमध्यगान् ।
एवं सञ्चिन्तयामास संस्मरन् वैभवं स्वकम् ।
स्वतःप्रमाणवाक्यानि दुर्विज्ञानं वदन्ति माम् ।
' अणोरणीयान महतो महीयान् ', ' निर्गुणो गुणी । '

दिग्देशकालावस्थाद्यैरनवच्छेद्यवैभवः ।
वृद्धिक्षयविहीनश्च सत्यकामो निरञ्जनः ।
विनेन्द्रियेण सर्वज्ञो विना पादेन सर्वगः ।
अनासोऽनुभवन् गन्धान् स्पृशन् सर्वमपाणिकः ।
शृण्वन् श्रुतिं विना शब्दमजिह्वो लेलिहन रसम् ।
साधनेन विना साध्यं सर्वं संसाधये ऽन्वहम् ।
तस्मात् सर्वप्रमाणैस्तु सुदुर्ज्ञानतरो ऽन्वहम् ।
मम रूपमविज्ञाय लोके मोक्षो न सिध्यति ।
तस्मात् संसारचक्रेऽस्मिन् भ्राम्यन्त्येते सुदुस्तरे ।
उद्धरेयमिमान् सर्वान् यातायातशताकुलान् ।
इति संचिन्त्य मनसा स्वच्छन्दोपात्तविग्रहम् ।
हित्वौपनिषदं रूपं प्रमाणानामगोचरम् ।
सर्वेषां स्तुतिभिर्योज्यं दृष्टमात्रेण मोक्षदम् ।
सर्वकल्याणसंपूर्णं गुणराशिसमाश्रयम् ।
सहस्रावयवोपेतमाददे रूपमद्भुतम् ।' इति ।
ब्रह्माण्डपुराणे क्षीराब्धिवर्णने —

उक्तञ्च — न ते रूपमित्यादि —

'सहस्रकन्धरं चारु तुङ्गोरःस्थलमुन्नतम् ।
सहस्रबाहुसंयुक्तमिन्दिरावरमन्दिरम् ॥' इति च ।
श्रीभूमी यस्य देव्यौ सकलमुनिवशः किंकराः रक्ष्यमण्डं
सृष्ट्याद्याः शिल्पलीलाः कमलजविबुधाः पुत्रपौत्रादयोऽपि ।
वैकुण्ठं नाम धाम स्तुतिकृदुपनिषच्छासनं शास्त्रवर्गः
सोऽयं वैकुण्ठ [नाथः ?] श्रियमतिशयिनीं वैष्णवीं नो ददा

श्रीः

श्रीमते पुरुषाय नमः ।

# पुरुषसूक्तम् ।

रेः ओम् सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।

सहस्रशीर्षा पुरुषः — ।

सहस्रशब्दोऽनन्तवचनः । सहस्राणि शिरांसि, सहस्राण्यक्षीणि, स
ाः यस्य सहस्रशीर्षा सहस्राक्षः सहस्रपादुकः । 'शीर्षन् छन्दसी'
रशब्दस्य शीर्षन्नादेशः । गीयते हि 'अनन्तबाहूदरवक्त्रनेत्र' मिति

श्रीः

श्रीमद्भ्यो रङ्गरामानुजमहादेशिकेभ्यो नमः ।

## पुरुषसूक्तभाष्यपरिष्कारः ।

यो हि व्यूह्य विरिञ्चादि सृजत्याश्रितमुक्तिदः ।
महते पुरुषायास्मै परस्मै श्रीमते नमः ॥ १ ॥

अयि हृदय ! किमर्थं क्लिश्यसे कल्मषाणां
हरणमतिपवित्रं पौरुषं सूक्तमस्ति ।
अधिगमयति स श्रीरङ्गरामानुजन्मा
यतिपतिमतवर्त्माभ्यादरश्चैतदर्थम् ॥ २ ॥

सर्वत्र वेदे श्रुतमादरार्हं स्मृतीतिहासादिविवेचितार्थम् ।
शारीरके सूक्तमिदं न नूनं मीमांसितं ब्रह्मपरत्ववाद्यात् ॥ ३ ॥

यद्यपि ज्योतिरधिकरणश्रुतप्रकाशिकायाम्, 'पुरुषसूक्तं कस्मात् सूत्रकारेण न निरू
याशङ्क्य, संदेहाभावादिति समाहितम् — अथापि चिदचिद्विलक्षणपुरुषविशेषपरत्ववि
यलेशस्याप्यभावेऽपि तत्तन्मन्त्रघटकपदवाक्यार्थतद्योजनाप्रकारनिर्धारणं दुष्करमेव लक्ष्य
र्णनार्थप्रवृत्तेषु स्मृतीतिहासपाञ्चरात्रग्रन्थेषु नैकरूप्यमुपलभ्यते । अधिकृतममुपयुज्यमान
ार्थोऽवश्यमेवाधिगन्तव्यः, 'योऽर्थज्ञ इत् सकलं भद्रमश्नुते' इति श्रुतेः । अत इदम
भाषितम् । पुरुषसूक्तभाष्यमिदमेतावता कालेन अलब्धप्रकाशं श्रीरङ्गरामानुजस्वामिभिर्नि
न प्रथमानं नूनमुपनिषद्भाष्यकारश्रीरङ्गरामानुजस्वामिकृतमेवेति औचित्यादाशेरते । निरूप
यामीषद् भेदोऽस्तीत्येतत् पुनरीषत्करम् । अबाधितार्थत्वाच्चादरणमवश्यमर्हति । अत्रोपक्र
ङ्गादिति निर्देशात किमिदं भाष्यं ग्रन्थान्तमध्यनिविष्टम्, स्वतन्त्रं वेति विमृश्यमस्ति
ान्तेऽपि द्रष्टव्यम् ।

शब्द उपलक्षणार्थः । 'सर्वतःपाणिपादं तत् सर्वतोऽक्षिशिरोमुखम्
तः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति' । मन्त्रान्तरं च भवति, 'विश्वतश्चक्षु
तोमुखो विश्वतोबाहुरुत विश्वतस्पात्' इति । पादादयो भगवत एव सङ्क
ल्पकल्पिताप्राकृततेजोमयदेहगता उच्यन्ते । यद्वा त्रैलोक्यशरीरत्वादस्य सुरन
गताः पादादयः तदीया इत्युपचर्यन्ते । यद्वा पादादिकार्यगमनदर्शनवचना
णार्थः । तेन सहस्रपात्त्वेन सर्वगतत्वं सहस्राक्षत्वेन सर्वदर्शित्वं सहस्रशीर्ष
धारत्वञ्च, सर्वलोकाभिषिक्तत्वञ्च सर्वमुखप्रदानत्वम् (ञ्च?) सर्वरक्षणप्रतिश्रवण
रक्षापेक्षाश्रवणत्वञ्च, (?) केशादिपादान्तोक्तत्वात् सर्वावयवत्वेऽपि सह
कम् । अक्षोपलक्षणेन पञ्चेन्द्रियत्वोक्तं (?) सिद्धम् । तथा च श्रुतिः — 'अपा
ो जवनो गृहीता पश्यत्यचक्षुः स शृणोत्यकर्णः' इति । 'गामाविश्य
ानि धारयाम्यहमोजसा' इत्यादि च । यद्वा सर्वाधिकत्वं सर्वज्ञत्वं सर्वशक्तित्वं
द्धम् ।

पुराणत्वात् **पुरुषः** । तथा च श्रूयते - 'अन्तरतः कूर्मं भूतं स
ब्रवीत् । मम वै त्वङ्मांसा समभूत् । नेत्यब्रवीत् — [पुनश्च भगवान् कूर्म
ाह ।] — पूर्वमेवाहमिहासमिति । तत् पुरुषस्य पुरुषत्वम् । सहस्र
षः । सहस्राक्षः सहस्रपाद् भूत्वोदतिष्ठत्' इति । यद्वा पूर्णत्वात् **पुरुषः**
ेनेदं पूर्णं पुरुषेण सर्वं' मिति श्रुतेः । यद्वा शरीराख्ये पुरि शयनात् **पुरु**
कारस्य षकारादेशः । श्रीविष्णुस्मृतौ, —

'पुरमाक्रम्य सकलं शेते यस्मान्महाप्रभुः ।
तस्मात् पुरुष इत्येष प्रोच्यते तत्त्वचिन्तकैः ॥' इति ।

यद्वा **पुरु**शब्दो बहुपरः । वन षण संभक्तौ । बहूनां बहुभिर्वा भ
**षः** । यद्वा — षण दाने । बहुदानात् **पुरुषः** । एतद्गुणोपेतो भ
सुदेवः ; नान्य इत्यर्थः ।

ञ्चे पुराणे —

'भगवानिति शब्दोऽयं तथा पुरुष इत्यपि ।

निरुपाधी च वर्तेते वासुदेवे सनातने ।
सर्वलोकप्रतीत्या च पुरुषः प्रोच्यते हरिः ।
तं विना पुण्डरीकाक्षं नान्यः पुरुषशब्दभाक् । इति ।
ब्रह्माद्या देवताः सर्वा यक्षतुम्बुरुकिन्नराः ।
ते सर्वे पुरुषांशत्वादुच्यन्ते पुरुषा इति ।'
श्रीमदुत्तररामायणे — अगस्त्यवचनम् —
'असौ रामो महाबाहुरतिमानुषचेष्टया ।
तेजोमहत्तया वाऽपि संस्मारयति पूरुषमिति ।

श्रीहरिवंशे —

'गोवर्धनादिधरणात् नाथ ! नन्दसुतोऽपि सन् ।
पुरुषस्यांशसंभूतं त्वां वयं निरणैष्म हि ।'

स्कन्दपुराणे —

'यथा भास्करशब्दोऽयमादित्ये प्रतितिष्ठति ।
यथा चाग्नौ बृहद्भानुर्यथा वायौ सदागतिः ।
यथा पुरुषशब्दोऽयं वासुदेवेऽवतिष्ठते ।
तथा शङ्करशब्दोऽयं महादेवे व्यवस्थितः' इति ।

श्रीविष्णुपुराणे —

'देवतिर्यङ्मनुष्येषु पुन्नामा भगवान् हरिः ।
स्त्रीनाम्नी लक्ष्मीर्मैत्रेय ! नानयोर्विद्यते परम् ॥' इति ।

श्रीनारसिंहे —

स एव वासुदेवोऽयं पुरुषः प्रोच्यते बुधैः ।
प्रकृतिस्पर्शराहित्यात् स्वातन्त्र्याद्वैभवादपि ।

वैष्णवे पुराणे —

'स एव वासुदेवोऽयं साक्षात् पुरुष उच्यते ।
स्त्रीप्रायमितरत् सर्वं जगद्ब्रह्मपुरस्सरम् ॥' इति

स भूमिं विश्वतो वृत्वा अत्यतिष्ठद् दशाङ्गुलम् ॥ १ ॥

: कवयोऽपि —

'संहृत्य लोकान् पुरुषोऽधिशेते श्रीवत्सलक्ष्मा पुरुषश्च साक्षात् ।'

'तमसः परमं तमव्ययं पुरुषं योगसमाधिना रघुः ।'

'हरिर्यथैकः पुरुषोत्तमस्ततः ?' इति ।

विचनैः पुरुषो वासुदेव इति सिद्धम् ।

**स भूमिं विश्वतो वृत्वा** — एवम्भूतः सः **भूमिं** भूम्यादिलोकजातं सर्वतो **वृत्वा** व्याप्य, यद्वा **भूमिं** जगत्कारणं प्रकृतिं **विश्वतः** कार्यवर्गैः ॥ **अत्यतिष्ठद्दशाङ्गुलम्** । यथाऽऽह, 'अणोरणीयान् महतो महीयानिति णुत्वेन महत्त्वेन द्विधा तिष्ठति केशवः । तत्र पौरुषसूक्तेन महत्त्वमुप ।' इति । तस्मात् स भूतानि व्याप्य ततोधिको भवतीत्यर्थः । एतदुक्तं — योऽयं सहस्रशीर्षा पुरुषः, स पुरुषो भूम्यादिलोकजातं व्याप्य तस्माल्लोक-दशाङ्गुलमत्यतिष्ठत् ।

अथ दशाङ्गुलशब्दस्यार्थ उच्यते । अत्र दशाङ्गुलशब्देन न दशाङ्गुल-अपरिच्छिन्नस्य पुरुषस्य परिच्छेदप्रसङ्गात् । तर्हि कोऽर्थः ? उच्यते ।

दशदशानत्यन्तयोरित्येतस्मिन्नच्प्रत्ययः (?) अतिकोटियोजनयोरिति । एत-दिक उलच्प्रत्ययः । तस्मादनन्तयोजनमिदमतीत्यातिष्ठदित्युक्तं भवति ।

गे भुवनकोशाध्याये, —

'भूमेश्च ब्रह्मकोशस्याप्यन्तराळं कियद्वद ।
योजनानामनन्तत्वाद्दशाङ्गुळमिदं विदुः ।' इति ।

संहितायां पुरुषसूक्तार्थे—

सहस्रशब्दोऽनन्तवचनः । पुरुषशब्दो वासुदेवपरः । भूमिशब्देन भूम्याद उच्यन्ते । दशा ळशब्दोऽनन्तयोजनमाहेति ।

यद्वा अङ्गुळशब्दो गुणपरः । दशगुणवस्त्वन्तरभूतानि अतीत्या तदिति । .... .... दशोत्तरो वह्निः, वह्नेर्दशोत्तरो वायुः, वायोर्दशोत्तरं व्य दशोत्तरोऽहङ्कारः, अहङ्काराद् दशोत्तरो महान्, महतो दशोत्तरमव्यक्तम् । वस्त्वतीत्यातिष्ठदित्यर्थः ।

केचिदेवं व्याचक्षते - दशाङ्गुळशब्दो हृदयाकाशवाचकः । भूम व्याप्य हृदयाकाशमत्यतिष्ठत् । दशाङ्गुळपरिमाणहृदयाकाशं अणोरणीयअ रात्मतया अत्यतिष्ठत् । धकारस्य स्थाने तकारश्छान्दस इति अध्यर्थोऽ इति — तन्न युक्तम् । श्रूयमाणस्यातिशब्दस्य मुख्यार्थसंभवे सति अध्य युक्तत्वात् । विश्वत इति हृदयस्यापि कबलीकृतत्वाच्च । 'अणुत्वेन इत्यादिना, 'दहरादिमवाक्येन तस्याणुत्वं प्रदर्शितम्' इति योगवासिष्ठे नाच्च । दहरशब्दः सूक्ष्मपर्यायः ।

नन्वेवं हि पूर्वमुक्तम्, अयं पुरुष इति । सर्वदेशसर्वकालापरि वेषं विहाय सर्वेषां दर्शनस्तुतिसमाराधनाद्यर्हं परिच्छिन्नं कञ्चन वेषमाद प्रत्युतान्यथा वदति ; अस्य परिच्छिन्नोऽप्ययं वेषः प्राप्तः पूर्ववदपरिच्छिन्न परिच्छिन्नत्वेन स्तूयत इति ।

अस्य चोद्यस्य परिहारः पाद्मेऽभिहितः । स उच्यते — 'आत रूपं जगत् त्रातुं परः पुमान् । स तादृशेन रूपेण दुर्ज्ञानो जायते हरिः मूर्तः पुरुषः स्तोत्रयोग्यो न जायते । त .... .... .... .... .... नारा णाय च कल्पते' ।

श्रीमात्स्ये अगस्त्यवचनम् —

'तस्यावनिगतस्येह प्रत्यक्षस्यापि ते वपुः ।
न ज्ञायते च तत्त्वेन परं रूपं कुतस्तव ।
मीनात्मा यादृशोऽसि त्वं तादृशस्त्वमसि प्रभो ।
वयं त्वामीदृश इति वेदितुं नोत्सहामहे ।'

पुरुष एवेदँ सर्वं यद् भूतं यच्च भव्यम् ।

ररामायणे अगस्त्यवचनम्,

'शरीरे तव पश्यामि जगत् सर्वं रघूद्वह ।
तेजसा च सुदुर्दर्शो मध्याह्न इव भास्करः' इति ।

'अस्य परिग्रहो न कार्य इत्यर्थः । अशरीरोऽपि सन् सर्वं करोत्येव ।
रिग्रहो न कार्य इत्यर्थः । अनिन्द्रियोऽपि सन् तत्तदिन्द्रियकार्यं करोत्येव ।
ोपादो जवनो गृहीता,' 'अन्धो मणिमविन्दत्, तमनङ्गुलिराह्वयत् । अग्रीवः
त्' इत्यादि । (१)

एवं देशतो व्याप्तिमुक्त्वा कालतो व्याप्तिमैश्वर्यं चैवमाह पुरुष एवेदं सर्व-
यदिदं वर्तमानं कार्यजातम्, तत् सर्वं पुरुष एव । तदुपादानत्वात् सर्वस्य ।
कार्यमुपादानेन विनाऽस्ति । यद्भूतं अतीतं वस्तु, तदपि पुरुष एव । यच्च
[=भविष्यच्च पुरुष एव । प्रपञ्चपुरुषयोरीश्वरेशितव्यभावात् समानाधिकरण-
ा:, 'ग्रामोऽयं देवदत्तः' इतिवत् । कार्यकारणभावाद्वा, 'पानीयं प्राणिन
' इतिवत् । एवमेव श्रुतिस्मृतीतिहासपुराणेषु सामानाधिकरण्यवादाः द्रष्टव्याः
देवः सर्व' मिति, 'सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत ।',

'ज्योतींषि शुक्राणि च यानि लोके-
त्रयो लोका लोकपालास्त्रयी च ।
त्रयोऽग्नयश्चाहुतयश्च पञ्च
सर्वे देवा देवकीपुत्र एव ॥
सर्वे देवाः सर्ववेदाः स शास्त्राः
सर्वे .... .... यज्ञाश्च कृष्णः ।
ज्योतींषि विष्णुर्भुवनानि
विष्णुर्वनानि विष्णुर्गिरयो दिशश्च ॥
नद्यः समुद्राश्च स एव सर्वं
यदस्ति यन्नास्ति च विप्रवर्य' इति ।

. अरयतिष्ठदित्यस्य आशयान्तरवर्णनम् अरये त्यादिना । न कार्यः नावश्यं कर्तव्यः

उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥ २ ॥
एतावानस्य महिमा अतो ज्यायाँश्च पूरुषः ।

ाभारते —

य एष देवकीपुत्रः पुरस्तादवतिष्ठते ।
स एव पुरुषो भूतं भव्यं चापि तथा भवत् ॥'

एवमस्य कालतो व्याप्तिमुक्त्वा अयमेव सृष्टिकार्यजातचेतनवर्गस्य (?) सर्वदे
ालमोक्षप्रद इत्याह — **उतामृतत्वस्येशान** इति । **उत** किञ्च अयमेव पु
**मृतत्वस्य** मोक्षस्य **ईशानः** । सायुज्यादिचतुर्विधमोक्षप्रदो भवति । 'म
त्येऽमृते देवे कीर्तितं त्वमृतं बुधैः' इति नैघण्डुकोक्तत्वादमृतशब्दो मोक्षपर्याय
क्षस्येशानो भवति । अन्नेन यदतिरोहति, तस्य शरीरवर्तिनो जीवजातस्य मं
ं भगवानेवेष्टे । यत् कार्यजातम**न्नेन** अदनीयेन भोग्यद्रव्येण स्वकारणमर्त
ति — 'अन्नाद्भूतानि जायन्ते' इति श्रुतिः — अहरहरशितेनान्नेन पूर्वपृ
श्यकौमाराद्यवस्था अतीत्य **यत्** जीवजातं **रोहति** वर्धते, तस्य मोक्षप्रदाने विष
ानो भवतीत्यर्थः । मोक्षधर्मे,

'अन्नाज्जातस्य सर्वस्य मनुष्यादेरकारणात् ।
निर्वाणदायी भवति कृपया पुरुषोत्तमः ।' इति । (

उक्तं सर्वेश्वर [महिमान] मुपसंहरति **एतावानस्य महिमा** । एतत्परिमा
. .... णोस्य महिमा विभूतिमात्रम् । **अतो ज्यायांश्च पूरुषः** । **अतः** ईदृश
ान्नः **ज्यायान्** प्रशस्तः श्रेष्ठः । यत एव पुरुषः सकलानपि लोकान् व्या
ोति, यतश्च समस्तवस्तुजातमसौ सृजति, यतश्च संसारिणो मोक्षस्यायमीष्टे, अ
ावानस्य महिमा ।

शतपथब्राह्मणे अध्यात्मखण्डे प्रतिपादितम् — "यदाऽयं नारायणाख्
षो महान् भवति, तदानीमेवाणुर्भवति । यदाऽयं व्याप्तो भवति, तदैव प्रादेशि
ति । यदैव भूमौ भवति, तदैव परमव्योम्नि भवति । यदा एक एव भवति
। अनेकः । यदाऽयं प्राकृतो भवति, तदैवाप्राकृतो भवति । यदा विषयव

दैवोपरतो भवति । यदा नरको भवति, तदानीमेव स्वर्गो भवति । यदा
ते, तदैव पुरुषो भवति । यदा मनुष्यो भवति, तदा देवो भवति । यदा
ते, तदा शून्यो भवति । यदा प्रपञ्चो भवति, तदा प्रपञ्चाद्भिन्नो भवति ।
ो भवति, तदैव मुक्तो भवति । यदा शुक्लो भवति, तदा कृष्णो भवति ।
ारी भवति, तदा अशरीरी भवति । यस्मात् यानि यानि विरुद्धस्वभा-
ानि सर्वाणि तदानीमेवास्मिन् लीनानि भवन्ति, तस्मादयमीशः इति
दुर्वचः, दुर्ध्यानः । तस्मात् ज्येष्ठः । वाङ्मनसोरगोचरः " इति ।
पुरुषसूक्तप्रकरणे नारदस्तुतौ, —

' देशतः कालतो वाऽपि मोक्षदत्वाच वेधसः ।
हरेर्विभूतिमात्रं तु केवलं प्रतिभाषितम् ।
अतो महिम्नः स्वल्पांशात् ज्यायानेव परः पुमान् ।
ज्यायस्त्वं तस्य तत् सर्वैः सुदुर्ज्ञानतरं भवेदिति ।
' ब्राह्मणेभ्योऽखिलेभ्यश्च भूतजातेभ्य एव च ।
ब्रह्मादिभूतसंघेभ्यो ज्यायानेव परः पुमान् ।
ओजसो रूपतो वापि यशसो वीर्यतोऽपि च ।
विभुत्वातिशयाद्वापि ज्यायानेव जनार्दनः ।

ते —

' एकतो वा जगत् कृत्स्नमेकतो वा जनार्दनः ।
सारतो जगतः कृत्स्नादतिरिक्तो जनार्दनः ।

ीतायाम् —

" द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ।
यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः " इति ।

पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥ ३ ॥

नारसिंहे —

" ब्रह्मादिस्तम्बपर्यन्तं जगत् स्थावरजङ्गमम् ।
सर्वमेवास्य महिमा स च ज्यायानतो हरिः ।"

अथवा — अस्य परिदृश्यमानस्य चराचरात्मकस्य प्रपञ्चस्य महिमा एत
्छिन्नः । अतः अस्मात् प्रपञ्चात् पुरुषो ज्यायान् अपरिच्छिन्नप्रभावः ।

अस्य ज्यायस्त्वमेव प्रपञ्चयति **पादोऽस्य विश्वा भूतानि** । अस्य दुर्ज्ञ
षस्य **विश्वा भूतानि** चराचरात्मकानि **पादः** अंशः कलामात्रमित्य
्यादिशक्तेरेकदेशः । तदीयशक्तिलेशविजृम्भितमिदं जगद् गीयते, —

' विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ' इति ।

विष्णुपुराणे —

' यस्यायुतायुतांशे विश्वशक्तिरियं स्थिता ' इति ।

ेव गोपीनां वचने —

" यस्याखिलं महीव्योमजलाग्निपवनात्मकम् ।
ब्रह्माण्डमल्पकांशांशो तोष्यामस्त्वां कथं वयम् ॥ "

नारसिंहे —

' यदंशांशतदंशांशतलेशलवलेशतः ।
उत्पन्नश्च प्रलीनश्च जगत् सर्वं चराचरम् ' इति ।

**त्रिपादस्यामृतं दिवि** । त्रयः पादा यस्य, तत् त्रिपादुक्तम् । त्रिश
्थपरः । अस्य निरतिशयज्ञानानन्दवैराग्यैश्वर्यादिभिरनेकैः सुगुणैरुपेतस्य रूप
वि । **अमृतम्** अमरणधर्मकमित्यर्थः । **दिवि** परमे स्थाने । यत् परमपदव
यः सदा पश्यन्ति । ' द्युशब्दः परमे व्योम्नि स्वर्गे वियति कथ्यते ।'

ण्ठसंहितायाम् —

" अनन्तायामविस्तारो वैकुण्ठः संप्रकीर्तितः ।
तस्मादस्य त्रिपादांशो वैकुण्ठो भासतेतरामिति ।"

त्रिपादूर्ध्व उदैत् पुरुषः पादोऽस्येहाभवात् पुनः ।

एवं सात्त्वतसंहितायां वासुदेवस्य चतुर्व्यूहाध्याये, 'अत्र पादशब्द
ांशः । त्रिपाच्छब्दः त्रिपादवचनः' ।

पुरुषसंहितायां वैकुण्ठसंहितायाञ्च, —

'सदादिपुरुषो विष्णुः सर्वव्यापी सनातनः ।
शरीरात् स्वाज्जगत् त्रातुं सङ्कर्षणमभावयत् ।
स च प्रद्युम्नसंज्ञस्सन्ननिरुद्धमभावयत् ।
तस्मात् ब्रह्मा समुत्पन्नो जगत् स्रष्टुं चराचरम् ।
एवं चतुर्धा संव्यूह्य स्वात्मानं पुरुषोत्तमः ।
अण्डे ह्यप्राकृते नित्यं त्रिपादेन विराजते ।
इतरेण च पादेन प्राकृतेऽण्डे विराजते ।
जगत्सृष्ट्यादिकार्याणि कर्तुकामः स्वलीलया ।'' (३

उक्तमेवार्थान्तरविवक्षयाऽनुवदति — **त्रिपादूर्ध्व उदैत्** । उद्गतवान् । य
एष **त्रिपादि**ति त्रिपादः पुरुष उर्ध्वं प्रकृतिमण्डलादूर्ध्वम् **उदैत्** उदगच्छत

तं दुर्ज्ञानं पुरुषं विहाय तस्य चतुर्थांशमनिरुद्धाख्यं नारायणमद्
प्रकर्षेण स्तोतुमारभन्ते । **पादोऽस्येहाभवात् पुनः** । अस्य **पादः** एकदेशः
भवत् **पुनः** संसारचक्रे भोग्यभोगायतनादिरूपेण पुनरभवत्=पुनः पुनः प्रवर्तते
**भवा**दित्याध्वर्यवपाठे दीर्घः छान्दसः ।

यद्वा भगवद्व्यूहाभिप्रायं **पादोस्य विश्वा भूतानी**त्यादि । वासुदेवसंङ्कर्ष
द्युम्नानिरुद्धाकारो भगवांश्चतुर्व्यूहो भवति । अत्र भगवतस्तुरीयो भागः अ
द्धाभिधानः विश्वानि भूतान्यधिष्ठाय सृष्ट्यादीनि करोति । पूर्ववत् कार्यका
रभेदवादः । इतरैस्त्रिभिर्भागैर्वासुदेवसङ्कर्षणप्रद्युम्नाख्यैरुपेत**ममृत**मविनाशि प
त्स्वरूपं **दिवि** नाकपृष्ठे वसति । उक्तमेव व्यनक्ति **त्रिपादि**ति । वासुदेव
भैस्त्रिपात् पुरुष **ऊर्ध्वः** वाङ्मनसयोरगोचरस्सन् **उदैत्** प्रकृतिप्राकृतमयात् ह

**ततो विष्वङ् व्यक्रामत् साशनानशने अभि ॥ ४ ॥**

ुत्क्रान्तवान् । इह संसारमण्डले अस्य **पादः** अनिरुद्धाभिधानः भगवानभ-
ुनः पुनः सृष्ट्यादौ प्रवर्तत इति । तथाच पुराणे तत्त्वाध्याये, —

" सर्वस्याथ जगन्नाथः सर्वात्मा भूतभावनः ।
महतः प्रळयस्यान्ते जगत् स्रष्टुं समुद्यतः ।
परमव्योमनिलयो वासुदेवः सनातनः ।
शरीरात् स्वाज्जगत् त्रातुं संङ्कर्षणमभावयत् ।
स चाण्डजातमसृजत् महाभूतानि पञ्च च ।
दशोत्तराणि सर्वाणि परस्तात् प्रकृतेर्व्यधात् ।
तत्रत्यानाञ्च भूतानामन्योन्यानुभवाय च ।
प्रद्युम्नं भावयामास सदा कामरसप्रदम् ।
एवमप्राकृतान्येष बाह्यान्यण्डानि केशवः ।
सृष्ट्वा च प्राकृतं चाण्डं स्रष्टुं दध्रे स्वमानसम् ।
ततः स वासुदेवोऽयं प्रद्युम्नादुदपादयत् ।
सर्वस्य जगतः कोशमनिरुद्धाह्वयं हरिम् ।
स चानिरुद्धो भगवानादौ जलमभावयत् ।
जले तस्मिन् प्रचिक्षेप निजवीर्यं जगन्मयम् ।
तद् द्वितीयाण्डमभवदण्डात् ब्रह्मा व्यजायत ।
स भूतानां च सर्वेषामग्रे जातः पितामहः ।
जगन्निर्मातुमुद्युक्तः समन्ताद्विक्रमे .... .... ।
ततः संवर्द्धमानोऽयं सृष्टियज्ञात्मना व्यधात् । " इत्यादि ।

संप्रति विवक्षितां प्रपञ्चसृष्टिं वक्तुमुपक्रमते **ततो विष्वङ् व्यक्रामदि**ति
न्तादर्थे **विष्वङ्** निपातितः । **ततः** पश्चात् पुरुषः **ततः** महाप्रळयात् पञ्च
न पादनारायणेन **व्यक्रामत्** उद्यममकरोत् । किमुद्दिश्य । **साशनान**
**भि** । अशनेन सह वर्तत इति **साशनं** जङ्गमवस्तु । अशनमस्य नास्तीत्यन

**तस्माद् विराडजायत विराजो अधि पूरुषः ।**
**स जातो अत्यरिच्यत पश्चाद् भूमिमथो पुरः ॥ ५ ॥**

तु । ते उभे प्रति, **विष्वङ्** सर्वतः चराचरात्मकं समस्तं जगत् प्रति
त्स्वरूपं सृष्टिव्यापारमकरोदित्यर्थः । (४)

**तस्माद्विराडजायत । तस्मादेवं** व्यापारवतः पुरुषात् विराडजायत ।
शब्देन महदादिरूपेण विविधं राजतीति हिरण्मयमण्डमुच्यते । **विराजो**
**रुषः** । विराजोऽनन्तरं **पुरुषश्चतुर्मुखाख्योऽध्यजायत** । तथाऽऽह मनुः ।

'ततः स्वयंभूर्भगवानव्यक्तो व्यञ्जयन्निदम् ।
महाभूतादिवृत्तौजाः प्रादुरासीत् तमोनुदः ।
सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः ।
अप एव ससर्जादौ तासु वीर्यमपासृजत् ।
तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ।
तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः' इति ।

**त जातो अत्यरिच्यत** । तस्मात् ब्रह्मा अतिरिक्तोऽभवत् । **पश्चाद्भूमि-**
**:** । **अथो** शब्द .... र्थः । विभक्तिव्यत्ययेन भूमेः पश्चात् पुरस्ता-
त्यन्तं प्रवृद्धो व्याप्तो बभूवेत्यर्थः । सर्वत्रातिवृद्धकायोऽभवत् ।

शाम्बव्यपुराणे — पुरुषसूक्तसंहितायां — 'आदिश्चनसृणा .... .... ....
। स तस्मात् व्यापारानन्तरम् । अथ पादनारायणात् मूलं प्रकृतिरजायत ।
ः पादनारायणशासनात् महदहङ्कारादीन् पदार्थानजनयत् । एवं सूक्ष्मायां
त्या स पादनारायणः स्थूलसृष्ट्यर्थं चतुर्मुखमभिदध्यौ । तद्ध्यानात् ....
**।** विराजः पश्चात् पुरुषश्चतुर्मुखाख्यः अजायत । पश्चात् पुरतश्चाति-
अतिरेको वृद्धिः । सर्वकार्यक्षमोऽतिवृद्धकायोऽभवत् । वृद्धकायस्तान्
त .... अनिरुद्धनारायणोऽप्राक्षीत् । ब्रह्मन्! किं तूष्णीं भवसीति ।
ति होवाच । ब्रह्मन् ! तवेन्द्रियाणि देवान् ऋत्विजः कृत्वा त्वदीयं च
विः कृत्वा मां हविर्भुजं ध्यात्वा मय्यग्नौ निवेदय । मदङ्गस्पर्शमात्रेण

**यत् पुरुषेण हविषा देवा यज्ञमतन्वत ।**
**वसन्तोऽस्यासीदाज्यं ग्रीष्म इध्मश्शरद्धविः ॥ ६ ॥**

---

जगत्कोशभूतः त्वत्कायो बृंहिष्यते । तस्मादुद्भूतानि प्राणिजातानि निर्मान् त्वष्टा भवष्यसि । य एव सृष्टियज्ञं जानाति, स जन्मनीह मुक्तो भ

ईदृशस्य ब्राह्मणस्योपरि .... .... .... .... वर्तते ।

श्रीवराहपुराणे —

" सिसृक्षोरनिरुद्धाख्यादण्डं प्रथममुद्बभौ ।
अण्डाद्ब्रह्माऽध्यजायत निर्मातुं सकलं जगत् ।
स जातमात्रो भगवानवर्धत समन्ततः ।
तं प्रवृद्धमहाकायं ब्रह्माणं रचिताञ्जलिम् ।
जगत्सृष्टिमजानन्तमनिरुद्धो हरिर्जगौ ।
त्वमिन्द्रियैर्देवसंज्ञैः कुरु यज्ञं समाहितः ।
त्वच्छरीरं हविर्ध्यात्वा मां ध्यात्वा च हविर्भुजम् ।
प्रणवोच्चारणेनैव मय्यग्नौ त्वां निवेदय ।
मदङ्गस्पर्शमात्रेण स्रष्टुं योग्यो भविष्यसि । "

संप्रति प्रपञ्चसृष्टिं यज्ञरूपेण कथयति । **यत् पुरुषेण हविषा** — यदा **पुरुषेण** चतुर्मुखाख्येन पशुहविषा देवाः साध्याख्याः, तदिन्द्रियाणि सृष्ट्याख्यं सृष्ट्या (ध्या) त्मक ध्या (ज्ञ) नमय (सृष्ट्यर्थमध्यात्मज्ञानमय ?) म अकुर्वत । 'इन्द्रियप्राणसाध्येषु देवशब्दः समीरितः' इति योगवासिष्ठ देवशब्द इन्द्रियवाची । तदा **वसन्तो अस्यासीदाज्यम्** । अस्य अध्य यज्ञस्य वसन्तः कालः आज्यमासीत् । पाद्मे पुराणे वसन्तवर्णने, 'हिमद भूमिर्वसन्ते शोभते तृणैः । गावश्च तृणभक्षेण दुहते सुतरां पयः' इति वच शिशिरापगमे गवां कार्श्यापगमात् बह्वाज्यहेतुत्वमुक्तं भवतीति वसन्तस्याज्यत्वम् एतेन वसन्तकालसृष्टिरुक्ता । **ग्रीष्म इध्मः** । ग्रीष्मर्तुः इध्मत्वेन ध्यात आ तापातिशयहेतुत्वाद्ग्रीष्मस्येध्मं भवतीति ।

**सप्तास्यासन् परिधयः त्रिः सप्त समिधः कृताः ।**
**देवा यद् यज्ञं तन्वाना अबध्नन् पुरुषं पशुम् ॥ ७ ॥**

'ग्रीष्मकाले पलाशेध्मानाहरन्ति महर्षयः ।
ये च सांवत्सरं सत्रमासते गव (?) शान्तये' इति ।

मकालसृष्टिरुक्ता । **शरद्धविः** । शरदृतुः पुरोडाशाख्यं हविरासीत् । शरद्वर्णने —

'खर्जूरपुष्पाकृतिभिः शिरोभिः पूर्णतण्डुलैः ।
शोभन्ते किञ्चिदालम्बाः शालयः कनकप्रभाः ।'

न शरत्कालसृष्टिरुक्ता । व्रीहिपाकहेतुत्वात् शरदो हविष्ट्ववादः । (६)

ह्वचपाठे उपरिष्टात् पठिताऽपि याजुषं पाठमाश्रित्य औचित्यात **सप्ता-परिधय** इत्येषा व्याख्यायते । तस्य सृष्टियज्ञस्य सप्त परिधय आसन् । धीयत इति परिधिः । परिधीनां सप्तत्वमाह, 'उत्तरवेदिपरिधयस्त्रयः । स्य परिधयस्त्रयः । आदित्यः सप्तमः' इति शतपथब्राह्मणे । अत्र के ध्याता आसन् ? उच्यते । पृथिव्यप्तेजोवाय्वाकाशाहङ्कारबुद्धयः मैत्रावरुण्युपनिषदस्ति । **त्रिस्सप्त समिधः कृताः** । तथाच श्रुतिः तिमिध्य .... .... दारूणि भवन्ती' ति । अत्र के समित्त्वेन कृताः । ब्राह्मणे समिध उक्ताः ।

'पृथिव्यादीनि भूतानि तन्मात्राश्चैव पञ्च च ।
कर्मेन्द्रियाणि पञ्चाथ पञ्च ज्ञानेन्द्रियाणि च ।
अन्तःकरणमित्येकविंशश्च(तिः?) समिधः कृताः ।' इति ।

कदा परिध्यादयः कृताः ? **देवा यद्यज्ञं तन्वानाः** — । **यत्** यदा त्रा देवाः, — वैकुण्ठसंहितायाम्,

'ते देवा इति कीर्त्यन्ते ये सुरालयवासिनः ।
वैकुण्ठवासिनः सर्वे साध्या देवा इतीरिताः' । इति । —

**तं यज्ञं बर्हिषि प्रौक्षन् पुरुषं जातमग्रतः ।**
**तेन देवा अयजन्त साध्या ऋषयश्च ये ॥ ८ ॥**

---

द्र्याणि वा **देवाः** सृष्टिरूपं यज्ञं कुर्वाणाः पुरुषं चतुर्मुखाख्यमबध्नन् पशुत्वे
ात, —तदेत्यर्थः । **अबध्नन् पुरुषं पशुम्** । विष्णोराज्ञया रशनास्थानी·
ाख्यं पशुं **देवाः** तत्परवशानीन्द्रियाणि मूलप्रकृतौ यूपस्थानीयायां सकलले
ायज्ञनिष्पत्तये न्ययुञ्जन् । (

तं यज्ञं देवाः कुर्वन्तीत्याह **तं यज्ञमिति । तं यज्ञं बर्हिषि प्रौक्ष**
**यज्ञ**शब्दो यज्ञसाधकवचनः यजनीयहविःपरः । **बर्हिः**शब्दो बृंहणयोगि
ानः । योगरत्ने, 'विराट् प्रकृतिः बर्हिरिति समाननामानि' इति । **तमग्र**
यष्टव्यं **बर्हिषि** प्रकृतौ निधाय साध्या देवाः प्रौक्षन् । प्रोक्षणादिसंस्कारं कु
ख्यं तत्पशुं बृंहणयोगिन्यां मूलप्रकृतौ देवाः प्रक्षिप्तवन्तः । जगदुपादानभूत
ा जगत्कर्तारं ब्रह्माणं तदिन्द्रियाणि समयोजयन्नित्यर्थः । **तेन देवा अयजन्**
**ताः** । **तेन** प्रकृतियुक्तेन ब्रह्माख्येन संस्कृतेन पशुहविषा **साध्या देव**
ाधकानि वागिन्द्रियाणि सृष्टियज्ञमकुर्वत = अनिरुद्धाग्नौ प्रक्षिप्तवन्तः । **ऋष**
**ये**=ज्ञानसाधनानि चक्षुरादीन्द्रियाणि । तानि च सृष्टियज्ञमकुर्वत । (?
ावो वक्ष्यते ।

अथवा अस्य पुरुषमेधाख्यस्य मोक्षहेतुत्वात् मुमुक्षवो ये ऋषयः, तेऽप्येव
जन्तेति । आह च रत्नग्रन्थे —,

"ये मुमुक्षवः अब्भक्षा वायुभक्षा जीर्णपर्णाशिना वाग्यताः प्रणवाभ्यास-
: सर्वभूतहिते रताः बहिष्कृतसर्वकामाः परमशान्ता जितेन्द्रियाः विरक्ताः
नि गोविन्दे सदा संनिहितमानसा वसुरण्यमन्त्रमुच्चारयन्त आत्मानं तेजो-
परमात्मनि जुह्वति, तेऽपि विमुक्ता भवन्ति । एवं जीवात्मपरमात्मनो-
गो मोक्ष इत्युक्त इति विजानीयात् । एतज्ज्ञानमालादेवाचिरान्मोक्षः सिद्ध
ाजानीयात्" इति ।

**तस्माद् यज्ञात् सर्वहुतः संभृतं पृषदाज्यम् ।**
**पशूँस्ताँश्चक्रे वायव्यानारण्यान् ग्राम्याश्च ये ॥ ९ ॥**

---

प्रसङ्गात् वसुरण्य इति मन्त्रार्थ उच्यते । हे प्रत्यगात्मन्! **वसु** सर्वेषां ऽसि । सर्वेषां धनमिवासीति । **रण्यः ।** रण भाषणे च शब्दे च । र्तनीयश्चासि । **विभुरसि** सङ्कल्पमात्रेण विविधं भावयिताऽसि । **प्राणे संधाता** । प्राणे वसन् सर्वस्य अनुसंधाताऽसि । **ब्रह्मन् त्वमसि विश्व-**मेवं विश्वस्रष्टा चासि । **तेजोदास्त्वमस्यग्नेः** । त्वमेवाग्नौ तेजोदाश्चासि । **दास्त्वमसि सूर्यस्य** । त्वमेव वर्चोदा असि । **वर्चो** दीप्तिः । **द्युम्नो-दासि चन्द्रमसः** । त्वमेव द्युम्नोदा असि । **द्युम्न**शब्दो दीप्तिपरः । हे —

'यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत् तेजो विद्धि मामकम् ।'

**उपयामगृहीतोऽसि ।** उपयच्छतीत्युप**यामः** तेन गृहीतः । हविषः ग्राहेतुभूतं मृदादिरुपयामः । तेन गृहीतोऽसि । **ब्रह्मणे त्वा महसे ।** ब्रह्मणे त्वाम् [ समर्पयामि ? ] । **ओमित्यात्मानमुप**हारं आत्माग्नौ युञ्जीत । जीवात्मपरमात्मयोग इति ।    (८)

प्रकृतमनुसरामः । **तस्माद्यज्ञात् सर्वहुत** इति । सर्वं जुहोति त्यजतीति— ो न भवतीति गार्ग्यायणाः — **सर्वहुत्** पशुः । सर्वहुतो यज्ञाख्यात् पृषदाज्यं संभृतमभूत् । **पृषदाज्यं** याज्ञिका दधिमिश्राज्यं प्रचक्षते । अत्र प्राणिजननहेतुभूतं वीर्यं **पृषदाज्यं** भवतीति प्रोच्यते । तद्यथा चित्ररूपं एवमेव पशुनी ( पशोर्नी ) लादि विचित्रभूतं वस्तु **जातं** भूतमित्यर्थः । **श्चक्रे वायव्यान्** । वायुशब्देन वायुमताऽन्तरिक्षेण गतिर्लक्ष्यते । वायव्यान् पुरुषश्चक्रे ससर्ज । **आरण्यान्** व्याघ्रादीन् । **आरण्य**शब्दः पशुविशेषणम् । शब्दश्च । ग्राम्याश्च ये पशवः मार्जारादयः, वराहादयो वा, तान् चक्रे ; ये आरण्याः, तानपि चक्रे ।

तस्माद् यज्ञात् सर्वहुतः ऋचः सामानि जज्ञिरे ।
छन्दाँसि जज्ञिरे तस्माद् यजुस्तस्मादजायत ॥ १० ॥

तस्मादश्वा अजायन्त ये के चोभयादतः ।
गावो ह जज्ञिरे तस्मात् तस्माज्जाता अजावयः ॥ ११ ॥

यत् पुरुषं व्यदधुः कतिधा व्यकल्पयन् ।
मुखं किमस्य कौ बाहू कावूरू पादावुच्येते ॥ १२ ॥

ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः ।

---

**तस्माद्यज्ञात् सर्वहुतः ऋचः सामानि जज्ञिरे ।** ऋग्वेदः सामवे
दुरभूताम् । **छन्दाँसि जज्ञिरे तस्मात्** । गायत्र्यादीनि अजायन्त ।
स्मादजायत । **यजुः** यजुर्वेदश्च ।

**तस्मादश्वा अजायन्त** । यज्ञसंबन्धिनः अश्वाः । **ये के चोभया**
वो ह जज्ञिरे तस्मात् । अधरोत्तरभागयोरुभयोर्दन्ताः येषाम्, ते रासभादयः
गावश्च जज्ञिरे । **तस्मात् जाता अजावयः** । अजाश्चावयश्च जज्ञिरे । के
शब्दो बहुवचनान्त इति कृत्वा....[मृगाः पक्षिणश्च जाता इति व्याकुर्वते?] (

पुरुषस्य मुखाद्यवयवप्रकारान् पृच्छति **यत् पुरुषं व्यदधुः** । यदा
पशुत्वेन देवाः व्यदधुः, तदा **कतिधा व्यकल्पयन्** । किंप्रकारं मुखाद्य
ल्पतवन्त इत्यर्थः । प्रश्नार्थं व्यनक्ति **मुखं किमस्य** — मुखात् किमिति वक्त
मित्यादिप्रथमानिर्देशः कार्यकारणयोरभेदविवक्षया । **कावूरू पादावुच्ये**
। पुरुषस्य किंप्रकारं मुखम् । उत्पाद्यमानेषु ब्राह्मणादिषु वर्णेषु अस्य
सीत् । बाहू च किंप्रकारौ । कावूरू आस्ताम् । कौ च पादावुच्येते । (१

परिहरति **ब्राह्मणोऽस्य मुखमासीत्** । ब्राह्मणजातिरजायत । अ
णजातिकारणभावो मुखस्य प्रकार उक्तः । एवमुत्तरत्रापि द्रष्टव्यम् । बा
**न्यः कृतः** । बाहुभ्यां क्षत्रियजातिरकारीत्यर्थः ।

**ऊरू तदस्य यद् वैश्यः पद्भ्यां शूद्रो अजायत ॥ १३ ॥**
**चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत ।**
**मुखादिन्द्रश्चाग्निश्च प्राणाद् वायुरजायत ॥ १४ ॥**
**नाभ्या आसीदन्तरिक्षं शीर्ष्णो द्यौः समवर्तत ।**
**पद्भ्यां भूमिर्दिशः श्रोत्रात् तथा लोकाँ अकल्पयन् ॥ १५ ॥**

---

**ऊरू तदस्य यद् वैश्यः ।** यद्वैश्यनामा जातिर्भवति, तदस्य पुरुषस्य ऊरू जायतेत्यर्थः यत्तदोः सामान्यवचनत्वान्नपुंसकनिर्देशः । मुखादीनां देभिरभेदवाद् कार्यकारणभावकृतः । ब्राह्मणं प्रकृत्य मनुः — 'तं स्वयंभूः स्यात् तपस्तप्त्वाऽऽदितोऽसृजम्' इति । तथा

'लोकानां तु विवृद्ध्यर्थं मुखबाहूरुपादतः ।
ब्राह्मणं क्षत्रियं वैश्यं शूद्रं च निरवर्तयत्' इति ।

**शूद्रो अजायत।** निसर्गसिद्धः शूद्रवर्णः ।

अथ यष्टव्यानां देवतानां सृष्टिमाह—**चन्द्रमा मनसो जातः।** सकार(रा?) न्दसः (?) **चक्षोःसूर्यो अजायत । चक्षुर्भ्यामिति** विभक्तिव्यत्ययं करोति । **न्द्रश्चाग्निश्च ।** आयेतामिति संबन्धः । **प्राणाद्वायुरजायत ।** सिद्धोऽर्थः ।

अनुष्ठितयज्ञानां (?) ब्राह्मणादीनामुपभोगाय लोकानां सृष्टिमाह **नाभ्या न्तरिक्षम् । शीर्ष्णो द्यौः समवर्तत । पद्भ्यां भूमिरिति । समवर्तत** ः । **दिशः श्रोत्रात्** समवर्तन्त । **तथा लोकाँ अकल्पयन् । तथा,** तीते कल्पे देवा प्रकल्पयन् ।

'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत् ।'
'नाम रूपं च भूतानां कृत्यानां च प्रपञ्चनम् ।
वेदशब्देभ्य एवादौ देवादीनां चकार सः' इति ।
'दिवं च पृथिवीं चान्तरिक्षमथो सुवः' इति ।

एवं सृष्टियज्ञं समाप्य पुनरपि त्रिपादं महान्तं पुरुषं कः साक्षाज्जानातीति नेन स्तोतुमारभते । ब्रह्मादिस्तम्बपर्यन्तस्य जगतः परमकारणं पुरुषं प्रति

**वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसस्तु पारे ।**
**सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन् यदास्ते ॥ १२**
**धाता पुरस्ताद् यमुदाजहार शक्रः प्रविद्वान् प्रदिशश्चतस्रः ।**

पुरुषसूक्तसूक्तरूपं को वेत्ति? तत्राह **वेदाहमेत**मिति । सहस्रशीर्षमि (र्षा) ...युक्तमेतं महान्तं पुरुषमहं **वेद** जानामि । नान्यः कश्चित् इदं वेत्तीति वे... नारायणात्मनो वचनम्; अस्य सूक्तस्य ऋषेर्नारायणस्य वाक्यं वा । किंस्वरूप... **आदित्यवर्णम्** । 'आदित्यवर्णं पुरुषं वासुदेवं विचिन्तये' इति मोक्षधर्मे... क्वावस्थितं वेत्ति? (स्सि)? **तमसस्तु पारे । तम**श्शब्देन प्रकृतिरुच्यते । प्रकृतेः परस्... स्थितं वेत्ति । तमसः परमो धातेत्यस्ति । कियांश्चायम्? **महान् पुरुषः** । [कदा... **सर्वाणि रूपाणि विचित्य धीरः** । सृष्टानां चराचरात्मकानि रूपाणि **विचि**... समुत्पाद्य, अथवा वैविध्येन च बुध्वा तेषां नामानि च कृत्वा तैः तान्यभिव... **धीरः** धिया रममाणः परमविद्वान**भिवदन्** तैस्तैर्नामभिरभिमुख्येन वदन् य... आस्ते, तदा तं पुरुषं वेत्ति । इतश्चाहं वेद्मि ।

कोऽसावेवंविधः पुरुषः? क्वायमास्ते? विशदं ब्रूहि [इति?] चेदहमप... प्रकर्षेण जानामि; न वेद्मीत्याह **धाता पुरस्ताद्यमुदाजहारे**ति । पूर्वस्मिन् क... चतुर्मुखो यम् आत्मनः कारणभूतमुदाजहार—'तमब्रवीत् त्वं पूर्वं समभूः । त्वमि... ...भिः कुरुष्व' इत्यादिषूदाहृतवान् । तथा **शक्रः प्रविद्वान्** प्रकृष्टज्ञानः श... प्रह्लवति वासुदेवेऽधिगतपुरुषोत्तमत्वज्ञानः इन्द्रो यं परमकारणत्वेनोदाहृतवान् इन्... प्रतर्दनसंवादे, 'प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम' इत्यादौ श्रुतौ... तथा **प्रदिशश्चतस्रः** । प्रदिशश्च यमुदाजह्रुः । **दिक्**छब्देन दिग्वर्तिनो ज्ञानव... ...लक्ष्यन्ते । दिगधीनाः पुरुषा उपलभन्ते । तथा श्रीरामायणे विश्वामित्रवचनम्,

'अहं वेद्मि महात्मानं रामं सत्यपराक्रमम् ।
वसिष्ठोऽपि महातेजाः ये चेमे तपसि स्थिताः' इति ॥

...एव रावणवधानन्तरं रामं प्रति ब्रह्मणो वाक्यम् । यथाह —

'भवान्नारायणो देवः श्रीमान् चक्रायुधो विभुः ।

**तमेवं विद्वानमृत इह भवति नान्यः पन्था विद्यतेऽयनाय ॥ १७ ॥**
**यज्ञेन यज्ञमयजन्त देवास्तानि धर्माणि प्रथमान्यासन् ।**

---

एकशृङ्गवराहस्त्वं भूतभव्यसपत्नजित् ।
अक्षरं ब्रह्म पारं त्वं मध्ये चान्ते च राघव ।
लोकानां त्वं परो धर्मो विष्वक्सेनश्चतुर्भुजः ।
शार्ङ्गधन्वा हृषीकेशः पुरुषः पुरुषोत्तमः । '

अत्रैव लक्ष्मणं प्रति दशरथवाक्यम् , यथा —

' एतत्तदुक्तमव्यक्तमक्षरं ब्रह्म निर्मितम् ।
वेदानां हृदयं सौम्यं गुह्यं रामः परंतपः ।

अत्रैव मन्दोदरीवाक्यम्, यथा —

' व्यक्तमेष महायोगी परमात्मा सनातनः ।
अनादिमध्यनिधनो महतः परमो महान् ।
तमसः परमो धाता शङ्खचक्रगदाधरः ।
श्रीवत्सवक्षा नित्यश्रीरजय्यः शाश्वतो ध्रुवः ' इति ।

वेदोऽपि स्वकण्ठेन महान्तं पुरुषं वक्तुमशक्नुवन् तदीयानि चिह्नानि [illegible]
यवगन्तव्यम् ।

**तमेवं विद्वानमृत इह भवति** । श्रुतिर्वदति । तं परमं पुरुषं [illegible]गतामादिकारणं **विद्वान्** जानन् **अमृत इह भवति** इहैव जन्मनि अमृतो भ[illegible] [illegible]ंसारबन्धान्मुक्तो भवति । **नान्यः पन्था अयनाय विद्यते** । **अयनाय** मो[illegible] [illegible]वंविधपुरुषज्ञानादन्यः पन्था न विद्यते ।

' अयनं निलये मार्गे मुक्तौ चापि प्रकथ्यते ' इति निघण्टुः ।

[illegible]दं पुरुषसूक्तप्रतिपाद्यपुरुषज्ञानं मोक्षोपाय इति ।

उपक्रान्तं सृष्टियज्ञमुपसंहरति **यज्ञेन यज्ञमयजन्त देवाः** । यज्ञे[illegible] [illegible]ूतचतुर्मुखाख्यपशुहविषा **यज्ञमयजन्त** सृष्टियज्ञमकुर्वत — धातुरनुवादः [illegible]**वाः** साध्याः देवाः तदिन्द्रियाणि वा । **तानि धर्माणि प्रथमान्या**[illegible]

[illegible]

ते ह नाकं महिमानः सचन्ते यत्र पूर्वे साध्याः सन्ति देवाः ॥ १

॥ श्रीरस्तु ॥

---

श्रेयस्साधनान्यासन् । मोक्षहेतुतया प्रधानभूता इत्यर्थः । **ते ह नाकं म**
**सचन्ते** । मह पूजायाम् । मनिन्प्रत्ययः । पूजयन्तः = भगवन्तं नारायण
नाकं सचन्ते । कमिति सुखनाम । अकं दुःखम् । तत् यत्र नास्ति, तन्नाकं प
प्राप्तवन्तः । भगवच्चोदितो ब्रह्मा लोकसृष्टिं तदाराधनं बुद्ध्याऽनुष्ठि (ष्ठाय
वैकुण्ठख्यं परं पदं प्राप्तवान् । **असचन्त** प्राप्तवन्तः । बह्वृचपाठे अडाग
श्छान्दसः । तैत्तिरीयपाठे भूतार्थे । 'नाकोऽम्बरेऽपि च स्वर्गे परमव
स्थितः' इति । 'एको विष्णुर्जगत्स्वामी वासुदेवः सनातनः' इति श्रीवाराहेऽ
**यत्र पूर्वे साध्याः सन्ति देवाः** । यत्र नाके **पूर्वे** पूर्वस्मिन् साध्य
**देवाः** सूरयो वर्तन्ते ।

[1] पतिमिति .... .... .... देवमेवैतत्सूक्तं व्याचक्रिरे । **तस्मात्**
**जायत** । विराडाख्यः प्रजापतिरजायत । **विराजो अधि पूरुषः** ।
मनुर्नाम पुरुषः । **यत् पुरुषेण हविषा देवाः** । **देवाः** मन्वादयः जगत्सि
**तेन देवा अयजन्त** — साध्यानामृषीणां देवानाञ्च पुराकल्पे ध्यानम
ष्ठानानुकीर्तनम् । **तस्माद्यज्ञा**दिति ध्यानमयात् यज्ञात् जगदुत्पत्तिवादः
**पुरुषं व्यदधुः** । **पुरुषं** परमपुरुषं यं सहस्रशीर्षत्वादिविशेषणविशिष्टं ज
कारणत्वे व्यदधुः, तं **कतिधा व्यकल्पयन्** कियत्प्रकारं न्यरूपयन्त देवाः
विवरणमुत्तरञ्च पूर्ववत् । **तथा लोकाँ अकल्पयन्** । ब्राह्मणादीनां भ
लोकानाञ्च परमपुरुषमुखाद्यवयवेभ्यः सृष्टिर्यथा कथिता, तथा देवा अ
निश्चितवन्तः । एवं सृष्टान् लोकान् व्यनक्ति .... **यज्ञेन यज्ञमयजन्त** ध
जीवात्मयज्ञेन यज्ञात्मानं नारायणमयजन्त देवाः । **तानि धर्माणि प्रथमान**
एवं कृताः ध्यानमययज्ञाः मोक्षहेतुतया मुख्या धर्मा आसन् । तेन देवा अ
जिनो .... नाकं वैकुण्ठाख्यं प्राप्तवन्त इति ।

1. पुरुषसूक्ते तत्रतत्र व्याख्यान्तरोक्तमर्थान्तरमनुवदति विमर्शार्थम् ।

एतद्ब्रह्मयज्ञं (?) तत्तद्व्याख्यातृभिर्व्याख्यातं श्रुतिस्मृतीतिहासपुराणैः नाराय
ोत्पत्तिमण्डाद्ब्रह्मोत्पत्तिं प्रतिपादयद्भिः अनादृतमित्यनादरणीयम् ।

अतोऽयमेव व्याख्यानप्रकारः प्रशस्यत इति ।

---

अत इति । सर्ववेदनिदिष्टे सर्ववेदाध्ययनफलप्रदे सर्वसारभूते नित्यब्रह्मयज्ञोपयुक्ते पुरुषर
न् आदरमतिशयितं वहन्तो महर्षयो विविधं व्याख्यायोपबृंहणमकुर्वन् । एवं मुद्गर
ादयः श्रुतयः श्रीपाञ्चरात्रग्रन्थाश्चैतदर्थविशदीकरणे दम्परा इति चैतावता विदितमेव ।
वर्णनप्रणालिकाः विभिन्नाः प्राप्ताः । सर्वथा श्रीमतो नारायणस्य भगवतः पुरुषोत्त
यमत्र प्रस्फुटमावेद्यत इत्यत्र सर्वेषामेकवाक्यतैव । तत्तदभिमतयोजनाभेदपर्यालोच
ानामर्थभेदस्य व्यक्तत्वेऽपि तद्योजनादर्शितः सर्वोऽप्यर्थः अबाध्यत्वेन संमन्तुमर्ह एव ।
ंशानामनेकत्वात् वाक्यानाञ्चाल्पसंख्यत्वात् तेषां सर्वेषामत्र वाक्येषु निवेशप्रदर्शनस्याश
, सकृत्प्रयुक्तस्य वाक्यस्यानेकार्थकल्पना न युक्तेत्याशयाच्च स्वस्वाभिमतमेकैकमर्थं के
कशन् । अन्ये पुनरेकतमनिष्कर्षे उदासीनाः बहूनप्यर्थान् एकैकस्मिन् वाक्ये, एवं
वेति विकल्प्य समघटयन् । यथा—

प्रकृतौ परिभ्रमतां जीवानामनन्तत्वात् एषां शीर्षादिकमादायैव **सहस्रशीर्ष**त्वा
तः केचिददर्शयन् । सर्वशरीरिणस्तस्य न तन्न घटते । स्वयमेव सहस्रशीर्षादिशालि
विभर्तीत्यन्ये । तदपि विश्वरूपदर्शिनो भगवतः सत्यं स्थितमेव । शीर्षाद्यभावे
दिकार्यकरणशक्तत्वात् सहस्रशीर्षत्वादिव्यपदेश इति परे । तदपि, 'अपाणिपादो ज
देश्रुतिबलात् स्वीकर्तव्यमेव । एवं **दशाङ्गुल**पदेऽपि सामान्यत आनन्त्यं विवक्ष
त् । दशविधवस्तुव्यापनमेव भगवति निरूपयन्त्यन्ये । **पादोऽस्य विश्वा भूत**
**ादस्यामृतं दिवि** इत्यत्र चातुर्व्यूहविवक्षां विनैवार्थं वर्णयन्ति केचित् । अन्ये तद्विवक्षां
**ाडजायत, विराजोऽधिपूरुषः** इत्यत्र प्रकृतिजीवाविर्भाववर्णनं केषाञ्चिदभिमत
ड्चतुर्मुखयोराविर्भावमन्ये । ब्रह्माण्डब्रह्मणोरुत्पत्तिं परे । ब्रह्मणो मनोश्चोद्भवं '
तदं प्रमाणान्तरप्रमितमेव ।

अथ यो यज्ञः प्रस्तुतः, **यत् पुरुषेण हविषा देवा यज्ञमतन्वत**इत्यादिन
तौ वास्तवहोमसंवलित एव, उत ध्यानमय इति परामर्शे, **मुखादिन्द्रश्चाग्निश्च**ेति अ
ाविशेषमत्र एवोत्पादनीयतया ध्यानमय एवायं युक्त इति कृत्वैव प्रायो ध्यानपक्षमेव
त । बाह्ययागापेक्षया हार्दयागस्य विशेषतो भगवत्समाराधनत्वं व्यक्तमन्यत्र । ध्या
समवेतेन्द्रियसाध्यत्वात् **देव**शब्द इन्द्रियपर इति केचित् । नित्यसूरीणामपि अभिमानि
तृतायाः श्रीविष्णुपुराणादिप्रतिपन्नत्वात् नित्यसूरिविशेषा एव साध्या देवा इत्यन्ये ।

एवं तावत् तत्तद्ग्रन्थोक्तं सर्वमपि संकलय्य परामर्शे समादरणीयमेव भवेदिति नात्रैका
अभिनिविश्य पक्षान्तरस्य असत्त्वमाशङ्कनीयमिति विभावनमुचितं लक्ष्यते । एवं
[illegible] किं सर्वमिदं तत्तदवयवविशेषेभ्य उत्पन्नतयेह

र्मुखशरीरादुत्पन्नतया वर्ण्यमानं संमन्तव्यम्, उत परमपुरुषविग्रहादेवेति विवादे द्वितीयः ग्राह्य इति । अत्र किञ्चिद् वक्तव्यं लक्ष्यते–तत्रतत्र पक्षान्तराणामसत्त्वाभाववत् अत्राप्युभ ः संमन्यताम् । अतः साऽपि योजना कामं भवत्विति ।

कल्पादौ चतुर्मुखशरीरात् विविधा वैकृतसृष्टिर्भवतीति श्रीविष्णुपुराणे (१.५.) ृतमिति तत्र न संदेहः । तथाहि तत्र देवादिसृष्टिमुपवर्ण्य, 'एतानि सृष्ट्वा भगवान् ्रक्तिचोदितः' इति तिर्यक्स्थावरसृष्टिं प्रस्तुत्य, तत्र कृतयुगस्य ध्यानप्रधानत्वेऽपि त्रेतायु प्रधानत्वात् तदा ग्राम्यारण्यविभागोऽपि पशूनां तेन कृत इति कथयित्वा, 'गौरजः श्वाश्वाश्वतरगर्दभाः । एतान् ग्राम्यान् पशूनाहुः आरण्यांश्च निबोध मे । श्वापदा द्वि वानराः पक्षिपञ्चमाः । औदका पशवः षष्ठाः सप्तमाश्च सरीसृपाः' इति ग्राम्यान् अ क् परिगणय्य, तस्यैव चतुर्भ्यो मुखेभ्यः ऋगादिचतुर्विधवेदादिसृष्टिमभिधाय, ' व भूतानां— देवादीनां चकार सः' इत्यादिनोपसंहृतम् । एवमपि तत्रैव, १-१२. ध्रुव सूक्तार्थविवरणे परमपुरुषविग्रहादेव सर्वेषामुत्पत्तिरभिहितेति स्वरसतः प्रतीयते । त प्रान्तेन स्पृष्टवन्तं धुरि प्रत्यक्षमागतं गोविन्दं ध्रुव एवं स्तौति—

'बृहत्त्वाद् बृंहणत्वाच्च यद्रूपं ब्रह्मसंज्ञितम् ।
तस्मै नमस्ते सर्वात्मन् योगिचिन्त्याविकारवत् ।
सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
सर्वव्यापी भुवः स्पर्शादत्यतिष्ठद् दशाङ्गुलम् ।
यद्भूतं यच्च वै भव्यं पुरुषोत्तम तद् भवान् ।
त्वत्तो विराट् स्वराट् सम्राट् त्वत्तश्चाप्यधिपूरुषः ।
अत्यरिच्यत सोऽधश्च तिर्यक्चोर्ध्वं च वै भुवः ।
त्वत्तो विश्वमिदं जातं त्वत्तो भूतभविष्यती ।
त्वद्रूपधारिणश्चान्तः सर्वभूतमिदं जगत् ।'

'त्वत्तो ऋचः–', 'त्वत्तोऽश्वाश्च–', त्वन्मुखाद् ब्राह्मणाः–', 'अक्ष्णोः सूर्योऽनिलः प्राण ः सर्वमभूदिदम्' इति । अत्र साक्षात् गोविन्दः सर्वत्र युष्मच्छब्दैरभिधीयते । अधि क्तः अधिकारिपूरुषः चतुर्मुखस्तु परोक्षतो निर्दिश्यते । तत्कार्यकथनावसरे च 'अत्यरि धस्तात' इत्येवम् । त्वद्रूपधारिण इत्यर्धस्य च, 'तस्य चतुर्मुखस्यापि जगदिदमन्तश्चे नस्त्वेवेति भावः' इति **श्रीविष्णुचित्तीये** विवरणं कृतम् । तथाच त्वद्रूपधारिणस्तस्या नुक्त्वा **त्वत्त** इत्येव सर्वत्र निर्देशः सर्वस्य परमपुरुषजन्यत्वं दर्शयति । अवान्तरस ुखकर्तृकसर्वसृष्टिसद्भावेऽपि आदिसृष्टौ भगवानेव सर्वं सृजतीति **नामसहस्रभाष्ये**ऽप्युक्त शिक्षवरणाभिमतश्चेदमित्यादिकमिह वक्तव्यं **सुबालोपनिषत्परिष्कारे** (पु. २०१-२ ाभिरुक्तम् । यत्र मूलश्रुतिः चतुर्मुखकर्तृकसृष्टिपरैव भगवत्कर्तृकसृष्टिपराऽपि लक्ष्यत ा व्यज्ञापयाम । **वेदान्तपुष्पाञ्जला**वपीदं द्रष्टव्यम् । अतोऽन्यादृशव्याख्यानमपि उपादेय इति ।

त्रपुरुषसंहितायाम्, —

‘ सहस्रशीर्षा इत्यत्र सहस्रोऽनन्तवाचकः ।
अनन्तयोजनं प्राह दशाङ्गुळवचस्त्विदम् ॥
अत्र प्रथमया विष्णोर्देशतो व्याप्तिरुच्यते ।
द्वितीययाऽस्य विष्णोश्च कालतो व्याप्तिरीरिता ॥
विष्णोर्मोक्षप्रदातृत्वकथनं च तृतीयया ।
एतावानितिमन्त्रेण वैभवं कथितं हरेः ॥
एतेनैव च मन्त्रेण चतुर्व्यूहोऽपि भाषितः ।
त्रिपादित्यनया प्रोक्तमनिरुद्धस्य वैभवम् ॥
तस्माद्विराडित्यनया पादनारायणाद्धरेः ।
प्रकृतेः पुरुषस्यापि समुत्पत्तिः प्रदर्शिता ॥
यत्पुरुषेणेत्यनया सृष्टियज्ञः समीरितः ।
सप्तं परिधयश्चापि समिधश्च समीरिताः ।
तं यज्ञमिति मन्त्रेण सृष्टियज्ञः समीरितः ।
अनेनैव च मन्त्रेण मोक्षश्च समुदीरितः ॥
तस्मादिति च सप्तर्चा जगत्सृष्टिः समीरिता ।
वेदाहमिति मन्त्राभ्यां वैभवं कथितं हरेः ॥
यज्ञेनेत्युपसंहारः सृष्टेर्मोक्षस्य चेरितः ।
य एवं तु विजानाति स हि मुक्तो भवेत्’ इति ॥

तथा मुद्गलोपनिषदि पुरुषसूक्तस्य वैभवं विस्तरेण प्रतिपादितम् । सेयमुच्यते—[1] वामदेव आङ्गिरसः स्वपूर्वप्रज्ञासमन्वारब्धः अत्रिपत्न्या अनसूयाया गर्भ
यानो ब्रह्म वेदयाञ्चक्रे । स हि गर्भं पुरो हित्वा ब्रह्मलोकमुपचक्राम । मध्ये
पनिषदुवाच । भगवांस्तु गर्भपञ्जरमेवाभिनिविशमानो विज्ञानब्रह्म जानाति

1. मुद्रितमुद्गलोपनिषत्कोशे अत्र च महान् पाठभेदः । अशुद्धयश्चोभयत्र ।

तोपाय: (?) । अकस्मात्किञ्चिद्विगतासंगस्सर्वैः वन्द्यमानोऽध्वनः पारमु
तदेतदिहाश्चर्यम्, यद् बालस्य गुरुमनुपेयुषोऽधिगन्तुश्च भगवतोऽकस्मात्
ब्रह्मप्रत्ययः; विपरीतस्य विपरीतम्। सोऽहं भगव उप त्वा सेदिवांश्चा
भिश्चतुर्भि खण्डैरिन्द्राय भगवान् ज्ञानमुपदिशन् पुनरपि सूक्ष्मश्रवणाय प्र
परमरहस्यभूतं पुरुषसूक्तार्थं द्वाभ्यां खण्डाभ्यामुपादिशत् । तौ खण्डावुच्येत

योऽयमुक्तः, स पुरुषो नामरूपज्ञानागोचरं संसारिणामतिदुर्ज्ञानं
क्लेशादिसंसृष्टान् देवादीनुज्जिहीर्षुतया सहस्रावयवकल्याणं दृष्टिमात्रेण मोक्षदं
तेन रूपेण भूम्यादिलोकजातं व्याप्यानन्तयोजनमत्यतिष्ठत् । स पुरुषो नार
भव्यं भविष्यच्चासीत् । स एव सर्वेषां मोक्षदश्चासीत् । स च सर्वस्मात
ज्यायानासीत् । स च ज्यायान् महापुरुषः आत्मानं चतुर्धा कृत्वा त्रिपादेन
भासते ; इतरेण चतुर्थेनानिरुद्धेन नारायणाख्येन विश्वान्यासृजत् । स च पा
जगत् स्रष्टुं प्रकृतिमजनयत् । सा च प्रकृतिः ब्रह्माण्डभूता, यत्र स ब्रह्माणम
समृद्धकायस्सन् सृष्टिकर्म न जज्ञिवान् । सोऽनिरुद्धनारायणस्तस्मै सृष्टिमु
'ब्रह्मन्! तवेन्द्रियाणि याजकानि ध्यात्वा जगत्कोशभूतं दृढग्रन्थिकळेबरं
मां हविर्भुजं ध्यात्वा वसन्तमाज्यं ध्यात्वा ग्रीष्ममिध्मं ध्यात्वा शरद्तुं पुरोड
पृथिव्यप्तेजोवाय्वाकाशाहङ्कारबुद्धिं परिधिं ध्यात्वा पञ्च भूतानि तन्मात्रा
कर्मेन्द्रियाणि अन्तःकरणं चैकविंशतिं समिधं ध्यात्वा मय्येवाग्नौ त्वां
मदङ्गस्पर्शनात् त्वत्कळेबरं बृंहिष्यति । ततः त्वत्कायात् सूक्ष्मसृष्टिहेतुभूत
भविष्यति । सर्वाणि (?) निबिडाः पश्चाद्याः प्रादुर्भविष्यन्ति । ततश्चरा
विष्यति । एतेन जीवात्मनो योगेन मोक्षप्रकारोऽपि कथ्यत इत्यनुसं
इति प्रथमः ।

य इमं सृष्टियज्ञं जानाति मोक्षप्रकारञ्च, सर्वमायुरेति ;
भवति ; श्रीमांश्च भवति ; पुत्रपौत्रादिसमृद्धो भवति । विद्वांश्च भवति
पातकात् पूतो भवति । सर्वगमनात् पूतो भवति । कामक्रोधादिभिरबाधो
सर्वेभ्यः पापेभ्यः पूतो भवति । इहैव जन्मनि पुरुषो भवति । तमेवं पुर
मतिरहस्यं राजगुह्यं देवगुह्यं गुह्यादपि गुह्यतरं नादीक्षितायोपदिशेत्; नाप्र

ज्ञशीलाय; नासंवत्सरवासिने; नासंतुष्टाय; नानधीतवेदाय। गुरुरप्येवम्भूतः
ो पुष्ये नक्षत्रे प्राणान् आयम्य पुरुषं ध्यायन् उपसन्नाय शिष्याय दक्षिणे कर्णे
षसूक्तार्थमुपदिशेत्। न बहुशो वदेत्। यातयामं भवतीत्य........तूर्णमुदि
कुर्वाणोऽध्येताऽध्यापकश्च इह जन्मनि पुरुषो भवति— इति द्वितीयः खण्डः

* सहस्र — ईरिता।

पूर्वस्मिन्ननुवाके मुमुक्षूपास्यं परं ब्रह्म अक्षरवाच्यः स एव परमेश्वर
रमुक्तम्। अस्मिन् प्रसङ्गे सकलवेदान्तेषु कारणत्वेन ब्रह्माक्षरशिवशम्भुपु
देवादिसामान्यशब्देन प्रतिपादितस्य विशेषाकाङ्क्षया तत्तच्छब्दसमभिव्याह
ायणं सविशेष इति .... .... .... प .... .... .... र्यन्तापेक्षितार्थनिर्ण
ायणानुवाके क्रियते। "लिङ्गभूयस्त्वात् तद्धि बलीयस्तदपि" इत्यस्मिन्नधिक
ावान् **भाष्यकारो रामानुजमिश्रो** बहुभिर्न्यायकलापैरेवमुदीरितवान्।

क्षेमाय यः करुणया क्षितिनिर्जराणां भूमावजृम्भयत भाष्यसुधामुदारः।
वामागमाध्वगवदावदतूलवातो रामानुजः स मुनिराद्रियतां मदुक्तिम्॥

**इति श्रीरङ्गरामानुजस्वामिविरचितं**

**पुरुषसूक्तभाष्यं संपूर्णम्।**

॥ शुभमस्तु ॥

येनोपनिषदां भाष्यं रामानुजमतानुगम्।
रम्यं कृतं प्रपद्ये तं रङ्गरामानुजं मुनिम्॥

॥ श्रीरस्तु ॥

---

*एतदारभ्य न पुरुषसूक्तव्याख्यानम्। अथापि मातृकायां स्थितं प्रकाश्यते। एतदु
ात्, उपक्रमे **प्रसङ्गात् पुरुषसूक्तेति** वाक्यदर्शनाच्च पुरुषसूक्तव्याख्यानमिदमेत
न्तरमध्यनिविष्टमिति ज्ञायते। पुरुषनिर्णयादिग्रन्थवत् नारायणस्य पारम्यं स्थापयितुं प्र
। प्रबन्ध एतदीयोऽयमिति विभाव्यते। लेखकैर्वा शुद्धमातृकानुपलम्भादिवशात् ताल
र्णं कृतं भवेत्। अस्तु कथमपि। भाष्यं तु पुरुषसूक्तस्य लब्धं समग्रमिति संतोष्टव्यम्

अत्र **पूर्वस्मिन्ननुवाके** इति तैत्तिरीये नारायणानुवाकात् पूर्वोऽनुवाक उच्यते।
ीयव्याख्यानस्य कस्यचिन्मध्ये पुरुषसूक्तव्याख्यानं प्रासङ्गिकं घटितमिति भाव्यत
[illegible]

इत्थं पौरुषसूक्तभाष्यमुपलभ्याऽऽदृत्य, कोशे क्वचित्
निर्देशेन च रङ्गलक्ष्मणमुनेः कर्तृत्वमादृत्य च ।
ईशाद्यागममौलिभाष्यवदिदं सूक्तार्थसंवेदनं
साधु स्यादिति सज्जनप्रियधिया प्राकाश्यमानीयत ॥

ईशाद्युपनिषद्भाष्यपरिष्कारविधायिना ।
भाष्यं पुरुषसूक्तस्य संग्रहेण परिष्कृतम् ॥

**इति वात्स्यसच्चक्रवर्तिवीरराघवाचार्यकृतः**
**पुरुषसूक्तभाष्यपरिष्कारः ।**
शुभमस्तु ॥

श्रीः
श्रीमद्भ्यो रङ्गरामानुजमहादेशिकेभ्यो नमः ।

## द्वयोपनिषत्परिष्कारः

श्रीमत्त्रयीशिखरलक्ष्मणसंयमीन्द्रसेवात्तमन्त्रवर एष तदर्थवित्त्यै ।
श्रीरङ्गलक्ष्मणमुनेश्चरणाब्जसेवी दृष्टां द्वयोपनिषदश्च परिष्करोमि ॥

प्रपन्नजमसंतानकूटस्थश्रीपराङ्कुशमुनि-श्रीभगवन्नाथमुनिपरम्पराप्राप्तेषु प्रतितन्त्रेषु यदन
प्रपत्तिरूपं हितम्, तत्र करणमन्त्रतया तैरादृतं तावत् द्वयमिति मन्तरत्नम्। यत् ख
ावद्रामानुजमुनिना गद्ये, 'अत्र द्वयम्' इति, 'येन केनापि प्रकारेण द्वयवक्ता' इि
र्थानुसंधानेन सह सदैवं वक्ता' इति चाभ्यस्य निर्दिष्टमनन्तरैस्तत्संप्रदायप्रवर्तकैः सर्वतोमुर
ापरश्शतव्याख्यामुखरितनिखिलदिङ्मुखं विजयते । यस्य खलु सकृदुच्चारणेन यथोपदेः
, विश्वामित्रोपदिष्टमन्त्रजपेन शुनश्शेफ इव पुरुषपशुः, सर्वोऽपि पुरुषो बद्धो भगवतः श्रीम
णस्य निरवग्रहेणानुग्रहेण नियतं बन्धाद् विमुच्यत इति रहस्यविदो निश्चिन्वनि
ष मन्त्ररत्नस्य द्वयाख्यस्य प्रकाशिकेयं द्वयोपनिषत् ।

अस्य द्वयस्य विषये श्रुतिः प्रथमं प्रमाणं स्थितमिति श्रीदेशिकचरणैः श्रीमति रहर
रे संदर्शितमेव । यथा,—'सारनिष्कर्षाधिकारश्लोके, 'उपनिषदमृताब्धेरुत्तमं सारमार्याः
नेत्सारत्वकथनात् अष्टाक्षरोत्तमश्लोकयोः अथर्वनारायण—गीतोपनिषद्गतत्ववत् द्वयस्या
दुपनिषद्गतत्वमुदितम् । तदधिकारमध्ये च, 'द्वयमपि कठश्रुत्याद्युक्तरीत्या सकृ
ृणकर्तुः सर्वप्रकारेण कृतकृत्यताकरणचणप्रभावशाली' ति द्वयस्य कठश्रुतिगतत्वमभ्यधायि
सारास्वादिन्याम्, 'यः सकृदुच्चारः संसारतारको भवती' ति श्रुतिवाक्यमुपात्तम् । सा
ाकायाम्, 'तत् द्वयं सकृदुच्चारः संसारविमोचनं भवती' ति वाक्यानुपूर्वी गृहीत
कारे चाचार्यैः, 'द्वयम् । इदं कठवल्लयां पृथक्पृथगुपदिश्य संमेल्यानुसंधेयतया विहि

वात् भगवच्छास्त्रे श्रीप्रश्नसंहितादिषु वर्णोद्धारादीन्यपि विधाय प्रतिपादितत्वाच्च श्रुतिमूलत
मन्त्रभूतम्। इदं पूर्वाचार्यवाक्यमिति केषाञ्चिदुक्तिश्च, आप्ता उपदेष्टार इत्यादरणार्थं वा, परम
र्वेश्वर एव भगवच्छास्त्रे समुपदिष्टवानित्यतो हेनोर्वा भवितुमर्हति ' इति अस्य कठवल्लीरूपश्रु
वमश्रावि। अत्र सारास्वादिन्याम्-कठवल्ल्यामष्टाक्षरप्रकरण एव द्वयस्य पूर्वखण्डमुपदिश्य, 'पू
त्यादिकं पठित्वा, 'परमपुरुषार्थेच्छुः खण्डद्वयं संमेल्य सकृदुच्चारयेत्' इति विहितत्वात्
याख्यायि। सारप्रकाशिकायां विभज्योक्तिः मूलनिर्दिष्टा, "अथातः श्रीमद्द्वयोत्पत्तिः।
द्वितीयः। षट् पदानि। अर्था दश। पञ्चविंशति अक्षराणि। पञ्चदशाक्षरं प्रथमम्। दशा
रम्। नवाक्षरं प्रथमपदम्। द्वितीयतृतीयचतुर्था त्र्यक्षराणि। पञ्चाक्षरं पञ्चमम्। द्व
ष्ठः इत्यादिषु विभज्योक्तेः" इति मुखान्तरेण विवृता। तत्रोपात्तानि वाक्यानि
पनिषद्गतानीति स्पष्टम्। तत्र श्रीप्रश्नसंहितादिगतवर्णोद्धारक्रमश्च सारास्वादिन्याम्,
थमाक्षरम्। मकारो द्वितीयाक्षरम्' इत्यादिक्रमेणेति वाक्येन विशदितः। सारप्रकाशि
त्र, "नवार्णं विद्धि हृदयं त्रितयार्णं शिरो मतम्। शिखार्णं त्र्यक्षरं विद्धि कवचं तद्वदेव
स्त्रं पञ्चाक्षरं नेत्रं द्व्यक्षरं परिकीर्तितम्। श्रीमच्छब्दात् परे युक्तं नारायण इतीष्यते।
रणौशब्दः तत्परे शरणं तथा। प्रपद्ये तत्परे युक्तं नमश्शब्दमतः परम्। श्रीपते च
क्तं परे नारायणाय चेति मन्त्रोद्धारक्रमोक्तेश्च" इत्युक्तमस्ति। अत्र मन्त्रानुपूर्वी स्पष्टा।
त्तरखण्डे नमश्शब्दः प्रथममिति अत्र प्रतीयते। श्रुतिमनुसृत्य नमश्शब्दस्यान्ते
म्प्रदायिक इति तथैव भाव्यम्।

एवं श्रीप्रश्नसंहितादिवत् श्रुतेरपि दर्शितत्वात्, सा च श्रुतिः कठश्रुतिः, कठवल्ली
त्यवगमनाच्च द्वयोपनिषदियं यज्ञोपवीतमन्त्रादिवत् श्रुतिरेवेत्यवसीयते। पूर्वापरा
हित्येनाध्ययनादर्शनात्तु खिलश्रुतिः। तर्हि किं या प्रसिद्धा कठोपनिषत तत्रैवेयं
मुत्सृष्टाध्ययनक्रमा आहो अन्यैवेति विमर्शे, उपनिषत्स्वपि तत्रतत्रान्यान्यानुपूर्वीदर्शनात्
क्षमपि केचिदनुमन्येरन्। परंतु अष्टाक्षरप्रकरणस्यापि कठोपनिषन्निविष्टतायाः सारास्वादि
गमात् एकस्यामेव शाखायामनेकेषां खण्डानामुपनिषत्त्वेन परिगणनस्य ऐतरेयतैत्तिर
त्रैत्रोपलम्भात् श्रूयमाणप्रसिद्धकठोपनिषदानुपूर्वीभङ्गं विनैव कठवल्लीरूपोपनिषदि पूर्वं वा
विधानेन वा अव्यवधानेन वा अष्टाक्षरसंदर्भनिविष्टेयमधीता सम्प्रति उत्सृष्टाध्य
तीयपक्षमेव बहुलं रोचयेयुः।

आनुपूर्व्यध्ययनसंप्रदायभ्रंशे लेखकैर्बहुलं पाठपरिवर्तनमवशादपि कृतं भवतीत्येतदस
त्रैत्रानुभूतं श्रुतीरपि तादृशीरवश्यमेवास्कन्दति। अत एव हि दशोपनिषदतिरिक्तासूपा
नुपूर्व्यमत्यन्तं संदेहास्पदं सर्वत्र। अत इहोपलब्धासु मातृकासु पाठभेदो न विस्मयमाव
त्वस्माकं प्राचीनाचार्यप्रतिपादितविशेषप्रतिपत्तिः यत्र यत्र यादृशयादृशपाठादरणे सुलभा
दृशपरिग्रहणं साम्प्रतमिति अत्यन्तविसजातीयो द्वितीयमातृकापाठोऽपि सौकर्याय प

श्रीः

श्रीमते नारायणाय नमः

# द्वयोपनिषत् ।

(१)



## हरिः ओम्—अथातः श्रीमद्द्वयोत्पत्तिः ।

**अथात** इति । एवमेव अर्थविशेषप्रस्तावारम्भस्तत्रतत्रेति सर्वविदितम् । अस्य करणनिविष्टतायाः सारास्वादिन्यामभिहितत्वात् अष्टाक्षराधिगततत्त्वस्य पुंसो वि ादनार्थम्, अनुष्ठेयस्य हितस्यानुष्ठापनार्थञ्च मन्त्रोऽयं प्रस्तूयत इति संगतिप्रदर्शनमनेन ति ज्ञायते । साम्प्रदायिकैश्चाष्टाक्षरविवरणत्वमस्य द्वयस्याभिमतं मन्त्रयोरुभयोरेकप्रकर त्रादिकमावेदयति । यथोक्तं श्रीमति रहस्यत्रयसारे, 'श्रीमदष्टाक्षरमन्त्रः परशेषतैकरस ायपुरुषार्थव्युत्पादनेनोपायाधिकारपूर्तिमुत्पादयति । एवम्भूतस्याधिकारिणः फलापेक्षापूर्व वेशेषानुष्ठानप्रकारं द्वयं विशदं प्रकाशयति । मूलमन्त्रे प्रथमपदप्रथमाक्षरसंक्षिप्तं शरण्य ध्यमतृतीयपदप्रतिपन्ने उपायोपेये च क्रमेण विशदयति द्वयम्' इति । यद्यपि द्वये ोत्तमपुरुषोक्तस्याधिकारिणोऽधिकारविशेषमुपायान्तरनैरपेक्ष्यं तथा नमश्शब्दसंक्षिप्तं नेश्चर्त्यंशञ्च व्यक्तयति गीताश्लोकः । तावता तस्य द्वयेन सहैकत्र पाठोऽनपेक्षितः ाठितयोरप्युपदेशक्रमनियामकमात्रमेतदिति सुवचत्वात् । तद्वदष्टाक्षरस्य द्वयस्य चैकत्र स्थितिर्नापेक्षिता—अथापि अष्टाक्षरप्रकरणेऽत्र उपदेश इति व्याख्यातृभिरुक्ततया अथात इ भिप्रायः सुस्वीकरः । यद्यपि अष्टक्षरमन्त्र एव, 'कैवल्यं भगवन्तञ्च मन्त्रोऽयं साधयि ्त्युक्ततया मोक्षविद्याकरणभूतः—अथापि जपपुरश्चरणादिसापेक्षमन्त्रमूलं फलं प्राप्तुं ाति सकृदुच्चारणेन संसारमोचकोऽयं मन्त्रविशेषः **अथात** इत्यारभ्यत इति ध्येयम् ।

**श्रीमद्द्वयोत्पत्तिः** । द्वयस्य श्रीमत्त्वं विशदज्ञानविरहिणः पुरुषस्य समुदायज्ञान पत्तौ करणतया स्थिरत्यर्हत्वम् । द्वयस्योत्पत्तिः अज्ञातस्य ज्ञापनम् । **वाक्यो द्वितीय** ्यत्ययश्छान्दसः । वाक्यद्वयात्मकमित्यर्थः । इदञ्च स्थूलरीत्या । वाक्यत्रयरू स्वीकारात् । उत्तरखण्डं वाक्यद्वयात्मकं ह्यभिमतं द्वयार्थविवरणे । एवं तर्हि अस्य द्वयि ामेति चेत्—उपायोपेयोभयप्रतिपादकतया द्वयत्वम् । श्रीमान् नारायण उपायः प्र ुक्तः । तादृश एव स उपेय उक्तो द्वितीये । यस्य प्रपत्तिरूपस्य साध्योपायस्या सिद्धोपायो भवेत्, यस्य च मोक्षस्य प्राप्तौ स उपेयो भवेत्—तदुभयमप्यत्र निरूप्यते ्या । अत एवोक्तम्, 'उपायोपेयरूपार्थद्वयप्रतिपादकत्वात् द्वयम् वरणस खण्डद्वये क्रमेण प्रतिपादनात् द्वयमित्यपि केचित्' इति श्रीमद्रहस्यत्रयसारे । द्वितीय निर्दिष्टः फलान्तरकामनयापि द्वयस्य प्रयोज्यत्वे तत्र द्वयत्वनिर्वाहायेति ध्येयम् ।

तृतीयः । षट् पदानि । अर्था(र्धा)दश । पञ्चविंशति अक्षराणि ।
क्षरं पूर्वम् । दशाक्षरं परम् । नवाक्षरं प्रथमपदम् । द्वितीयतृतीयचतुर्थ
। । पञ्चाक्षरं पञ्चमम् । द्व्यक्षरः षष्ठः । एकाक्षरपदः प्रथमः ।
द्वितीयः । चतुरक्षरस्तृतीयः । चतुर्थपञ्चमषष्ठसप्तमा एवं
। । अष्टमश्चतुरक्षरः । द्व्यक्षरो नवमः । दशमो द्व्यक्षरः ।
स्य प्रतिपत्तिः (एतन्मन्त्रस्य(श्च) प्रपत्तिः । )

र्वो नारायणः प्रोक्तोऽनादिसिद्धो मन्त्ररत्नः सदाचार्यमूलः ।
[1]आचार्यो वेदसम्पन्नो विष्णुभक्तो विमत्सरः ।

क्वचित् कोशे, 'आचार्यो वेदसंपन्नः ' इति पादमुपक्रमस्थं पठित्वा सर्वश्लोकावसानस्थं, त्सरो गुरुः ' इति पादमात्रं प्रत्याहारेणैव पठितम् ।

---

, 'श्रीमन्नारायण स्वामिन् दासोऽहं तव तस्य वै । परमीप्सुस्तमेवार्थमनुकूलो प्रातिकूल्यं सुविस्रब्धः संप्रार्थ्य शरणं परम् । व्रजामि युष्मच्चरणं तत्रैवाहं ' इति श्लोकद्वयात्मके प्रपत्तिमन्त्रान्तरेऽपि द्वयमिति व्यवहारसद्भावात् तद्व्यावृत्त रूपमाह **षट्पदानी**त्यादिना । **अर्थाः दशे**ति पाठे, श्रीः, पुरुषकारत्वम्, दिव्यमङ्गलविग्रहः, उपायत्वम्, प्रपत्तिः, उपेयत्वम्, कैङ्कर्यम्, अनिष्टनिवृत्तिः, रोधिस्वरूपञ्च क्रमेणोच्यन्त इति भाव्यम् । पुरुषकारः, उपायोपेयात्मकसिद्धवस्तु त्वम्, साध्योपेयम्, साध्योपायः, तदङ्गानि च पञ्चेति वा दशार्थाः । **अर्धाः अर्धः** शकलमिति, श्री-मत्-नारायण-चरणौ-शरणं-प्र-पद्ये-श्रीमते-नारायणाय-नमः दशकं ग्राह्यम् । अथवा श्रीशब्दस्य मतुप्प्रत्ययस्य च, **एकाक्षरपदः प्रथमः द्वितीय** इति प्रथमखण्डे पृथक्परिगणनात् तथैवोत्तरखण्डेऽपि परिगणने, श्री-मत् णौ-शरणं-प्रपद्ये-श्री-मते-नारायणाय-नमः इति अर्धाः दश भाव्याः ।

**विंशति अक्षराणि** । खण्डद्वयगतानि अक्षराणि पञ्चविंशतिरित्यर्थः । **पञ्चदशा-** । पूर्वखण्डे अक्षराणि पञ्चदश । शिष्टं स्पष्टम् ।

चार्य इत्यादयः श्लोकाः येऽत्र पठिताः, तत्रान्तिमश्लोकद्वयम्, ' मन्त्रराजमिमं वन्दनपूर्वकम् ' इत्यर्धानन्तरं पठित्वा, उपरि, 'नानुकूल्यं न नक्षत्रं ' इत्यादि च मिदं प्रपत्तिमन्त्रान्तरोक्तं द्वयविषयेऽपि ग्रहीतुं साम्प्रतमित्युक्तं द्वयाधिकारे । स च द्विष्णोरिति मन्त्र इति तत्र व्याख्या । अत्रोपनिषदि तद्घटकश्लोकद्वयसद्भावेऽपि

मन्त्रज्ञो मन्त्रभक्तश्च सदा मन्त्रार्थविच्छुचिः ।
गुरुभक्तिसमायुक्तः पुराणज्ञो विशेषतः ।
एवं लक्षणसम्पन्नो गुरुरित्यभिधीयते ।
आचिनोति च शास्त्रार्थान् आचारस्थापनादपि ।
स्वयमाचरते यस्तु तस्मादाचार्य उच्यते ।
गुशब्दस्त्वन्धकारः स्यात् रुशब्दस्तन्निरोधकः ।
अन्धकारनिरोधित्वात् गुरुरित्यभिधीयते ।
गुरुरेव परं ब्रह्म गुरुरेव परा गतिः ।
गुरुरेव परा विद्या गुरुरेव परं धनम् ।
गुरुरेव परः कामो गुरुरेव परायणम् ।
यस्मात् तदुपदेष्टाऽसौ तस्माद् गुरुतरो गुरुः ।

यः सकृदुच्चारितः संसारविमोचनो भवति । [यस्य सकृदु संसारविमोचनं भवति । सप्तजन्मकृतं पापं तत्क्षणादेव नश्यति । सकृदुच्चारयति, तस्य संसार [वि] मोचनं भवत्येव ।]

---

ध्येयम् । सदा मन्त्रार्थविदिति । "द्वयमर्थानुसंधानेन सह सदैवं वक्ता" इति १ गद्यसूक्तेरिदं मूलं बोध्यम् ।

आचारेति । 'आचारे स्थापयत्यपि' इति, यस्तु इत्यत्र, 'यस्मात्' इ उदाहरणवशाद् ज्ञायते ।

यः सकृदुच्चारित इति । अत्र, 'यः सकृदुच्चारः संसारतारको भवति' इत्या तत्रोदाहृताऽस्ति ; अथाप्यर्थतो न भेद इति मन्तव्यम् । द्वयमन्त्रस्य सकृदुच्चारणं म भवतीति मुमुक्षुर्द्वयं सकृदुच्चरेदित्युक्तं भवति । ननु प्रपत्तिमन्त्रान्तरापेक्षयाऽस्यायं लक्ष्यते । किमाचार्यसकाशात् यत् अध्ययनरूपं प्रथमोच्चारणम्, तावदेवेति तदुपरि सकृदित्यभिमतम्, उत प्रपत्त्यनुष्ठानकाले सकृदुच्चारणम् । नाद्यः, अपसिद्धान्तात् । नूच्चारणरूपग्रहणाध्ययनानन्तरं धारणाध्ययनमपि कृत्वा प्रपत्त्यनुष्ठानकाले पुनः सर्वसंप्रतिपन्नत्वात् । नान्त्यः ; सर्वस्यापि मन्त्रस्य मन्त्रार्थानुष्ठानकाले सकृदेवोच्चारण सिद्धतया सकृत्पदवैयर्थ्यात् । न चैतन्मन्त्रार्थः कश्चित् पुनःपुनरावर्तनीयस्वरूपकर्मवि व्रीह्यवघातबर्हिर्लवनादिवत् ; येन क्रियाभ्यासान्मन्त्राभ्यासे प्रसक्ते तद्वारणार्थं सकृत्पदं मन्येतापि । सकृत कर्तव्यस्य प्रपदनस्यैवार्थतया तदर्थं सकृदेव मन्त्रोच्चारण

। न प्राथमिकगुरुमुखोच्चारणमात्रस्य पर्याप्तता । अत एव समुदायज्ञानपूर्वक-
ते अर्थज्ञानानन्तरभाव्युच्चारणे सकृत्त्वोक्तिः । गुरुमुखादध्ययनकाले यत् प्रथम-
दनन्तरम् जपपुरश्चरणादिक्रमश्वाक्षरादिमन्त्रान्तरेष्विष्टं विनैव प्रपत्तिकाले प्रयोगः
त्पर्यात् । तथा च सकृदित्यस्य जपादिनिरपेक्षेत्यर्थः । अध्ययननिरपेक्षत्वमप्य-
तु न प्रसक्तिः, सदाचार्यमूल इति प्रागुक्तेः । एवमन्यदपि सकृच्छब्दस्य
ेत, यथा—प्रपत्तिमन्त्रान्तरस्य प्रपत्त्यनुष्ठानार्थं संकल्प्य प्रयोगे कृते यदि अङ्गपञ्चक-
नक्रमस्मृतिभ्रंशेन वा कारणान्तरेण वा प्रपत्त्यनुष्ठानं प्रतिरुद्धं भवेत् , तदा कालान्तरे
: पुनस्तं मन्त्रमुच्चारयेत् ; उच्चारणादेः सर्वस्यानुष्ठाने साहित्यस्य प्रयोगविधिलम्भि-
तु द्वयमन्त्रः, 'सकृदुच्चार' इति उच्चारणे सकृत्त्वविधेः पुनरुच्चारणं विनैव
प्रपत्त्यनुष्ठापको भवतीति न पुनः प्रयोक्तव्य इति । तथा च संकल्प्य द्वयमुच्चार्य
: पश्चात् वाक्पाटववैकल्ये प्राप्तेऽपि अवहितेन मनसा अङ्गपञ्चकसंपन्नं समर्पणमनुतिष्ठन्
ीति मन्त्रस्यातिशय इति । सर्वसाधारणश्चेदं सकृत्त्वमावृत्त्यनपेक्षत्वरूपम् ।

विमोचन इति । नन्वेवमुच्चारणस्यैव संसारविमोचनत्वे प्रपत्त्यनुष्ठानमपि मा भूत् ।
ति चेन्न—प्रयोगसमवेतार्थस्मारकत्वस्यैव मन्त्रस्वभावत्वात् स्मरणस्य चानुष्ठानार्थत्वात्
गात् । तदुक्तं न्यासविंशतावाचार्यैः 'नेहाभिक्रान्तिनाश' इति श्लोके,

"तस्मात् क्षेत्रे तदर्हे सुविदितसमयैर्देशिकैः सम्यगुप्तं
मन्त्राख्यं मुक्तिबीजं परिणतिवशतः कल्पते सत्फलाय ॥"

प्रपत्तेः मन्त्रोच्चारणात् पूर्वानुष्ठेयत्वं वा उच्चारणाङ्गत्वं वा नैव शक्यशङ्कम्—प्रमाण-
न च वचनबलात् मन्त्रस्यास्याधिकारिविशेषे प्रयोगसमवेतार्थस्मारकत्वं विना
मोक्षहेतुत्वमेवास्तु इति वाच्यम्—यत्र यत्र प्रमाणे ज्ञानातिरिक्तस्य मोक्षसाधन-
साक्षात् तथात्वे न तात्पर्यम् , किंतु ज्ञानद्वारैवेति ज्ञापनायैव, 'नान्यः पन्था अयनाय'
निषेधश्रुतिप्रवृत्तेः । अतः, 'अनेनैव तु मन्त्रेण स्वात्मानं मयि निक्षिपेत् । मयि
कृतकृत्यो भविष्यति' इति वचनात् निक्षेपस्य मध्ये आवश्यकतया संसारविमोचनत्वं
ोक्षहेतुप्रपत्तिहेतुत्वरूपमेकमेवाज्ञाभिज्ञसाधारणमलौकम् , श्रुतेरस्याः सर्वाधिकारि
। तर्हि उक्तेः प्रपत्तिद्वारैव हेतुत्वे उक्तिः कथं पृथक् उपायत्वेन परिगण्यत
न्लोकयावदर्थविशदज्ञानविरहेऽपि तदधीने अविशदभरसमर्पण एव सत्यपि
पनक्षमतया पूर्णप्रपत्तिगर्भमन्त्रोच्चारणं कृतमिति तादृशमन्त्रोच्चारणरूपाङ्गप्राबल्यं
वान् एतदनुष्ठिताविशदप्रपत्तिस्वीकारेणानुगृह्णातीति उक्तिप्रशंसनार्थे तथोक्तेः । किञ्च
काश्यमानेऽर्थे विनियोग इति लिङ्गबलासिद्धम् । मन्त्रश्चायं श्रीमन्नारायणविषये
वक्ति । प्रपत्तिर्नाम प्रार्थनान्वितस्वदुष्करभरसमर्पणरूपेति तदर्थस्याभाव्यात्,
त्प्राप्तिपर्यन्त सर्वफल साधनतायाः परश्शतप्रमाणप्रतिपन्नत्वाच्च प्रपत्तौ सर्वफलार्थि-
नुतिष्ठता मन्त्रः परिग्राह्योऽयमिति सिद्धयत्येव । तदेवं प्राप्ताप्राप्तविवेके क्रियमाणे,
संसारमोचको भवती' ति वाक्यमंशान्तरस्यार्थसिद्धत्वात् सकृत्त्वविधानमात्रे-

[सर्वान् कामानवाप्नोति] सर्वपुरुषार्थसिद्धिर्भवति ।
पुनरावर्तते इति य एवं वेद । इत्युपनिषत् ।

॥ इति द्वयोपनिषत् ॥

## (२)

( द्वयोपनिषदो मातृकान्तरपाठः )

हरिः ओम् — स वा एष महानज आत्मा अन्नादो विन्दते वसु ।
यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ।
तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये ॥

इति होवाच । ऋग्वेदं प्रपद्ये । यजुर्वेदं प्रपद्ये । सामवेदं प्रपद्ये । इ
पुराणानि प्रपद्ये । सत्यं प्रपद्ये । श्रद्धां प्रपद्ये । परमात्मने
भागवताय प्रपद्ये । वासुदेवाय प्रपद्ये । ओं प्रपद्ये । नमः प्रपद्ये
प्रपद्ये । श्रियं प्रपद्ये ।

२. अयं द्वयोपनिषत्पाठः श्रीविद्वद्वरिष्ठ श्रीगोष्ठीपुराभिजन श्रीसौम्यनारायणाचार्यैश्च
श्रीरामदेशिकाचार्यदत्तं तालकोशे उपलब्ध इति वेदान्तदीपिकाख्यायां मासिकपत्रिकायां प्र

---

म्परम् । अतश्च, 'सकृदुच्चरितं येन हरिरित्यक्षरद्वयम् । बद्धः परिकरस्तेन मोक्षा
ति' इति अक्षरविशेषद्वयस्य चास्य च न विशेष इति न शङ्कनीयम् । श्रीप्रश्न
कोपबृंहणबलेन चास्यैव महिमा स्थापितो भवति । तत् सिद्धं अध्ययनानन्तरं विश
। समुदायज्ञानपूर्वं वा जपपुरश्चरणादिरूपावृत्तिनिरपेक्षमेव एतद्द्वयोच्चारणं स्वप्रमे
पाङ्गिद्वारा मोक्षपर्यन्तसर्वफलसाधनं भवतीति कृतं विस्तरेण । विवेचितश्चैतदनुब
पूर्वाचार्यैः, अस्मदाचार्यैः श्रीरङ्गरामानुजमुनिभिः, अस्माभिश्चान्यत्र विस
इह प्रतन्यते । सकृत्त्वमिदं संसारविमोचनरूपफलांश एव, न त्वन्यफले उपयुज्यते
न्तव्यम् । परमफलत्वात्तु तस्य प्राधान्येनोक्तिरिति बुबोधयिषया सर्वमपि फलं
सर्वपुरुषार्थसिद्धिर्भवति, न च पुनरावर्तत इति ॥

२

अथ मातृकान्तरमधिकृत्य किञ्चिदुच्यते । अत्र स वा एषइति वाक्यं सर्वफलप्रदसि
म् । विन्दते इति णिजर्थगर्भमिह । यो ब्राह्मणमिति प्रपत्त्यादिकथनम् । ऋग्वेदमित्यादि

यद्वेदा दिव्यगायत्री जयति । तदेषाऽभ्युक्ता । तदेव भूतं तदु-
ाव्यम् । तत् पूर्णसौन्दर्यं लक्ष्म्याः । तदेवममृतं सदानन्दं सत्यम् ।
यम् । सर्वं तत् सकृदुच्चारणो (सकृदुच्चारः संसारमोचनो ?) भवति ।
ारायणचरणौ शरणं प्रपद्ये । इदं पूर्णमदः पूर्णं पूर्णात् पूर्णमुदच्यते ।
। पूर्णमादाय पूर्णमेवावशिष्यते । सर्वं पूर्णमिति । स होवाच—
' नारायणाय नमः ॥

---

सिद्धिज्ञप्तये । **सत्यं** परं ब्रह्म । **श्रद्धां** लक्ष्मीम् । विश्वासमुख्यत्वं वा **श्रद्धा**मित्युच्यते ।
त्यमिति सर्वशङ्कातङ्कोन्मूलनमित्यादि भाव्यम् । अत्रत्यं **सत्यं तद्द्वयम् सकृदुच्चारः**
ोचनं **भवती**ति वाक्यं सारप्रकाशिकायामुपात्तम् । सारास्वादिन्यां यदुक्तम्, 'पूर्व-
ठित्वा पूर्णमद इत्यदिपाठानन्तरं उत्तरखण्डस्यापि पाठः कृत' इति, तदप्यत्रैव मातृकायां
। **इदं** मनसिकृत्यैवाचार्यैः, मन्त्रोऽयं विभज्याधीतः संमेल्यानुसंधेयत्वेन विहितश्चे-
ते चावसीयते । अतो मातृकेयमादरणीया लक्ष्यते । किं पूर्वदर्शितो भागः अयश्चेति
ोपनिषत्? किं वा अग्निरहस्ये बृहदारण्यके चैकस्यामेव शाखायां शाण्डिल्यविद्यायाः
तपाठ इव कठशाखायामेव स्थले विभिन्ने पृथगनयोः पाठः इत्यादिविमर्शो विमर्शकानां
ानुरुध्य यथातथा भवतु । स्थितं तु प्रकाश्यते । एकस्यामुपनिषदि श्रूयमाणं वाक्य-
न्तरेऽपि तत्रतत्र पठ्यमानं बहुशो दृष्टम् । तथेहापि श्रुतानि वाक्यानि उपनिषदन्त-
सन्ति । तथाहि — अत्र **स वा एष महानज आत्मे**ति वाक्यं बृहदारण्यके
श्रुतप्रायम् । **यो ब्रह्माण**मिति श्वेताश्वतरीये । **सर्वं तदि**त्यादिना संमिलितोच्चारणं
। पूर्वखण्डपाठः **श्रीमन्नारायणे**ति । अस्य खण्डस्योत्तरखण्डमेलनेन पूर्णत्वसंपादनार्थो-
**इदं पूर्ण**मित्यादिः । बृहदारण्यके (७.१) पूर्णमद इत्यादिरयं मन्त्रः पठ्यते । **श्रीमते**
रखण्डः । बृहदारण्यक एव पूर्णमद इत्येतत्पाठानन्तरम्, "ओं खं ब्रह्म । खं
वायुरं खमितिह स्माह कौरव्यायणीपुत्रः । वेदोऽयं ब्राह्मणा विदुः वेदैनेन यद्
" इत्यानुपूर्वी लक्ष्यते । किं सैवेह लेखकप्रमादात् खंब्रह्मेत्यादिना किञ्चिदन्यथाभूता,
ार्थरीतिरियमिति विवेचकविमृश्यम् । नूनमिदं सर्वम्, द्वयस्यापि प्रणवः पूर्वमपेक्षितः
र्तृपुरुषविषये इति ज्ञापनार्थं प्रवृत्तमिति बृहदारण्यकानुसारेण भावनीयम् । एतन्मन्त्रार्थश्च
येषु विशदमनुसंधेयः । अत्र श्रीशब्दार्थनिर्वचने अन्यत्र स्थितोऽस्मदीयोऽयं श्लोको
ानमर्हति ; य एषः—

श्रीस्त्वं श्रिता शरणमीप्सुभिरार्तरावं
भुत्वा श्रिता सपदि शार्ङ्गिभुजान्तरालम् ।

खं ब्रह्म । खं वायुः । खं पुराणम् खमितिहासः । खं पुत्रः । वेदोऽयं ब्रह्मणो विदुः । वेदायेन वेदितव्यमिति । य इत्युपनिषत् । हरिः ओं ॥ श्रीरस्तु । शुभमस्तु ।

---

तं श्रावयस्यथ शृणासि समस्तमेनः
श्रीणासि च प्रगुणदास्यविधादिभिर्नः ॥ इति ।

तत् सिद्धं सर्वोपनिषत्प्रतिपाद्यः परब्रह्मभूतः पुरुषोत्तमः श्रीमन्नारायण एव भक्त्या प्रसाद्यमानः सर्वमपि पुरुषार्थं प्रयच्छतीति सर्वं समञ्जसम् ॥

ईशाद्युपनिषद्भाष्यपरिष्कारविधायिना ।
श्रीवीरराघवार्येण महोपनिषदस्तथा ॥
नारायणोपनिषद् पुंसूक्तव्याकृतेरपि ।
द्व्योपनिषदश्चैवं परिष्कारः क्रमात् कृतः ॥

स जयति यतिराजः सोऽपि वेदान्तसूरिः
तदुभयपदसेवाखादधन्याश्च सन्तः ।
तदनघवचनैकव्यक्ततत्त्वार्थं सर्व-
श्रुतिगणसमधीत्या साधु सर्वे जयन्तु ॥

श्रीमद्वेदवतंसलक्ष्मणमुनिश्रीपादसेवी श्रुतीः
श्रुत्वा श्रीयुतरङ्गलक्ष्मणमुनिश्रेष्ठान्महिष्ठोक्तिभिः ।
वात्स्यः श्रीशठयास्यवीक्षणपदं विख्यातनानाकृतिः
विश्वक्षेमपरो व्यधादिति परिष्कारः परो गृह्यताम् ॥

ईशाद्या याः श्रुतय उदिताः श्रीमहारण्यकान्ताः
याश्च श्वेताश्वतरमुखगाः श्रीद्वयान्ता दशान्याः ।
एताः प्राच्यप्रवरविहितव्याक्रियायुक्त्ययुक्ति-
प्राप्तद्वैधाः समुचितपरिष्कारभव्या जयन्ति ॥

इति श्रीवत्सवंशमुक्ताफलायमान सच्चक्रवर्ति श्रीचक्रवर्त्यार्यतनूद्भवस्य श्रीमद्वेदान्तरामानुजसंयमीन्द्रपदारविन्दमधुव्रतस्य श्रीमद्रङ्गरामानुज-संयमीन्द्रचरणारविन्दसेवासंप्राप्तसकलवेदान्तार्थस्य तर्कार्णवादिबिरदभाजः वीरराघवाचार्यस्य
कृतिषु उपनिषद्भाष्यपरिष्कारः ।
शुभमस्तु ॥

श्रीः

# महोपनिषदादिचतुष्टयार्थसंग्रहकारिकाः

नारायणस्य पारम्यं ब्रह्मेशाद्युद्भवस्ततः ।
अन्तर्यामितयैक्यञ्च **महोपनिषदी**रितम् ॥ १ ॥

ऋग् यजुः साम चाथर्ववेद इत्येदंशभाक् ।
**नारायणोपनिषद**प्याह नारायणं परम् ॥ २ ॥

ब्रह्मरुद्रेन्द्रमुख्यानां ततो जन्म तदात्मताम् ।
श्रीमदष्टाक्षरमनुं प्रणवस्याक्षरादि च ॥ ३ ॥

तत्तदंशक्रमेणोक्त्वा मुक्तिहेतोरितो मनोः ।
सर्वश्रुतिजपाद्याप्यं फलञ्च बहु साऽब्रवीत् ॥ ४ ॥

प्रोक्तः **पुरुषसूक्ते** स पुरुषोऽद्भुतविग्रहः ।
प्रकृतिप्राकृतात्मा च त्रिपाद् यस्यामृतं दिवि ॥ ५ ॥

ब्रह्माणं जनयित्वा तद्यज्ञसंराधितः श्रुतीः ।
लोकान् प्राणभृतः सर्वान् चातुर्वर्ण्यादिभागिनः ॥ ६ ॥

निर्माति निखिलैरीड्यः स्थितश्च तमसः परे ।
स उपास्यः; ततो मुक्तिः; नान्यः पन्था इतीरितम् ॥ ७

**द्वयोपनिषदि** प्रोक्तः श्रीमान् नारायणः परः ।
सकृदुच्चारणे सर्वफलदञ्च परं द्वयम् ॥ ८ ॥

श्रीमद्वेदान्तसौमित्रिमुनिपादाब्जसेविना ।

तर्कार्णवाद्युपाख्येन नानासद्ग्रन्थकारिणा ।
निखिलोपनिषद्भाष्यपरिष्कारविधायिना ॥ १० ॥

श्रीवीरराघवार्येण वात्स्यसच्चक्रवर्तिना ।
इत्थं कृता उपनिषदर्थसंग्रहकारिका: ॥ ११ ॥

सर्ववेदान्तवेद्यः स वेदतद्वेदिरक्षकः ।
प्रीयतां श्रीहयग्रीवः सर्वविद्याधिदैवतम् ॥ १२ ॥

**इति**
**वात्स्यसच्चक्रवर्तिनो**
**वीरराघवाचार्यस्य** कृतिषु
**उपनिषदर्थसंग्रहकारिकाग्रन्थः**
**संपूर्णः** ।
**श्रीमते श्रीनिवासपरब्रह्मणे नमः ।**
**श्रीरस्तु ॥ शुभमस्तु ॥**



